ॐ अर्हं नमः ।

## सर्वतन्त्रस्वतन्त्र–शासनसम्राट्–सूरिचक्रचक्रवर्त्ति–जगद्गुरु–तपोगच्छाधिपति भट्टारक–आचार्यवर्य्य–श्रीमद्विजयनेमिसूरीश्वरेभ्यो नमः ॥

श्रीमत्कारुण्यमूर्त्तिः परमगुरुवरः सर्वतन्त्रस्वतन्त्रः
सम्राट् श्रेयस्कराणां शुभविधिविदधज्जैनसच्छासनानाम् ॥
धीरः शश्वज्जगत्यां जयति सविजयश्रीतपोगच्छनाथ–
दिव्याचार्यादिभट्टारकपदविलसन्नेमिसूरीश्वराख्यः ॥ १ ॥
संसारेऽस्मिन्नसारे प्रथितगुणिगणे सौम्यसौराष्ट्रदेशे
पुण्यात्मोक्तस्तपस्वी सुखदमधुमतीपत्तने जन्म लेभे ॥
अङ्काक्ष्यङ्केन्दुसंख्ये शुभदिनलसिते वैक्रमाब्दे वलक्ष–
पक्षे जूकाभिधेये प्रतिपदि सुतिथौ कञ्जिनीजानियुक्तः ॥ २ ॥
संसारोऽयं ह्यसारस्त्विह खलु सततं सारतत्त्वं दयेति
ध्यायं ध्यायं महात्मा विविधजनमनःक्षोभसंक्षोभणाय ॥
दीक्षां जग्राह बाणश्रुतिनिधिवसुधासंमिते वैक्रमेऽब्दे

सप्तम्यां शुभपक्षे सकलजनमनोमोदके ज्येष्ठमासे ॥ ३ ॥
तस्मात्कमलादगुरुकमवनियमतपोज्ञानविज्ञानवाग्मि-
लोकानुद्धर्तुकामो निजसुमतितति स्मारयन् स्वोपदेशैः ॥
पन्न्यासाख्यं पदं सद्-गगनरसनिधिप्लोमिते विक्रमाब्दे
मार्गे मासि त्रितिथ्यामतिथिविनयकल्पमघवान्-शुक्लपक्षे ॥ ४ ॥
तत: पारब्धरात्रिगनिधिप्रमितसम्यक्समे
पुरोभवे वैक्रम्ये शरतिथिशुभावाविलसिते ॥
शुभे ज्येष्ठे मासि प्रचुरविनयध्यानगुरुभि-
र्मेने मम्यां यातो गुरुरयमल सूरिपदवीम् ॥ ५ ॥
दीक्षाज्ञानागमनदानैर्विविधप्रपविधानैः सदापोद्धाम्ना-
दायाक्षमवनर्यवतनियमतपोऽतुलनीयप्रभावैः ॥
सद्देशादिनिरस्तैर्निवपरक्षुसम्प्रातसिद्धान्ततत्त्वे-
र्नैवं तेभ्यो वितन्वन् जयति गुरुवरो जैनसम्प्रसनेषु ॥ ६ ॥
शान्तो यः प्रकृतो कृतो गुणभृतः कान्तः कृती चाकृतौ
प्रान्तः सन्मतिसागरस्य सततं भ्रान्तो न धर्मार्थने ॥

साधूनामवधिः स भारतरसासद्भूषणं भूतिमद्–
विद्वत्कैरवचन्द्रमा विजयते श्रीनेमिसूरीश्वरः ॥ ७ ॥
श्रीमान् सिद्धगिरौ कदम्बकगिरौ सत्सेरिसातीर्थके
चाबूसद्गिरनारनामगिरिषु प्रम्णा प्रतिष्ठादिकम् ॥
भूयः कापरडादिसन्मधुमतीकुम्भारियाख्येषु सद्–
ग्रामेषु प्रचुरव्ययं विजयते तीर्थार्थमाकारयन् ॥ ८ ॥
एतत्सन्महनीयचित्रचरिताऽऽसंबोधिताः साधवो–
ऽनेके सद्गुणगुम्फिता मुनिवराः शिष्यप्रशिष्यादिकाः ॥
लोकानामुपकारकारणपरास्तच्छासनोद्धारणे
सर्वत्र भ्रमणे जयन्ति कुशलाः सद्भारते भारते ॥ ९ ॥
तस्मिन् श्रीमति पादपद्मयुगले भक्त्यार्पयित्वाऽधुना
नानासज्जनराजिते मुनिगुरौ श्रीनेमिसूरीश्वरे ॥
सद्बोधायतनं सुसूत्रललितं समवायाङ्गाभिधं
सेवार्थं समुपस्थितः सविधयोऽहं वल्लभाह्वः सदा ॥ १० ॥

## उपोद्घातः

धाम्नाम्प्रमोऽर्हते तस्मै सच्चिदानन्दरूपिणे ।
करीकर्ति वरीवर्ति सञ्जरीहर्ति यो ध्रुवं ॥

भये ! भविकमघविध्वंसनचतुराः ! विबुधप्रवराः !

विविधविरोधोपेतविशेषिते वैरविषप्रभावभाविते ऽस्मिन्नतिमहति जगति प्रोत्साहनचरणाचरणचातुर्यधारणानां नानाविधविषयविषविषमीकृतचेतसां सचेतसामपि समेषामियमीहा नैसर्गिकी यत्कथं नु खलु सातिशयं सार्वं मार्गमधिगमिष्याम इति सर्वविवादरहितम् । तत्र सातिशयसुखाप्तेः सद्धर्माचरणसत्वात्तेषु चाहिंसाधर्मस्यैव प्राधान्यात् सर्वथा स्वान्तशान्तिनितान्ताभ्युपयोगाय—"अहिंसा परमो धर्मः" इत्यपि सर्ववादिसम्मतो राद्धान्तः ॥

अत्रातिक्रामति हि काले निरस्तमुपयाते चाहिंसासौभाग्यसुसमृद्धशालिनि तदहिंसाधर्मे निखिलभुवनचराचरचित्तचिच्चिविद्भिर्मेगदुद्भासकैः सर्वशासकैरशेषलोकशोकविहायिभि करुणावरुणालयैः श्रीमद्भगवज्जिनेश्वरचरणैर्विनिगदितया "उप्पन्ने इवा, विगमे इवा, धुवे इवा" ऽनया त्रिपद्या प्रथमं श्रीगणधरमहाराजानां द्वादशाङ्गीप्रबोधः समभवत् । ततो निस्सीमकारुण्यामृतरञ्जितसुचित्ताः प्रोक्तमहाराजा अपि श्रीमज्जिनेश्वरोक्तान् तानेव भव्यभावान् भूयः परिभावयन्तः सूत्ररूपानवगाधपदक्रमेणाचाराङ्गादिद्वादशाङ्गविभागेभ्यः पाठकेभ्यः सन्दधुः । अथ एवाचाराङ्गादिद्वादशसूत्राणि द्वादशाङ्गीसमभिधानत्वेन व्यपदिश्यन्ते ।

अमीष्वेवान्तर्गतं विमलविषयविलासोल्लसितं तृतीयं—"स्थानाङ्गसूत्र" मिदं श्रीमतामध्यापकाध्येतृवाचकानामधिकरकमलं सबहुमानपुरस्सरं समर्प्यते । पुरा खलु—"आगमोदयसमितौ" मुद्रितस्याप्येतस्य पठनपाठनप्रचारप्राचुर्यात् सम्प्रति दौर्लभ्यात् पुनरेतन्मुद्रणस्य नितरामावश्यकतां पर्यालोच्य

सदुपदेशप्रदानादिना मयैतन्मुद्रणव्ययभारग्रहणे–अहमदावादगत–माण्डवीप्रतोलिका(पोल) स्थश्रेष्ठिवर्य्य–श्रीमाणेकलाल चुन्नीलालजी महोदयः सहर्षं प्रोत्साहित. । तत उक्तश्रेष्ठिवर्य्योऽपि सानुनयमेनमुररीकृत्योक्तसूत्रप्रसिद्धिसिद्धिविधौ यथेष्टमार्थिकसाहाय्य संपादयन् नैजां राज्यलक्ष्मीं साफल्यमधिनीतवानिति नाल्पप्रमोदगौरवावसर' समेषामेतन्मतानुसारिणामिति ।

इत्थमत्रोक्तश्रेष्ठिमहोदयस्य विमलकुलककीर्त्तिनिचयपरिचयोल्लेखनमपि प्रसङ्गतौचित्यसरणिमधिसरतीति समासत एवमभिधीयते । श्रीमान् माणेकलालः श्रेष्ठी विशाश्रीमालीज्ञातीय., एतत्पूज्यपितुश्शुभनाम श्रीसाधुचुन्नीलाल नत्थुभाईति स्मरणीयमातुर्नाम च श्रीमती मङ्गुदेवीति ॥

प्रथममेभि सुखदु'खद्वन्द्वजुष्टामवस्थामनुभवद्भिर्भूयो भूरिभूतिविभूषितैर्वदान्यतामतिलतावितता विदधद्भिर्विविधाभिर्विधाभिर्दानमानमेदुरा मेदिनी दैनन्दिनी चेक्रियते यदतिक्रामति चानधिकेऽनेहसीदानीमपि तदादार्य्यमार्य्यराजितं भिन्नभिन्नविभागेषु दिग्विदिक्षु जाजागर्त्तितमामिति । यथा—

पाजरापोलस्थगोशालाकृते १८००० सहस्राणि, अहमदावादस्थ श्री जै श्वे. मू छात्रालयार्थं ११००० स०'कॉलेज ऑफ् आर्टस्' कृते २५००० स०, उत्तरीयहिन्दमहाविद्यालयकृते ११००० स०, श्रीमहावीरविद्यालयकृते १०००० स०, जीवदयामण्डलीकृते ६००० स०, भोजनालयकृते च २५००० सहस्राणि रूप्यकानि श्रेष्ठिमहोदयैः प्रभूतप्रेमपुरस्सरं प्रदत्तानीतीत्थमेतदतिरिक्तेष्वपि धर्मकर्मसु प्रायस्त्वेन १३३००० त्रयस्त्रिंशत्सहस्राधिकैकलक्षप्रमितरजतमुद्राव्ययसंख्याः परिगण्यन्ते ।

अथ चैतत्स्थानाङ्गसुत्रादन्यान्यपि-"समवायाङ्गसूत्र-कर्मप्रकृतिप्रभृतिपुस्तकानि नैजवित्तव्ययेनैवैभिर्मुद्रापयित्वा पुस्तकदौर्लभ्यमपाकुर्वद्भि' सर्वथा सौलभ्यमेव परिस्थापितमिति ।

एवमुक्तश्रेष्ठिवर्यमहोदयस्य प्रत्येकधर्मकर्मसु स्वकनिष्ठभ्रातॄणामपि श्रीकान्तिलालश्रेष्ठिभिर्यदपूर्वसाहाय्यं प्रवर्तितं तदपि प्रशंसातिशयसमुदीरणतां नातिशेते । इत्थमेवाग्रतः प्रतिक्षणविलक्षणक्षेमधामवन्तः सपरिवारपुण्योपार्जननिरताः श्रेष्ठिश्रेष्ठाः सत्कार्यैरन्यथावैबहुविधैरभिभूष्यन्त्व इति ।

एवमिह सूत्रस्वाध्यायस्तवचित्ता मुनिमहात्मानः साध्वीजनाश्च नूनमेतत्सूत्रश्रवणमननाध्ययनाध्यापनविधिं बहुधा विस्तारयिष्यन्ति, विधास्यन्ति च मुद्रणस्यास्य साफल्यमिति बलीयान् मे विश्वासः ।

अत्र च मुद्रणेऽस्मिन् मदीयमतिदोषेण वर्णयोजकदोषेण च मानुष्यसुलभानि स्खलितानि दूषणानि संशोधयित्वा सुधामधीरिवमेतदास्वादं स्वादयन्तु सुधिय इति सम्प्रार्थ्यन्ते गुणैकपक्षपातिनो विवेकशालिनो विपश्चित इत्यलमनल्प जल्पन कल्पनयेति शिवम् ।

ममं नो पाण्डित्यं प्रकटमिह किन्तु प्रपठतां
जनानां सौकर्यं भवतु भुवि भव्यार्थपठने ॥
इति ध्यानाधीनेन विजयपदा वल्लभसुधा
मयाकारीत्येतद् गुरुपदपयोजस्थशिरसा ॥

पन्न्यदो–
वल्लभविजयः

अर्हम् ।

नवाङ्गीवृत्तिकारकश्रीमदभयदेवसूरिवर्यविहितविवरणयुतं

# श्रीमत्समवायाङ्गसूत्रम् ।



श्रीवर्द्धमानमानम्य, समवायाङ्गवृत्तिका । विधीयतेऽन्यशास्त्राणां, प्रायः समुपजीवनात् ॥ १ ॥

दुःसम्प्रदायादसदूहनाद्वा, भणिष्यते यद्वितथं मयेह ।

तद्धीधनैर्मामनुकम्पयद्भिः, शोध्यं मतार्थक्षतिरस्तु मैव ॥ २ ॥

इह स्थानाख्यतृतीयाङ्गानुयोगानन्तरं क्रमप्राप्त एव समवायाभिधानचतुर्थाङ्गानुयोगो भवतीति सोऽधुना समारभ्यते । तत्र च फलादिद्वारचिन्ता स्थानाङ्गानुयोगवत् क्रमादवसेया,—नवरं समुदायार्थोऽयमस्य, समिति–सम्यक् अवेत्याधिक्येन अयनमयः–परिच्छेदो जीवाजीवादिविविधपदार्थसार्थस्य यस्मिन्नसौ समवायः समवयन्ति वा—समवतरन्ति संमिलन्ति नानाविधा आत्मादयो

मात्रा अभिधेयतया यस्मिन्नसौ समवाय इति । स च प्रवचनपुरुषस्याङ्गमिति समवायाङ्गम् । तत्र किल श्रीश्रमणमहावीरवर्द्धमानस्वामिनः सम्बन्धी पञ्चमो गणधर आर्यसुधर्मस्वामी स्वशिष्यं जम्बूनामानमभि समवायाङ्गार्थमभिधित्सुः भगवति धर्म्माचार्ये बहुमानमाविर्भावयन् स्वकीयवचने च समस्तवस्तुविस्तारस्वभावावभासिकेवलालोककलितमहावीरवचननिर्गततयाऽविगानेन प्रमाणमिदमिति शिष्यस्य मतिमारोपयन्निदमादावेव सूत्रमाह—

सुयं मे आउसंतेण भगवया एवमक्खायं–[इह खलु समणेणं भगवया महावीरेणं आइगरेणं तित्थगरेणं सयंसंबुद्धेणं पुरिसुत्तमेणं पुरिससीहेणं पुरिसवरपुंडरीएणं पुरिसवरगंधहत्थिणा लोगुत्तमेणं लोगनाहेणं लोगहिएणं लोगपईवेणं लोगपज्जोअगरेणं अभयदएणं चक्खुदएणं मग्गदएणं सरणदएणं जीवदएणं धम्मदएणं धम्मदेसएणं धम्मनायगेणं धम्मसारहिणा धम्मवरचाउरंतचक्कवट्टिणा अप्पडिहयवरनाणदंसणधरेणं वियट्टछउमेणं जिणेणं जावएणं तिन्नेणं तारएणं बुद्धेणं बोहएणं मुत्तेणं मोयगेणं सव्वन्नुणा सव्वदरिसिणा सिवमयलमरुयमणंतमक्खयमव्वाबाहमपुणरावित्तिसिद्धिगइनामधेयं ठाणं संपाविउकामेणं इमे दुवालसंगे गणिपिडगे पन्नत्ते, तं जहा–आयारे १ सूयगडे २ ठाणे ३ समवाए ४ विवाहपन्नत्ती ५ नायाधम्मकहाओ ६ उवासगदसाओ ७ अंतगडदसाओ ८ अणुत्तरोववाइयदसाओ ९ पण्हावागरणं १० विवागसुए ११ दिट्ठिवाए १२, तत्थ णं जे से चउत्थे अंगे समवाएत्ति आहिते तस्स णं अयमट्ठे पन्नत्ते, तंजहा ] एगे आया एगे अणाया एगे दंडे एगे अदंडे एगा किरिआ

एगा अकिरिआ एगे लोए एगे अलोए एगे धम्मे एगे अधम्मे एगे पुण्णे एगे पावे एगे बंधे एगे मोक्खे एगे आसवे एगे संवरे एगा वेयणा एगा णिज्जरा १८। जंबुद्दीवे दीवे एगं जोयणसयसहस्सं आयामविक्खंभेणं पण्णत्ते, अप्पइट्ठाणे नरए एगं जोयणसयसहस्सं आयामविक्खंभेणं पन्नत्ते, पालए जाणविमाणे एगं जोयणसयसहस्सं आयामविक्खंभेणं पन्नत्ते, सव्वट्ठसिद्धे महाविमाणे एगं जोयणसयसहस्सं आयामविक्खंभेणं पन्नत्ते। अद्दानक्खत्ते एगतारे पन्नत्ते, चित्तानक्खत्ते एगतारे पन्नत्ते, सातिनक्खत्ते एगतारे पन्नत्ते। इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एगं पलिओवमं ठिई पन्नत्ता, इमीसे णं रयणप्पहाए पुढवीए नेरइआणं उक्कोसेणं एगं सागरोवमं ठिई पन्नत्ता, दोच्चाए पुढवीए नेरइयाणं जहन्नेणं एगं सागरोवमं ठिई पन्नत्ता, असुरकुमाराणं देवाणं अत्थेगइयाणं एगं पलिओवमं ठिई पन्नत्ता, असुरकुमाराणं देवाणं उक्कोसेणं एगं साहियं सागरोवमं ठिई पन्नत्ता, असुरकुमारिंदवज्जियाणं भोमिज्जाणं देवाणं अत्थेगइआणं एगं पलिओवमं ठिई पन्नता, असंखिज्जवासाउयसन्निपंचिंदियतिरिक्खजोणियाणं अत्थेगइआणं एगं पलिओवमं ठिई पन्नत्ता, असंखिज्जवासाउयगब्भवक्कंतियसंणिमणुयाणं अत्थेगइयाणं एगं पलिओवमं ठिई पन्नत्ता, वाणमंतराणं देवाणं उक्कोसेणं एगं पलिओवमं ठिई पन्नता, जोइसियाणं देवाणं उक्कोसेणं एगं पलिओवमं वाससयसहस्समब्भहियं ठिई पन्नत्ता, सोहम्मे कप्पे देवाणं जहन्नेणं एगं पलिओवमं ठिई पन्नत्ता, सोहम्मे कप्पे देवाणं अत्थेगइआणं एगं साग-

रोवम ठिई पन्नता ईसाणे कप्पे देवाणं जहन्नेण साइरेग एगं पलिओवम ठिई पन्नता, ईसाणे कप्पे देवाणं अत्थेगइयाण एग सागरोवमं ठिई पन्नत्ता, जे देवा सागरं सुसागर सागरकंत भव मणु माणुसोत्तर लोगहिय विमाण देवत्ताए उववन्ना तेसि णं देवाण उक्कोसे णं एग सागरोवम ठिई पन्नत्ता, ते णं देवा एगस्स अद्धमासस्स आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाण एगस्स वाससहस्सस्स आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जे जीवा ते एगेण भवग्गहणेणं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंत करिस्संति १८ ॥ सूत्रम् ॥१॥

'श्रुतम्' आकर्णित 'मे' मया हे 'आयुष्मन्!' चिरजीवित! जम्बूनामन्! 'तेणं'ति योऽसौ निर्मूलोन्मूलितरागद्वेषादिविपमभावरिपुसैन्यतया भुवनभावावभासनसहसंवेदनपुरस्सराविसंवादिवचनतया च त्रिभुवनभवनप्राङ्गणप्रसर्पत्सुधाधवलयशोराशिस्तेन महावीरेण भगवता—समग्रैश्वर्यादियुक्तेन 'एव' मिति वक्ष्यमाणेन प्रकारेणाख्यातम्—अभिहितमात्मादिवस्तुतत्त्वमिति गम्यते, अथवा 'आउसंतेणं'ति भगवतेत्यस्य विशेषणमायुष्मता चिरजीवितवता भगवतेति, अथवा पाठान्तरेण मयेत्यस्य विशेषणमिदं आवसता मया गुरुकुले आमृशता वा—संस्पृशता वा मया विनयनिमित्तं करतलाभ्यां गुरोः क्रमकमलयुगलमिति, यद्वा 'आउसंतेणं'ति आजुषमाणेन वा प्रीतिप्रवणमनसेति, यदाख्यातं तदेवोच्यते—'एगे आया' इत्यादि। कस्याञ्चिद्वाचनायामपरमपि सम्बन्धसूत्रमुपलभ्यते। यथा "इह खलु समणेणं भगवया" इत्यादि

तामेव च वाचनां वृहत्तरत्वाद्व्याख्यास्यामः, इदं च द्वितीयसूत्रं सङ्ग्रहरूपप्रथमसूत्रस्यैव प्रपञ्चरूपमवसेयम् अस्य चैवं गमनिका—'इह' अस्मिंल्लोके निर्ग्रन्थतीर्थे वा, खलु वाक्यालङ्कारे अवधारणे वा, तथा च इहैव, न शाक्यादिप्रवचनेषु; श्राम्यति—तपस्यतीति श्रमणस्तेन, इदं चान्तिमजिनस्य सहसम्पन्नं नामान्तरमेव। यदाह—'सहसंमुइयाए [1]समणे'त्ति भगवतेति पूर्ववत्, महांश्चासौ वीरश्चेति महावीरस्तेन, इदं च महासात्त्विकतया प्राणप्रहाणप्रवणपरीषहोपसर्गनिपातेऽप्यप्रकम्पत्वेन पीयूषपान-प्रभुभिराविर्भावितम्। आह च—[2]'अयले भवभेरवाणं खंतिखमे परीसहोवसग्गाणं पडिमाणं पारए देवेहिं (से णामं) कए महा-वीरे'ति। कथम्भूतेनेत्याह–आदौ–प्राथम्येन श्रुतधर्ममाचारादिग्रन्थात्मकं करोति–तदर्थप्रणायकत्वेन प्रणयतीत्येवंशील आदिकरस्तेन, तथा तरन्ति येन संसारसागरमिति तीर्थं प्रवचनं तदव्यतिरेकादिह सङ्घस्तीर्थं तस्य करणशीलत्वात्तीर्थकरस्तेन, तीर्थकरत्वं च तस्य नान्योपदेशबुद्धत्वपूर्वकमित्यत आह—स्वयम्–आत्मनैव नान्योपदेशतः सम्यग्बुद्धो हेयोपादेयवस्तुतत्त्वं विदितवानिति स्वयंसम्बुद्ध-स्तेन। स्वयंसम्बुद्धत्वं चास्य न प्राकृतस्येव संभाव्यं पुरुषोत्तमत्वादस्येत्यत आह–पुरुषाणां मध्ये तेन तेनातिशयेन रूपादिनोद्गतत्वा-द्-ऊर्ध्ववर्त्तित्वादुत्तमः पुरुषोत्तमस्तेन। अथ पुरुषोत्तमत्वमेव सिंहाद्युपमानत्रयेणाऽस्य समर्थयन्नाह–सिंह इव सिंहः पुरुषश्चासौ सिंह श्चेति पुरुषसिंहः। लोकेन हि सिंहे शौर्यमतिप्रकृष्टमभ्युपगतमतः शौर्ये स उपमानं कृतः। शौर्यं तु भगवतो बाल्ये प्रत्यनीकदेवेन भाप्यमानस्याप्यभीतत्वात् कुलिशकठिनमुष्टिप्रहारप्रहतिप्रवर्द्धमानामरशरीरकुब्जताकरणाच्च इत्यतस्तेन। तथा वरं च तत्पुण्डरीकं च

[1] सहसन्मत्या श्रमणः। [2] अचलो भयभैरवयोः क्षान्तिक्षमः परिषहोपसर्गाणां प्रतिमानां पारगो देवैः कृत महावीर इति।

वरपुण्डरीकं—प्रधानं सहस्रपत्रं पुण्डरीकं पुरुष एव वरपुण्डरीकं पुरुषवरपुण्डरीकं, धवलता चास्य भगवतः सर्वाशुभमलीमसरहितत्वात् सर्वैश्च शुभैरनुभावैः सुरत्वादिस्थितस्तेन, तथा वरश्चासौ गन्धहस्ती च वरगन्धहस्ती पुरुष एव वरगन्धहस्ती पुरुषवरगन्धहस्ती, यथा गन्धहस्तिनो गन्धेनैव सर्वगजा भज्यन्ते तथा भगवतस्तद्देशविहरणेन ईतिपरचक्रदुर्भिक्षडमरमरकादीनि दुरितानि श्वापोवनमध्ये नश्यन्तीति अतस्तेन पुरुषवरगन्धहस्तिना, न भगवान् पुरुषाणामेवोत्तमः किन्तु सकलजीवलोकस्यापीत्यत आह—लोकस्य—तिर्यग्नरनारकनाकिलक्षणजीवलोकस्योत्तमः—चतुस्त्रिंशद्बुद्धातिशयाद्यसाधारणगुणगणोपेततया सकलसुरासुरखचरनरनिकरनमस्यतया च प्रधानो लोकोत्तमस्तेन, लोकोत्तमत्वमेवास्य पुरस्कुर्वन्नाह—लोकस्य—सञ्ज्ञिभव्यलोकस्य नाथ—प्रभुर्लोकनाथस्तेन, नाथत्वं चास्य 'योगक्षेमकृन्नाथ' इति वचनादप्राप्तस्य सम्यग्दर्शनादेर्योगकरणेन लब्धस्य तस्यैव पालनेन चेति। लोकनाथत्वं च तात्त्विकं तद्धितत्वे सति सम्भवतीत्याह—लोकस्य—एकेन्द्रियादिप्राणिगणस्य हितः—आत्यन्तिकतद्रक्षाप्रकर्षप्ररूपणेनाऽनुकूलवर्ती लोकहितस्तेन, एतच्चाप्तत्वं हितत्वं वा सम्यग्ज्ञानां यथावस्थितसमस्तवस्तुस्तोमप्रदीपनेन नान्यथेत्याह—लोकस्य—विशिष्टतिर्यग्नरामररूपस्यान्तरतिमिरनिकरनिरा-करणेन प्रकृष्टपदार्थप्रकाशकारित्वात्प्रदीप इव प्रदीपो लोकप्रदीपस्तेन। इदं च विशेषणं द्रष्टृलोकमाश्रित्योक्तम्, अथ—दृश्यलोकमाश्रित्याह—लोकस्य—लोक्यते इति लोक इति व्युत्पत्त्या लोकालोकरूपस्य समस्तवस्तुस्तोमस्वभावस्याखण्डमार्तण्डमण्डलमिव निखिलभावस्वभावावभासनसमर्थकेवलालोकपूर्वकप्रवचनप्रभापटलप्रसर्पणेन प्रद्योतं—प्रकाशं करोतीत्येवंशीलो लोकप्रद्योतकरस्तेन। ननु लोकनाथत्वादिविशेषणयोगी हरिहरहिरण्यगर्भादिरपि तदीयभक्तमतेन सम्भवतीति कोऽस्य विशेष इत्याशङ्कायां तद्विशेषाभिधानायाह—न भयं दयते प्राणापहरणरसिके-

पसर्गकारिण्यपि प्राणिनि ददातीत्यभयदयः, अभया वा—सर्वप्राणिभयपरिहारवती दया-घृणा यस्यासावभयदयो । हरिहरादिस्तु नैव· मिति, तेनाभयदयेन, न केवलमसावपकारकारिणामप्यनर्थपरिहारमात्रं करोति अपित्वर्थप्राप्तिं करोतीति दर्शयन्नाह—चक्षुरिव चक्षुः श्रुतज्ञानं शुभाशुभार्थविभागकारित्वात्तद्दयते इति चक्षुर्दयस्तेन । यथा हि लोके चक्षुर्दत्वा वाञ्छितस्थानमार्गं दर्शयन् महोपकारी -भवतीत्येवमिहापीति दर्शयन्नाह—मार्गं-सम्यग्दर्शनज्ञानचारित्रात्मकं परमपदपथं दयत इति मार्गदयस्तेन। यथा हि लोके चक्षुरुद्घा- टनं मार्गदर्शनं च कृत्वा चौरादिविलुप्तान् निरुपद्रवं स्थानं प्रापयन् परमोपकारी भवति एवमिहाऽपीति दर्शयन्नाह—शरणं-त्राणमज्ञानो- पद्रवोपहतानां तद्रक्षास्थानं तच्च परमार्थतो निर्वाणं तद्दयत इति शरणदयस्तेन । यथा हि लोके चक्षुर्मार्गशरणदानात् दुःस्थानां जीवि- तव्यं ददाति एवमिहापीति दर्शयन्नाह—जीवनं जीवो—भावप्राणधारणममरणधर्मत्वमित्यर्थस्तं दयत इति जीवदयो जीवेषु वा दया यस्य स जीवदयोऽतस्तेन । इदं चानन्तरोक्तं विशेषणकदम्बकं भगवतो धर्ममयमूर्त्तित्वात्सम्पन्नमिति धर्मात्मकतामस्यान्यविशेषणपञ्चकेनाह धर्मं-श्रुतचारित्रात्मकं दुर्गतिप्रपतज्जन्तुधारणस्वभावं दयते ददातीति धर्मदयस्तेन ।तद्दानं चास्य तद्देशनादेवेत्यत आह—धर्मम्—उक्तल- क्षणं देशयति-कथयतीति धर्मदेशकस्तेन । धर्मदेशकत्वं चास्य धर्मस्वामित्वे सति न पुनर्यथा नटस्येति दर्शयन्नाह—धर्मस्य—क्षायिक- ज्ञानदर्शनचारित्रात्मकस्य नायकः—स्वामी यथावत्पालनाद्धर्मनायकस्तेन, तथा धर्मस्य सारथिर्धर्मसारथिः, यथा रथस्य सारथी रथं रथिकमश्वांश्च रक्षति एवं भगवांश्चारित्रधर्माङ्गानां संयमात्मप्रवचनाख्यानां रक्षणोपदेशाद्धर्मसारथिर्भवतीति तेन धर्मसारथिना, तथा त्रयः समुद्राश्चतुर्थो हिमवान् एते चत्वारः अन्ताः—पर्यन्तास्तेषु स्वामितया भवतीति चातुरन्तः स चासौ चक्रवर्त्ती च चातुरन्तचक्र-

पर्यो वरश्चासौ पृथिव्याः चातुरन्तचक्रवर्ती चेति वरचातुरन्तचक्रवर्ती—राजातिशयः धर्मविषये वरचातुरन्तचक्रवर्ती धर्मवरचातुरन्तच-क्रवर्ती, यथा हि पृथिव्यां शेषराजातिशायी वरचातुरन्तचक्रवर्ती भवति तथा भगवान् धर्मविषये शेषप्रणेतृणां मध्ये सातिशयत्वात् तथोच्यत इति तेन धर्मवरचातुरन्तचक्रवर्तिना। एतच्च धर्मदायकत्वादिविशेषणपञ्चकं प्रकृष्टज्ञानादियोगे सति भवतीत्यत आह—अप्रतिहते—कुट्यकटपर्वतादिभिरस्खलिते अविसंवादके वा अत एव क्षायिकत्वाद्वा वरे—प्रधाने ज्ञानदर्शने केवललक्षणे धारयतीति अप्रतिहतवरज्ञानदर्शनधरस्तेन, एवंविधसंवेदनसंपदुपेतोऽपि छद्मवान् मिथ्योपदेशित्वान्नोपकारीति निश्छद्मताप्रतिपादनायास्याह, अथवा कथमस्याप्रतिहतसंवेदनस्य सम्पन्नं ?; अत्रोच्यते, आवरणाभावात्, एतदेवाह—व्यावृत्त—निवृत्तमपगतं छद्म—शठत्वमावरणं वा यस्य स तथा तेन व्यावृत्तछद्मना, मायावरणयोरभावोऽस्य रागादिजयाज्जात इत्यत आह—जयति—निराकरोति रागद्वेषादिरूपानरातीनिति जिनस्तेन। रागादिजयश्चास्य रागादिस्वरूपतज्जयोपायज्ञानपूर्वक एव भवतीत्येतदस्याह—जानाति छाद्मस्थिकज्ञानचतुष्टयेनेति ज्ञापकस्तेन, अनन्तरमस्य स्वार्थसम्पत्त्युपाय उक्तः, अधुना स्वार्थसम्पत्तिपूर्वकं परार्थसम्पादकत्वं विशेषणषट्केनाऽऽह—तीर्ण इव तीर्णः, संसारसागरमिति गम्यते, तेन, तथा तारयति परानप्युपदेशवर्तिन इति तारकस्तेन, तथा बुद्धेन जीवादितत्त्वं, तथा बोधकेन जीवादितत्त्वमेवापरेषां। तथा मुक्तेन बाह्याभ्यन्तरग्रन्थिबन्धनात्, मोचकेन तत एव परेषां, तथा मुक्तस्येऽपि सर्वज्ञेन सर्वदर्शिना। न तु मुक्तावस्थायां दर्शनान्तराभिमतपुरुषेष्वेव भावितजडत्वेन, तथा शिवं सर्वाबाधारहितत्वात्, अचलं स्वाभाविकप्रायोगिकचलन-हेत्वभावात्, अरुजम्—अविद्यमानरोगं, शरीरमनसोरभावात्, अनन्तमनन्तार्थविषयज्ञानस्वरूपत्वात्, अक्षयम्—अनाद्यं साद्यपर्यवसि-

तस्थितिकत्वात्, अक्षतं वा परिपूर्णत्वात् पूर्णिमाचन्द्रमण्डलवत्, अव्याबाधमपीडाकारित्वात्, 'अपुनरावर्तकम्' अविद्यमानपुनर्भवावतारं, तद्बीजभूतकर्माभावात् सिद्धिगतिरिति नामधेयं यस्य तत्सिद्धिगतिनामधेयं, तिष्ठति यस्मिन् कर्मकृद्विकाररहितत्वेन सदाऽवस्थितो भवति तत्स्थानं—क्षीणकर्मणो जीवस्य स्वरूपं लोकाग्रं वा, जीवस्वरूपविशेषणानि तु लोकाग्रस्याधेयधर्माणामाधारेऽध्यारोपादवसेयानि, तदेवंभूत स्थानं सम्प्राप्तुकामेन—यातुमनसा न तु तत्प्राप्तेन, तत्प्राप्तस्याकरणत्वेन प्रज्ञापनाऽभावात् प्राप्तुकामेनेति यदुच्यते तदुपचाराद्, अन्यथा हि निरभिलाषा एव भगवन्तः केवलिनो भवन्ति, 'मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तम' इति वचनादिति तदेवमगणितगुणगणसम्पदुपेतेन भगवता 'इमं' ति इदं वक्ष्यमाणतया प्रत्यक्षमासन्नं च द्वादशाङ्गानि यस्मिंस्तद् द्वादशाङ्गं गणिनः-आचार्यस्य पिटकमिव पिटकं गणिपिटकं। यथा हि वालञ्जुकवाणिजकस्य पिटकं सर्वस्वाधारभूतं भवति एवमाचार्यस्य द्वादशाङ्गं ज्ञानादिगुणरत्नसर्वस्वाधारकल्पं भवतीति भावः। प्रज्ञप्तं तीर्थङ्करनामकर्मोदयवर्तितया प्रायः कृतार्थेनाऽपि परोपकाराय प्रकाशितं, 'तद्यथे'त्युदाहरणोपदर्शने, आचार इत्यादि द्वादश पदानि वक्ष्यमाणनिर्वचनानीति कण्ठयानि। 'तत्थ णं'ति तत्र—द्वादशाङ्गे णमित्यलङ्कारे यत्तच्चतुर्थमङ्गं समवाय इत्याख्यातं तस्यायमर्थः—आत्मादिः अभिधेयो भवतीति गम्यते, 'तद्यथे'ति वाचनान्तरद्वितीयसम्बन्धसूत्रव्याख्येति इह च विदुषा पदार्थसार्थमभिदधता सक्रम एवासावभिधातव्य इति न्यायः। तत्राचार्य एकत्वादिसङ्ख्याक्रमसम्बन्धानर्थान् वक्तुकाम आदावेकत्वविशिष्टानात्मनश्च सर्वपदार्थभोजकत्वेन प्रधानत्वादात्मादीन् सर्वस्य वस्तुनः सप्रतिपक्षत्वेन सप्रतिपक्षान् 'एगे आया' इत्यादीभिरष्टादशभिः सूत्रैराह, स्थानाङ्गोक्तार्थानि चैतानि प्रायस्तथापि किञ्चिदुच्यते—एक आत्मा, कथञ्चिदिति गम्यते,

इद च सर्वसूत्रेष्वनुगमनीयं, तत्र प्रदेशार्थतया असङ्ख्यातप्रदेशोऽपि जीवो द्रव्यार्थतया एकः, अथवा प्रतिक्षण पूर्वस्वभावक्षयापरस्वरूपोत्पादयोगेनानन्तभेदोऽपि कालत्रयानुगामिचैतन्यमात्रापेक्षया एक एव आत्मा, अथवा प्रतिसन्तान चैतन्यभेदनानन्तत्वेऽप्यात्मनां सङ्ग्रहनयाभिमतसामान्यरूपापेक्षयैकत्वमात्मन इति, तथा न आत्मा अनात्मा-घटादिपदार्थ', सोऽपि प्रदेशार्थतया सङ्ख्येयासङ्ख्येयानन्तप्रदेशोऽपि तथाविधैकपरिणामरूपद्रव्यार्थापेक्षया एक एव, एवं सन्तानापेक्षयाऽपि, तुल्यरूपापेक्षया तु अनुपयोगलक्षणैकस्वभावयुक्तत्वात्कथञ्चिद्भिन्नस्वरूपाणामपि धर्मास्तिकायादीनामनात्मनामेकत्वमवसेयमिति। तथा एको दण्डो दुष्प्रयुक्तमनोवाक्कायलक्षणो हिंसामात्र वा, एकत्व चास्य सामान्यनयादेशात्, एवं सर्वत्रैकत्वमवसेय। तथैकोऽदण्ड —प्रशस्तयोगत्रयमहिंसामात्र वा। तथैका क्रिया—कायिक्यादिका आस्तिक्यमात्र वा, तथैका अक्रिया योगनिरोधलक्षणा नास्तिकत्वं वा, तथैको लोकः, त्रिविधोऽप्यसङ्ख्येयप्रदेशोऽपि वा द्रव्यार्थतया। तथा एकोऽलोकः, अनन्तप्रदेशोऽपि द्रव्यार्थतया, अथचैते लोकालोकयोर्बहुत्वम्यवच्छेदनपरे सूत्रे, अभ्युपगम्यन्ते च कैश्चिदसङ्ख्यो लोकाः, अतस्तादिलक्षणा अलोका अपि तावन्त एवेति, एवं सर्वत्र गमनिका कार्या। नवरं धर्मो—धर्मास्तिकायः, अधर्मः-अधर्मास्तिकायः, पुण्यं—शुभं कर्म, पापम्—अशुभ कर्म, बन्धो—जीवस्य कर्मपुद्गलसंश्लेषः, स चैकः सामान्यतः, सर्वकर्मबन्धव्यवच्छेदावसरे वा पुनर्बन्धाभावात्, अनेनोद्देशेन मोक्षास्रवसंवरवेदनानिर्जराणामप्येकत्वमवसेयमिति। इह चानात्मग्रहणेन सर्वेषामनुपयोगवतामेकत्वे प्राप्य पुनर्लोकादितया यदेकत्वप्ररूपण तत्सामान्यविशेषापेक्षमवगन्तव्यमिति॥ एवं चात्मादीनां सकलव्यापकपदानामर्थानां प्रत्येकमेकत्वमभिधाय अधुनात्मपरिणामरूपाणामर्थानां तदेवाह-'जम्बु, इत्यादि सूत्रस-

सकमाश्रयविशेषाणां तथा 'इमीसे रयणे , त्यादिसूत्राष्टादशकमाश्रयिणां स्थित्यादिधर्माणां प्रतिपादनपरं सुबोधं, नवरं 'जम्बुदीवे दीवे' इह सूत्रे 'आयामविक्खंभेणं'ति क्वचित्पाठो दृश्यते । क्वचित्तु 'चक्कवालविक्खंभेणं'ति तत्र प्रथमः सम्भवति, अन्यत्रापि तथा श्रवणात्, सुगमश्च, द्वितीयस्त्वेवं व्याख्येयः—चक्रवालविष्कम्भेन–वृत्तव्यासेन, इदं च प्रमाणयोजनमवसेयम्, यदाह–"[1]आयङ्गुलेण वत्थुं, उस्सेहपमाणओ मिणसु देहं । नगपुढविविमाणाइं मिणसु पमाणंगुलेणं तु ॥ १ ॥" तथा पालकं–यानविमानं सौधर्मेन्द्रसम्बन्ध्याभियोगिकपालकाभिधानदेवकृतं वैक्रियं, यानं–गमनं तदर्थं विमानं ( यानविमानं ) यायतेऽनेनेति यानं तदेव वा विमानं यानविमानं पारियानिकमिति यदुच्यते, 'अत्थी' त्यादि, अस्ति-विद्यते एकेषां-केषाञ्चिन्नैरयिकाणामेकं पल्योपमं स्थितिरितिकृत्वा 'प्रज्ञप्ता' प्रवेदिता मया अन्यैश्च जिनैः, सा चतुर्थे प्रस्तटे मध्यमाऽवसेयेति, एवमेकं सागरोपमं त्रयोदशे प्रस्तटे उत्कृष्टा स्थितिः इति ॥ 'असुरिन्दवज्जियाणं'ति चमरबलिवर्जितानां 'भोमेज्जाणं'ति भवनवासिनां भूमौ पृथिव्यां रत्नप्रभाभिधानायां भवत्वात्तेषामिति, तेषां चैकं पल्योपमं मध्यमा स्थितिर्यत उत्कृष्टा देशोने द्वे पल्योपमे सा, आह च–[2]"दाहिण दिवड्ढ पलियं दो देसूणुत्तरिल्लाणं"ति । 'असंखेज्जे' त्यादि, असङ्ख्येयानि वर्षाण्यायुर्येषां ते तथा ते च ते सञ्ज्ञिनश्च-समनस्कास्ते च ते पञ्चेन्द्रियतिर्यग्योनिकाश्चेत्यसङ्ख्येयवर्षायुःसञ्ज्ञिपञ्चेन्द्रियतिर्यग्योनिकास्तेषां केषाञ्चिद् ये हेमवतैरण्यवतवर्षयोरुत्पन्नास्तेषामेकं पल्योपमं स्थितिः, एवं मनुष्यसूत्रमपि, नवरं

१ आत्मांगुलेन वस्तु उत्सेधांगुलप्रमाणतो मिनु देहम् । नगपृथ्वीविमानानि मिनु प्रमाणांगुलेनैव ॥ १ ॥

२ दाक्षिणात्यानां सार्धं पल्योपम द्वे देशोने उत्तरल्लानाम् ॥

गर्भे-गर्भाशये व्युत्क्रान्तिः उत्पत्तिर्येषां ते गर्भव्युत्क्रान्तिकाः न सम्मूर्च्छनजा इत्यर्थः । 'वाणमन्तराणं देवाण'ति । देवानामेव न तु देवीनां, तासामर्द्धपल्योपमस्य प्रतिपादितत्वात्, 'जोइसियाणं देवाण'ति चन्द्रविमानदेवानां न सूर्यादिदेवानां, नापि चन्द्रादिदेवीनां। '[1]पलियं च सयसहस्सं चन्दाणवि आउय वास' इतिवचनात् । 'सोहम्मे कप्पे देवाणं'ति इह देवशब्देन देवा देव्यश्च गृहीताः, सौधर्मे हि पल्योपमाद्धीनतरा स्थितिर्जघन्यतोऽपि नास्ति, इयं च प्रथमप्रस्तटेऽवसेया, 'सोहम्मे कप्पे अत्थेगइयाणं देवाणं एगं सागरोवम' मिति, अत्र देवानामेव ग्रहणं न तु देवीनां, उत्कृष्टतोऽपि तत्र तासां पञ्चाशत्पल्योपमस्थितिकत्वात्, तथा एकं सागरोपममिति मध्यमस्थित्यपेक्षया, उत्कर्षतस्तत्र सागरोपमद्वयसद्भावात्, प्रस्तटापेक्षया त्वेषा सप्तमे प्रस्तटे मध्यमावसेया । 'ईसाणे कप्पे देवाण' मित्यत्र देवग्रहणेन देवा देव्यश्च गृह्यन्ते, यतस्तत्र सातिरेकपल्योपमादन्या जघन्यतः स्थितिरेव नास्ति, 'ईसाणे कप्पे देवाणं अत्थेगइयाण' मित्यत्र देवानामेव ग्रहणं न देवीनां, तत्र तासामुत्कर्षतोऽपि पञ्चपञ्चाशत्पल्योपमस्थितिकत्वादिति, तथा ये देवाः सागरं-सागराभिधानमेवं सुसागर सागरकान्तं भवं मनु मानुषोत्तर लोकहितमिह चकारो द्रष्टव्यः, समुच्चयस्य द्योतनीयत्वात्, विमान-देवनिवासविशेषमासाद्येति शेषः, देवत्वेन न तु देवीत्वेन तासां सागरोपमस्थितेरसम्भवात् उत्पन्ना-जातास्तेषां देवीनामेकं सागरोपमं स्थितिः, एतानि च विमानानि सप्तमे प्रस्तटेऽवसेयानि । स्थित्यनुसारेण च देवानामुच्छ्वासादयो भवन्तीति तान् दर्शयन्नाह-'ते णं' मित्यादि, येषां देवानामेकं सागरोपमं स्थितिस्ते देवा णमित्यलङ्कारे अर्द्धमासस्यान्ते इति शेषः, आनन्ति प्राणन्ति,

१ पल्योपमं च [illegible] [illegible]मायुर्जानीहि ।

एतदेव क्रमेण व्याख्यानयन्नाह–उच्छ्वसन्ति निःश्वसन्ति, वाशब्दाः विकल्पार्थाः, तथा तेषामेव वर्षसहस्रस्यान्ते इति शेषः, आहारार्थः–आहारप्रयोजनमाहारपुद्गलानां ग्रहणमाभोगतो भवति, अनाभोगतस्तु प्रतिसमयमेव विग्रहादन्यत्र भवतीति, गाथेह—[1]जस्स जइ सागरोवमाइं ठिई तस्स तत्तिएहिं पक्खेहिं । ऊसासो देवाणं वाससहस्सेहिं आहारो ॥ १ ॥ त्ति, सन्ति–विद्यन्ते 'एगइया' एके केचन 'भवसिद्धिय'त्ति भवा–भाविनी सिद्धिः–मुक्तिर्येषां ते भवसिद्धिकाः–भव्याः 'भवग्गहणेणं'ति भवस्य–मनुष्यजन्मनो ग्रहणम्–उपादानं भवग्रहणं तेन सेत्स्यन्ति अष्टविधमहर्द्धिप्राप्त्या भोत्स्यन्ते केवलज्ञानेन तत्त्वं 'मोक्षन्ति' कर्मराशेः परिनिर्वास्यन्ति-कर्मकृतविकारविरहाच्छीतीभविष्यन्ति, किमुक्तं भवति ?—सर्वदुःखानामन्तं करिष्यन्तीति, सामान्यनयाश्रयणादेकतया वस्तून्यभिधायाधुना विशेषनयाश्रयणाद्द्वित्वेनाह—

**दो दंडा पन्नत्ता, तं०–अट्ठादंडे चेव अणट्ठादंडे चेव, दुवे रासी पण्णत्ता, तं जहा–जीवरासी चेव अजीवरासी चेव, दुविहे बन्धणे पन्नत्ते, तंजहा–रागबन्धणे चेव दोसबन्धणे चेव, पुव्वाफग्गुणीनक्खत्ते दुतारे पं०, उत्तराफग्गुणी नक्खत्ते दुतारे पं०, पुव्वाभद्दवया नक्खत्ते दुतारे पं०, उत्तराभद्दवया नक्खत्ते दुतारे पं०, इमीसे णं रयणप्पहाए पुढवीए अत्थेगइयाणं नेरइयाणं दो पलिओवमाइं ठिई पं०, दुच्चाए पुढवीए अत्थेगइयाणं नेरइयाणं दो पलिओवमाइं ठिई पं०, दुच्चाए पुढवीए अत्थेगईयाणं नेरइयाणं दो सागरोवमाइं ठिइ पं० असुरकुमाराणं देवाणं अत्थेगइयाणं दो पलिओवमाइं ठिई पं० असुरकुमा-**

१ यस्य यावन्तिः सागरोपमाणि स्थितिस्तस्य तावद्भिः उच्छ्वासो देवानां वर्षसहस्रैराहारः

रिंदवज्जियाणं भोमिज्जाणं देवाणं उक्कोसेणं देसूणाइं दो पलिओवमाइं ठिई प० असंखिज्जवासाउयसन्निपंचिंदिय तिरिक्खजोणिआणं अत्थेगइयाणं दो पलिओवमाइं ठिई पं० असंखिज्जवासाउयसन्नि० माणुस्साणं अत्थेगइयाणं देवाणं (च) दो पलिओवमाइं ठिई पं० सोहम्मे कप्पे अत्थेगइयाणं देवाणं दो पलिओवमाइं ठिई प० ईसाणे कप्पे अत्थेगइयाणं देवाणं दो पलिओवमाइं ठिई प० सोहम्मे कप्पे अत्थेगइयाणं देवाणं उक्कोसेणं दो सागरोवमाइं ठिई प० ईसाणे कप्पे देवाणं उक्कोसेणं साहियाइं दो सागरोवमाइं ठिई प० सणंकुमारे कप्पे देवाणं जहण्णेणं दो सागरोवमाइं ठिई प० माहिंदे कप्पे देवाणं जहण्णेणं साहियाइं दो सागरोवमाइं ठिई प० जे देवा सुभं सुभकंतं सुभवण्णं सुभगंधं सुभलेसं सुभफासं सोहम्मवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं दो सागरोवमाइं ठिई पं० ते णं देवा दोण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं दोहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ । अत्थेगइया भवसिद्धिया जीवा जे दोहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रम् ॥ २

'दो दंडे' इत्यादि सुगममाद्विस्थानकसमाप्तेः, नवरमिह दण्डराशिसम्बन्धनार्थं सूत्राणां त्रयं नैरयिकार्थं चतुष्टयं स्थित्यर्थं त्रयोदशकमुच्छ्वासार्थं त्रयमिति, तत्रार्थेन—स्वपरोपकारलक्षणेन प्रयोजनेन दण्डो—हिंसा अर्थदण्ड एतद्विपरीतोऽनर्थदण्ड इति, तथा रत्नप्रभायां त्रिपल्योपमा स्थितिश्चतुर्थप्रस्तटे मध्यमा, द्वितीयायां द्वे सागरोपमे स्थितिः षष्ठप्रस्तटे मध्यमा ज्ञेया, तथा असुरेन्द्रवर्जितभवनवासिनां द्वे

देशोने पल्योपमे स्थितिरौदीच्यनागकुमारादीनाश्रित्यावसेया, यत आह—'दो देसूणुत्तरिल्लाणं'ति, तथा असङ्ख्येयवर्षायुषां पञ्चेन्द्रियतिरश्चां मनुष्याणां च हरिवर्षरम्यकवर्षजन्मनां द्विपल्योपमा स्थितिरिति ॥ २ ॥ अथ त्रिस्थानकं—

तओ दंडा पं० तं०—मणदण्डे वयदंडे कायदंडे, तओ गुत्तीओ पं०, तंजहा-मणगुत्ती वयगुत्ती कायगुत्ती, तओ सल्ला पं० तं०-मायासल्ले णं नियाणसल्ले णं मिच्छादंसणसल्ले णं, तओ गारवा पं० तं०-इड्डीगारवे णं रसगारवे णं सायागारवे णं, तओ विराहणा पं० तं०-नाणविराहणा दंसणविराहणा चारित्तविराहणा, मिगसिरनक्खत्ते तितारे पं० पुस्सनक्खत्ते तितारे पं० जेट्ठानक्खत्ते तितारे पं० अभीइनक्खत्ते तितारे पं०, सवणनक्खत्ते तितारे पं० अस्सिणिनक्खत्ते तितारे पं० भरणीनक्खत्ते तितारे पं०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं तिन्नि पलिओवमाइं ठिई पं०, दोचाए णं पुढवीए नेरइयाणं उक्कोसेणं तिण्णि सागरोवमाइं ठिई पं०, तच्चाए णं पुढवीए नेरइयाणं जहण्णेणं तिण्णि सागरोवमाइं ठिई पं०, असुरकुमाराणं देवाणं अत्थेगइयाणं तिण्णि पलिओवमाइं ठिई पं०, असंखिज्जवासाउयसन्निपंचिंदियतिरिक्खजोणियाणं उक्कोसेणं तिण्णि पलिओवमाइं ठिई पं०, असंखिज्जवासाउयसन्निगब्भवक्कंतियमणुस्साणं उक्कोसेणं तिण्णि पलिओवमाइं ठिई पं०, सोहम्मीसाणेसु अत्थेगइयाणं तिण्णि पलिओवमाइं ठिई पं०, सणंकुमारमाहिंदेसु कप्पेसु अत्थेगइयाणं देवाणं तिण्णि सागरोवमाइं ठिई, पं०, जे देवा आभंकरं पभंकरं आभंकरपभंकरं चंदं चंदावत्तं चंदप्पभं चंदकंतं चंदवण्णं चंदले-

सं धवज्झय धयसिंग धयसिद्धं चंदकूडं चउत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं तिण्णि सागरोवमाइं ठिई प० ते णं देवा तिण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं उक्कोसेणं तिहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे तिहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति। सूत्रम् ३

'तओ' इत्यादि सर्वं सुगमं, नवरमिह दण्डगुप्तिशल्यगौरवविराधनार्थं सूत्राणां पञ्चकं, नक्षत्रार्थं सप्तकं, स्थित्यर्थं नवकम्, उच्छ्वासाद्यर्थं त्रयमिति, तथा दण्ड्यते—चारित्रैश्वर्यापहारतोऽसारीक्रियते एभिरात्मेति दण्डाः दुष्प्रयुक्तमनःप्रभृतयः मन एव दण्डो मनोदण्डो मनसा वा दुष्प्रयुक्तेनात्मनो दण्डो—दण्डनं मनोदण्ड' एवमितरावपि, तथा गोपनानि गुप्तयः मनःप्रभृतीनामशुभप्रवृत्तिनिरोधनानि शुभप्रवृत्तिकरणानि चेति। तथा तोमरादिशल्यानीव शल्यानि दुःखदायकत्वात् मायादीनि, तत्र माया—निकृतिः सैव शल्यं मायाशल्यं 'म'मित्यलङ्कारे एवमितरे अपि नवरं निदानं-देवादिऋद्धीनां दर्शनश्रवणाभ्यामितो ब्रह्मचर्यादेरनुष्ठानान्ममैता भूयासुरित्यध्यवसायो मिथ्यादर्शनं—अतत्त्वार्थश्रद्धानमिति। तथा गौरवाणि—अभिमानलोभाभ्यामात्मनोऽशुभभावगुरुत्वानि तानि च संसारचक्रवालपरिभ्रमणहेतुकर्मनिदानानि, तत्र ऋद्ध्या—नरेन्द्रादिपूज्याचार्यत्वादिलक्षणया गौरवम्, ऋद्धिप्राप्त्यभिमानसदप्राप्तिप्रार्थनद्वारेणात्मनोऽशुभभावगौरवमित्यर्थः, एवं रसेन गौरवं रसगौरवं सातया गौरवं सातगौरवं चेति। तथा विराधनाः—खण्डनाः, तत्र ज्ञानस्य विराधना ज्ञानविराधना—ज्ञानप्रत्यनीकतानिह्नवादिरूपा एवमितरे अपि, नवरं, दर्शनं-सम्यग्दर्शनं क्षायि

कादि चारित्रं–सामायिकादीति । तथा असङ्ख्यातवर्षायुषां पञ्चेन्द्रियतिर्यग्मनुष्याणां देवकुरूत्तरकुरुजन्मनां त्रीणि पल्योपमानीति, तथा आभङ्करं प्रभङ्करं आभङ्करप्रभङ्करं चन्द्रं चन्द्रावर्त्तं चन्द्रप्रभं चन्द्रकान्तं चन्द्रवर्ण्णं चन्द्रलेश्यं चन्द्रध्वजं चन्द्रशृङ्गं चन्द्रसृष्टं चन्द्रकूटं चन्द्रोत्तरावतंसकं विमानमित्यादि ॥३॥

चत्तारि कसाया प० तं०—कोहकसाए माणकसाए मायाकसाए लोभकसाए, चत्तारि झाणा प० तं०–अट्टज्झाणे रुद्दज्झाणे धम्मज्झाणे सुक्कज्झाणे, चत्तारि विगहाओ प० तं०—इत्थिकहा भत्तकहा रायकहा देशकहा, चत्तारि सण्णा प० तं०–आहार० भय० मेहुण० परिग्गहसण्णा चउव्विहे बन्धे प० तं०–पगइबंधे ठिइबन्धे अणुभावबन्धे पएसबन्धे, चउगाउए जोयणे प०,अणुराहानक्खत्ते चउत्तारे प०, पुव्वासाढानक्खत्ते चउतारे प०, उत्तरासाढानक्खत्ते चउतारे प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं चत्तारि पलिओवमाइं ठिई प० तच्चाए णं पुढवीए अत्थेगइयाणं नेरइयाणं चत्तारि सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं चत्तारि पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं चत्तारि पलिओवमाइं ठिई प०, सणंकुमारमाहिंदेसु कप्पेसु अत्थेगइयाणं देवाणं चत्तारि सागरोवमाइं ठिई प०, जे देवा किट्ठिं सुकिट्ठिं किट्ठियावत्तं किट्ठिप्पभं किट्ठिजुत्तं किट्ठिवण्णं किट्ठिलेसं किट्ठिज्झयं किट्ठिसिंगं किट्ठिसिट्ठं किट्ठिकूडं किट्ठुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं चत्तारि सागरोवमाइं ठिई प० ते णं देवा चउण्हऽद्धमासाणं आणमंति-

वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं चउहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, अत्थेगइआ भवसिद्धिया जीवा जे चउहिं भवग्गहणेहिं सिज्झिस्संति जाव सव्वदुक्खाणं अंतं करिस्संति ॥ सूत्रम् ४ ॥

चतुःस्थानकमपि सुगममेव, नवरं कषायध्यानविकथासञ्ज्ञाबन्धयोजनार्थं सूत्राणां षट्कं, नक्षत्रार्थं त्रयं, स्थित्यर्थं षट्कं, शेषं तथैव, अन्तर्मुहूर्त्तं यावच्चित्तस्यैकाग्रता योगनिरोधश्च ध्यानं, तत्रार्त्तं मनोज्ञामनोज्ञेषु वस्तुषु वियोगसंयोगादिनिबन्धनचित्तविक्लवलक्षणं रौद्रं हिंसानृतचौर्यधनसंरक्षणाभिसन्धानलक्षणं धर्म्यमाज्ञादिपदार्थस्वरूपपर्यालोचनैकाग्रता शुक्लं पूर्वगतश्रुतावलम्बनेन मनसोऽत्यन्तस्थिरता योगनिरोधश्चेति, तथा विरुद्धाश्चारित्रं प्रति स्त्र्यादिविषयाः कथा विकथाः, तथा सञ्ज्ञाः—असातवेदनीयमोहनीयकर्मोदयसम्पाद्या आहाराभिलाषादिरूपाश्चेतनाविशेषाः, तथा सकषायस्य जीवस्य कर्मणो योग्यानां पुद्गलानां बन्धनं आदानं बन्धः, तत्र प्रकृतयः कर्मणोऽशा भेदा ज्ञानावरणीयादयोऽष्टौ तासां बन्धः प्रकृतिबन्धः तथा स्थितिः—तासामेवावस्थानं जघन्यादिभेदभिन्नं तस्या बन्धो—निर्वर्त्तनं स्थितिबन्धः तथा अनुभावो—विपाकस्तीव्रादिभेदो रसस्तस्य बन्धोऽनुभावबन्धः, तथा जीवप्रदेशेषु कर्मप्रदेशानामनन्तानन्तानां प्रतिप्रकृतिप्रतिनियतपरिमाणानां बन्धः—सम्बन्धनं प्रदेशबन्ध इति, तथा कृष्टिसुकृष्ट्यादीनि द्वादशविमानानि पूर्वोक्तविमाननामानुसार-वन्तीति ॥ ४ ॥

पंच किरिया प० तं०—काइया अहिगरणिया पाउसिआ पारितावणिआ पाणाइवायकिरिया, पंच महव्वया प० तं०—सव्वाओ पाणाइवायाओ वेरमणं सव्वाओ मुसावायाओ वेरमणं सव्वाओ अदत्तादाणाओ वेरमणं स

व्वाओ मेहूणाओ वेरमणं सव्वाओ परिग्गहाओ वेरमणं, पंच कामगुणा प० तं०—सद्दा रूवा रसा गंधा फासा, पंच आसवदारा प० तं०—मिच्छत्तं अविरई पमाया कसाया जोगा, पंच संवरदारा प० तं०-सम्मत्तं विरई अप्पमत्तया अकसाया अजोगया, पंच निज्जरट्ठाणा प० तं०-पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं, पंच समिईओ प० तं०-ईरियासमिई भासासमिई एसणासमिई आयाणभंडमत्तानिक्खेवणासमिई उच्चारपासवणखेलसिंघाणजल्लपारिट्ठावणियासमिई, पंच अत्थिकाया प० तं०-धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए पोग्गलत्थिकाए, रोहिणीनक्खत्ते पंचतारे प०, पुणव्वसुनक्खत्ते पंचतारे प०, हत्थनक्खत्ते पंचतारे प०, विसाहानक्खत्ते पंचतारे प०, धणिट्ठानक्खत्ते पंचतारे प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं पंच पलिओवमाइं ठिई प०, तच्चाए णं पुढवीए अत्थेगइयाणं नेरइयाणं पंच सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं पंच पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं पंच पलिओवमाइं ठिई प०, सणंकुमारमाहिंदेसु कप्पेसु अत्थेगइयाणं देवाणं पंच सागरोवमाइं ठिई प०, जे देवा वायं सुवायं वायावत्तं वायप्पभं वायकंतं वायवण्णं वायलेसं वायज्झयं वायसिंगं वायसिट्ठं वायकूडं वाउत्तरवडिंसगं सूरं सुसूरं सूरावत्तं सूरप्पभं सूरकंतं सूरवण्णं सूरलेसं सूरज्झयं सूरसिंगं सूरसिट्ठं सूरकूडं सूरुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं दे-

याण उक्कोसेण पंच सागरोवमाइं ठिई प०, ते णं देवा पंचण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं पंचहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे पंचहिं भवग्गहणेहिं सिज्झिस्संति जाव अंतं करिस्संति ॥ सूत्र ५ ॥

पञ्चस्थानकमपि सुगमं, नवरं क्रियामहाव्रतकामगुणाश्रवसंवरनिर्जरास्थानसमित्यस्तिकायार्थं सूत्राणामष्टकं, नक्षत्रार्थं पञ्चकं, स्थित्यर्थं षट्कं, उच्छ्वासाद्यर्थं त्रयमेवेति, तथा क्रिया—व्यापारविशेषः तत्र कायेन निर्वृत्ता कायिकी, कायचेष्टेत्यर्थः, अधिक्रियते आत्मा नरकादिषु येन तदधिकरणं तेन निर्वृत्ता आधिकरणिकी—खड्गादिनिर्वर्त्तनादिलक्षणेति, प्रद्वेषो—मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी परितापनं—ताडनादिदुःखविशेषलक्षणं तेन निर्वृत्ता पारितापनिकी प्राणातिपातक्रिया प्रतीतेति, तथा काम्यन्ते—अभिलष्यन्ते इति कामास्ते च ते गुणाश्च—पुद्गलधर्माः शब्दादय इति कामगुणाः कामस्य वा—मदनस्योद्दीपका गुणाः कामगुणाः—शब्दादय इति, तथा आश्रवद्वाराणि—कर्मोपादानोपाया मिथ्यात्वादीनि संवरस्य—कर्मानुपादानस्य द्वाराणि—उपायाः संवरद्वाराणि—मिथ्यात्वाद्याश्रवद्वारविपरीतानि सम्यक्त्वादीनि, तथा निर्जरा—देशतः कर्मक्षपणा तस्याः स्थानानि—आश्रयाः कारणानीति यावन्निर्जरास्थानानि—प्राणातिपातविरमणादीनि, एतान्येव च सर्वशब्दविशेषितानि महाव्रतानि भवन्ति, तानि च पूर्वसूत्राभिहितानि स्थूलशब्दविशेषितानि अणुव्रतानि भवन्ति, निर्जरास्थानत्वं पुनरेषां साधारणमिति सविशेषमभिहितं, तथा समितयः—सङ्गताः प्रवृत्तयः, तत्रेर्यासमितिः—गमने सम्यक् सत्त्वपरिहारतः प्रवृत्तिः भाषासमितिः—निरवद्यवचनप्रवृत्तिः, एषणासमितिः—द्विचत्वारिंशद्दोषवर्जनेन भक्तादिग्रहणे प्रवृत्तिः, आदाने—ग्रहणे भाण्डमात्रयोरुपकरणपरिच्छदस्य निक्षेपणे अवस्थापने समिति—सुप्रत्युपेक्षितादिसाङ्गत्येन प्रवृत्तिश्चतुर्थी, तथोच्चारस्य—पु-

रीपस्य प्रश्रवणस्य–मूत्रस्य खेलस्य–निष्ठीवनस्य सिंघाणस्य–नासिकाश्लेष्मणो जल्लस्य–देहमलस्य परिष्ठापनायां–परित्यागे समितिः–स्थण्डिलादिदोषपरिहारतः प्रवृत्तिरिति पञ्चमी, अस्तिकायाः–प्रदेशराशयः धर्मास्तिकायादयो गतिस्थित्यवगाहोपयोगस्पर्शादिलक्षणाः, स्थितिसूत्रेषु स्थितेरुत्कृष्टादिविभाग एवमनुगन्तव्यः, यदुत–[1]सागरमेगं १ तिय २ सत्त ३ दस य ४ सत्तरस ५ तह य बावीसा ६। तेत्तीसं जाव ठिई सत्तसुवि कमेण पुढवीसु ॥ १ ॥ जा पढमाए जेट्ठा सा बीयाए कणिट्ठिया भणिया। तरतमजोगो एसो दस वाससहस्स रयणाए॥ २ ॥ तथा–'दो १ साहि २ सत्त ३ साहिय ४ दस ५ चोदस ६ सत्तरेव अयराइं। सोहम्मा जा सुक्को तदुवरि इक्किक्कमारोवे ॥ ३ ॥ पलियं १ अहियं २ दो सार ३ साहिय ४ सत्त ५ दस ६ चउद्दस ७ ( तहय )। सत्तरस ८ सहस्सारे तदुवरि इक्किक्कमारोवे॥ ४ ॥"त्ति, तथा वातं सुवातमित्यादीनि द्वादश वाताभिलापेन विमाननामानि तावन्त्येव सूराभिलापेनेति ॥ ५ ॥

**छ लेसाओ पण्णत्ता तंजहा–कण्हलेसा नीललेसा काउलेसा तेउलेसा पम्हलेसा सुक्कलेसा, छ जीवनिकाया प० तं०–पुढवीकाए आउकाए तेउकाए वाउकाए वणस्सइकाए तसकाए, छव्विहे बाहिरे तवोकम्मे प० तं०-अणसणे ऊणोयरिया वित्तीसंखेवो रसपरिचाओ कायाकिलेसो संलीणया, छव्विहे अब्भितरे तवोकम्मे प० तं० –पायच्छित्तं विणओ वेयावचं सज्झाओ झाणं उस्सग्गो, छ छाउमत्थिया समुग्घाया प० तं०–वेयणासमु–**

---

१ सागरोपममेकं त्रीणि सप्त दश च सप्तदश तथा च द्वाविंशति । त्रयस्त्रिंशत् यावत् स्थिति सप्तस्वपि क्रमेण पृथ्वीषु ॥१॥ या प्रथमाया ज्येष्ठा सा अग्रेतनायां जघन्या भणिता । तरतमयोग एष दश वर्षसहस्राणि रत्नप्रभायाम् ॥२॥ द्वे साधिके सप्त साधिकानि दश चतुर्दश सप्तदशैव अतराणि । सौधर्मात् यावत् शुक्र तदुपर्येकैकमारोपयेत् ॥३॥ पल्यं अधिक द्वे सागरोपमे साधिके सप्त दश चतुर्दश । सप्तदश सहस्रारे तदुपर्येकैकमारोपयेत् ॥४॥

माण उक्कोसेण पंच सागरोवमाइ ठिई प०, ते ण देवा पंचण्ह अद्धमासाण आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि ण देवाण पंचहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे पंचहिं भवग्गहणेहिं सिज्झिस्संति जाव अंत करिस्संति ॥ सूत्र ५ ॥

पञ्चस्थानकमपि सुगमं, नवरं क्रियामहाव्रतकामगुणाश्रवसंवरनिर्जरास्थानसमित्यस्तिकायार्थं सूत्राणामष्टकं, नक्षत्रार्थं पञ्चकं, स्थित्यर्थं षट्कं, उच्छ्वासाद्यर्थं त्रयमेवेति, तत्र क्रिया—व्यापारविशेषाः तत्र कायेन निर्वृत्ता कायिकी, कायचेष्टेत्यर्थः, अधिक्रियते आत्मा नरकादिषु येन तदधिकरणं तेन निर्वृत्ता आधिकरणिकी—खड्गादिनिर्वर्त्तनादिलक्षणेति, प्रद्वेषो—मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी परितापन—ताडनादिदुःखविशेषलक्षणं तेन निर्वृत्ता पारितापनिकी प्राणातिपातक्रिया प्रतीतेति, तथा काम्यन्ते—अभिलष्यन्ते इति कामास्ते च ते गुणाश्च—पुद्गलधर्माः शब्दादय इति कामगुणाः कामस्य वा—मदनस्योद्दीपका गुणाः कामगुणाः—शब्दादय इति, तथा आश्रवद्वाराणि—कर्मोपादानोपाया मिथ्यात्वादीनि संवरस्य—कर्मानुपादानस्य द्वाराणि—उपायाः संवरद्वाराणि—मिथ्यात्वाद्याश्रवद्वार विपरीतानि सम्यक्त्वादीनि, तथा निर्जरा—देशतः कर्मक्षपणा तस्याः स्थानानि—आश्रयाः कारणानीति यावन्निर्जरास्थानानि—प्राणा-तिपातविरमणादीनि, एतान्येव च सर्वशब्दविशेषितानि महाव्रतानि भवन्ति, तानि च पूर्वसूत्राभिहितानि स्थूलशब्दविशेषितानि अ-णुव्रतानि भवन्ति, निर्जरास्थानस्य पुनरेषां साधारणमिति यदिहैषामभिहितं, तथा समितयः—सङ्गताः प्रवृत्तयः, तत्रेर्यासमितिः—गमने सम्यक् सत्त्वपरिहारतः प्रवृत्तिः भाषासमितिः—निरवद्यवचनप्रवृत्तिः, एषणासमितिः—द्विचत्वारिंशद्दोषवर्जनेन भक्तादिग्रहणे प्रवृत्तिः, आदाने—ग्रहणे भाण्डमात्रयोरुपकरणपरिच्छदस्य निक्षेपणे अवस्थापने समितिः—सुप्रत्युपेक्षितादिसाङ्गत्येन प्रवृत्तिश्चतुर्थी, तथोच्चारस्य—पु-

नक्षत्रार्थे द्वे, स्थित्यर्थानि षट्, उछ्वासाद्यर्थं त्रयमेवेति, तत्र लेश्यानां स्वरूपमिदं–कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रयुज्यते ॥ १ ॥' इति, तथा बाह्यतपः–बाह्यशरीरस्य परिशोषणेन कर्मक्षपणहेतुत्वादिति, आभ्यन्तरं–चित्तनिरोधप्राधान्येन कर्मक्षपणहेतुत्वादिति, तथा छद्मस्थ –अकेवली तत्र भवा छाद्मस्थिका तत्र सम् एकीभावेनोत्–प्राबल्येन च घातानि–निर्जरणानि समुद्घाताः, वेदनादिपरिणतो हि जीवो बहून् वेदनीयादिकर्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्योदये प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशैः संश्लिष्टान् शातयतीत्यर्थः, ते चेह वेदनादिभेदेन षडुक्ताः, तत्र वेदनासमुद्घातोऽसद्वेद्यकर्माश्रयः कषायसमुद्घातः कषायाख्यचारित्रमोहनीयकर्माश्रयः मारणान्तिकसमुद्घातोऽन्तर्मुहूर्तशेषायुष्ककर्माश्रयो वैकुर्विकतैजसाहारकसमुद्घाताः शरीरनामकर्माश्रयाः, तत्र वेदनासमुद्घातसमुद्धत आत्मा वेदनीयकर्मपुद्गलशाटनं करोति कषायसमुद्घातसमुद्धतः कषायपुद्गलशातं मारणान्तिकसमुद्घातसमुद्धत आयुः कर्मपुद्गलघातं वैकुर्विकसमुद्घातसमुद्धतस्तु जीवप्रदेशान् शरीराद्बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमात्रमायामतश्च सङ्ख्येयानि योजनानि दण्डं निसृजति निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, एवं तैजसाहारकसमुद्घातावपि व्याख्येयाविति, तथा अर्थस्य–सामान्यानिर्देश्यस्वरूपस्य शब्दादेः 'अवे'ति प्रथमं व्यञ्जनावग्रहानन्तरं ग्रहणं–परिच्छेदनमर्थावग्रहः, स चैकसामयिको नैश्चयिको व्यावहारिकस्त्वसङ्ख्येयसामयिकः, स च षोढा–श्रोत्रादिभिरिन्द्रियैर्नोइन्द्रियेण च मनसा जन्यमानत्वादिति, स्थितिसूत्रे स्वयम्भ्वादीनि विंशतिर्विमानानीति ॥ ६ ॥ अथ सप्तमं स्था-

ग्घाए कसायसमुग्घाए मारणतिअसमुग्घाए वेउवियसमुग्घाए तेयसमुग्घाए आहारसमुग्घाए, छव्विहे अत्थुग्गहे प० त०—सोइंदियअत्थुग्गहे चक्खुइंदियअत्थुग्गहे घाणिंदिअअत्थुग्गहे जिब्भिंदियअत्थुग्गहे फासिंदियअत्थु-ग्गहे नोइंदियअत्थुग्गहे, कत्तियानक्खत्ते छतारे प० असिलेसानक्खत्ते छतारे प०, इमीसे ण रयणप्पभाए पुढवीए अत्थेगइयाण नेरइयाण छ पलिओवमाइ ठिई प०, तच्चाए ण पुढवीए अत्थेगइयाण नेरइयाण छ सागरोवमाइ ठिई प०, असुरकुमाराण देवाण अत्थेगइयाण छ पलिओवमाइ ठिई प० सोहम्मीसाणेसु कप्पेसु अत्थेगइयाण देवाण छ पलिओवमाइ ठिई प०, सणकुमारमाहिंदेसु अत्थेगइयाणं देवाण छ सागरोवमाइ ठिई प० जे देवा सयमु सयम्भूरमण घोस सुघोसं महाघोस किट्टिघोस वीर सुवीर वीरगत्त विरसेणिय वीरावत्त वीरप्पभ वीरकंत वीरवण्ण वीरलेस वीरज्झय वीरसिंग विरसिट्ठ वीरकूड वीरुत्तरवडिंसाग विमाण देवत्ताए उववण्णा तेसिं ण देवाण उक्कोसेणं छ सागरोवमाई ठिई प०, ते ण देवा छण्ह अद्धमासाण आणमंति वा पाणमंति वा उससति वा नीससति वा तेसिं णं देवाणं छहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे छहिं भवग्गहणेहिं सिज्झिस्सति जाव सव्वदुक्खाणमंत करिस्सति ॥ सूत्र ६ ॥

षट्स्थानकमथ, तच सुबोधं, नवरमिह लेश्या १ जीवनिकाय २ बाह्या ३ऽभ्यन्तरतपः ४ समुद्घाता ५ऽवग्रहार्थानि सूत्राणि षट्,

गरोवमाइं ठिई प०, माहिंदे कप्पे देवाणं उक्कोसेणं साइरेगाइं सत्त सागरोवमाइं ठिई प०, बंभलोए कप्पे अत्थेगइयाणं देवाणं सत्त साहिया सागरोवमाइं ठिई प०, जे देवा समं समप्पभं महापभं पभासं भासुरं विमलं कंचणकूडं सणंकुमारवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं सत्त सागरोवमाइं ठिई ते णं देवा सत्तण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं सत्तहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे णं सत्तहिं भवग्गहणेहिं सिज्झिसंति बुज्झिस्संति जाव सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रम् ७ ॥

तच्च कण्ठ्यं, नवरमिह भयसमुद्घातमहावीरवर्षधरवर्षक्षीणमोहार्थानि च सूत्राणि षट् नक्षत्रार्थानि पञ्च स्थित्यर्थानि नव उच्छ्वासाद्यर्थानि त्रीण्येवेति, तत्रेहलोकभयं यत्सजातीयात् परलोकभयं यद्विजातीयात् आदानभयं यद् द्रव्यमाश्रित्य जायते अकस्माद्भयं बाह्यनिमित्तनिरपेक्षं स्वविकल्पाज्जातं शेषाणि प्रतीतानि, नवरमश्लोकः–अकीर्त्तिरिति, समुद्घाताः प्राग्वत्, नवरं केवलिसमुद्घातो वेदनीयनामगोत्राश्रय इति, तथा रत्निः–वितते ऽङ्गुलिर्हस्त इति, ऊर्द्ध्वोच्चत्वेन न तिर्यगुच्चत्वेनेति 'होत्था' बभूवेति, तथा अभिजिदादीनि सप्त नक्षत्राणि पूर्वद्वारिकाणि–पूर्वदिशि येषु गच्छतः शुभं भवति, एवमश्विन्यादीनि दक्षिणद्वारिकाणि पुष्यादीन्यपरद्वारिकाणि स्वात्यादीन्युत्तरद्वारिकाणीति सिद्धान्तमतमिह तु मतान्तरमाश्रित्य कृत्तिकादीनि सप्त सप्त पूर्वद्वारिकादीनि भणितानि, चन्द्रप्रज्ञप्तौ तु बहुतराणि मतानि दर्शितानीहार्थ इति, स्थितिसूत्रे सामादीन्यष्टौ विमाननामानीति ॥ ७ ॥

अट्ठ मयट्ठाणा प० तं०—जातिमए कुलमए बलमए रूवमए तवमए सुयमए लाभमए इस्सरियमए, अट्ठ

नक विमियत।

सत्त भयट्ठाणा प० तं०-इहलोगभए परलोगभए आयाणभए अकम्हाभए आजीवभए मरणभए असिलोगभए, सत्त समुग्घाया प० तं०—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाए तेयसमुग्घाए आहारसमुग्घाए केवलिसमुग्घाए, समणे भगवं महावीरे सत्त रयणीओ उड्ढ उच्चत्तेणं हो-त्था, इहेव जंबुदीवे दीवे सत्त वासहरपव्वया प० तं०-चुल्लहिमवंते महाहिमवंते निसढे नीलवंते रुप्पी सिहरी मन्दरे, इहेव जम्बुदीवे दीवे सत्त वासा प० तं०-भरहे हेमवते हरिवासे महाविदेहे रम्मए एरण्णवए एरवए, खीणमोहेण भगवया मोहणिज्जवज्जाओ सत्त कम्मपयडीओ वेए(इ)ई, महानक्खत्ते सत्ततारे प०, कत्तिआइआ सत्त नक्खत्ता पुव्वदारिआ प० [ पाठा० अभियाइया सत्त नक्खत्ता ] महाइया सत्त नक्खत्ता दाहिणदारिआ प० अणुराहाइआ सत्त नक्खत्ता अवरदारिआ प० धणिट्ठाइया सत्त नक्खत्ता उत्तरदारिआ प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं सत्त पलिओवमाइं ठिई प०, तच्चाए णं पुढवीए नेरइयाणं उक्कोसेणं सत्त सागरोवमाइं ठिई प०, चउत्थीए णं पुढवीए नेरइयाणं जहण्णेणं सत्त सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं सत्त पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं सत्त पलिओवमाइं ठिई प०,सणकुमारे कप्पे अत्थेगइयाणं देवाणं उक्कोसेणं सत्त सा

१० अरुणुत्तरवडिंसगं ११ विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं अट्ठ सागरोवमाइं ठिई प० ते णं देवा अट्ठण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं अट्ठहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे अट्ठहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति जाव अंतं करिस्संति ॥ सूत्रम् ८ ॥

अथाष्टमस्थानकं व्याख्यायते, सुगमं चैतत्, नवरमिह मदस्थानप्रवचनमातृचैत्यवृक्षजम्बूशाल्मलीजगतीकेवलिसमुद्घातगणधरनक्षत्रार्थानि सूत्राणि नव स्थित्यर्थानि षट् उच्छ्वासाद्यर्थानि त्रीणीति, तत्र मदस्य—अभिमानस्य स्थानानि—आश्रयाः मदस्थानानि—जात्यादीनि, तान्येव मदप्रधानतया दर्शयन्नाह—'जाइमए' इत्यादि, जात्या मदो जातिमद एवमन्यान्यपि, अथवा मदस्य स्थानानि—भेदाः मदस्थानानि, तान्येवाह—'जाइमए' इत्यादि, शेषं तथैव, तथा प्रवचनस्य—द्वादशाङ्गस्य तदाधारस्य वा सङ्घस्य मातर इव—जनन्य इव प्रवचनमातरः—ईर्यासमित्यादयो, द्वादशाङ्गं हि ता आश्रित्य साक्षात्प्रसङ्गतो वा प्रवर्त्तते, भवति च यतो यत्प्रवर्त्तते तस्य तदाश्रित्य मातृकल्पनेति, सङ्घपक्षे तु यथा शिशुर्मातरममुञ्चन्नात्मलाभं लभते एवं सङ्घस्तामामुञ्चन् सङ्घत्वं लभते नान्यथेतीर्यासमित्यादीनां प्रवचनमातृतेति, तथा व्यन्तरदेवानां चैत्यवृक्षाः तन्नगरेषु सुधर्मादिसभानामग्रतो मणिपीठिकानामुपरि सर्वरत्नमया छत्रचामरध्वजादिभिरलङ्कृता भवन्ति, ते चैवं श्लोकाभ्यामवगन्तव्याः—'कलंबो उ पिसायाणं, वडो जक्खाण चेइयं । तुलसी भूयाणं भवे, रक्खसाणं तु कंडओ ॥ १ ॥ असोगो किण्णराणं च, किंपुरिसाण य चंपओ । नागरुक्खो भुयंगाणं, गंधव्वाण य तुंबुरू ॥ २ ॥" त्ति, तथा 'जम्बु'त्ति उत्तरकुरुषु जम्बूवृक्षः पृथिवीपरिणामः सुदर्शनेति तन्नाम, एवं कूटशाल्मली वृक्षाविशेषः, एष देवकुरुषु गरुडजातीयस्य

पवयणमायाओ प० त०—ईरियासमिई भासासमिई एसणासमिई आयाणभंडमत्तनिक्खेवणासमिई उच्चारपासवणखेलजल्लसिंघाणपारिट्ठावणियासमिई मणगुत्ती वयगुत्ती कायगुत्ती, वाणमंतराण देवाणं चेइयरुक्खा अट्ठ जोयणाई उड्ढं उच्चत्तेण प०, जंबू णं सुदंसणा अट्ठ जोयणाइं उड्ढं उच्चत्तेण प०, कूडसामली णं गरुलावासे अट्ठ जोयणाई उड्ढं उच्चत्तेण प०, जंबुदीवस्स णं जगई अट्ठ जोयणाइं उड्ढं उच्चत्तेण प०, अट्ठसामइए केवलिसमुग्घाए प० त०—पढमे समए दंडं करेइ बीए समए कवाडं करेइ तइए समए मंथं करेइ चउत्थे समए मंथंतराइं पूरेइ पंचमे समए मंथंतराइं पडिसाहरइ छट्ठे समए मंथं पडिसाहरइ सत्तमे समए कवाडं पडिसाहरइ अट्ठमे समए दंडं पडिसाहरइ तत्तो पच्छा सरीरत्थे भवइ, पासस्स णं अरहओ पुरिसादाणिअस्स अट्ठ गणा अट्ठ गणहरा होत्था, तं०— सुभे य सुभघोसे य, वसिट्ठे बंभयारि य। सोमे सिरिधरे चेव, वीरभद्दे जसे इय ॥ १ ॥ अट्ठ नक्खत्ता चंदेण सद्धिं पमद्दं जोगं जोएंति, त०—कत्तिया १ रोहिणी २ पुणव्वसू ३ महा ४ चित्ता ५ विसाहा ६ अणुराहा ७ जेट्ठा ८, इमीसे णं रयणप्पहाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठ पलिओवमाइं ठिई प०, चउत्थीए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठ सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठ पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं अट्ठ पलिओवमाइं ठिई प०, बंभलोए कप्पे अत्थेगइयाणं देवाणं अट्ठ सागरोवमाइं ठिई प०, जे देवा अच्चिं १ अच्चिमालिं २ वइरोयणं ३ पभंकरं ४ चंदाभं ५ सूराभं ६ सुपइट्ठाभं ७ अग्गिच्चाभं ८ रिट्ठाभं ९ अरुणाभ

सत्थपरिण्णा लोगविजयो सीओसणिज्ज सम्मत्तं । आवंति धुत विमोहा[यणं]उवहाणसुयं महपरिण्णा ॥१॥

पासे णं अरहा पुरिसादाणीए नव रयणीओ उड्ढं उच्चत्तेणं होत्था, अभीजीनक्खत्ते साइरेगे नव मुहुत्ते चन्देणं सद्धिं जोगं जोएइ, अभीजियाइया नव नक्खत्ता चंदस्स उत्तरेणं जोगं जोएंति तं–अभीजि सवणो जाव भरणी, इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ नव जोयणसए उड्ढं आबाहाए उवरिल्ले ताराख्वे चारं चरइ, जंबूदीवे णं दीवे नवजोयणिया मच्छा पविसिंसु वा ३, विजयस्स णं दारस्स एगमेगाए बाहाए नव नव भोमा प०, वाणमंतराणं देवाणं सभाओ सुहम्माओ नव जोयणाइं उड्ढं उच्चत्तेणं प०, दंसणावरणिज्जस्स णं कम्मस्स नव उत्तरपगडीओ प० तं०—निद्दा पयला निद्दानिद्दा पयलापयला थीणद्धी चक्खुदंसणावरणे अचक्खुदंसणावरणे ओहिदंसणावरणे केवलदंसणावरणे, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं नव पलिओवमाइं ठिई प०, चउत्थीए पुढवीए अत्थेगइयाणं नेरइयाणं नव सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं नव पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं नव पलिओवमाइं ठिई प०, बंभलोए कप्पे अत्थेगइयाणं देवाणं नव सागरोवमाइं ठिई प०, जे देवा पम्हं सुपम्हं पम्हावत्तं पम्हप्पभं पम्हकंतं पम्हवण्णं पम्हलेसं पम्हज्झयं पम्हासिंगं पम्हासिट्ठं पम्हकूडं पम्हुत्तरवडिंसगं सुज्जं सुसुज्जं सुज्जावित्तं सुज्जपभं सुज्जकंतं सुज्जवण्णं सुज्जलेसं सुज्जज्झयं सुज्झासिंगं सुज्झसिट्ठं सुज्जकूडं सुज्जुत्तरवडिंसगं ( रुइल्लं ) रुइल्लावत्तं रुइल्लप्पभं रुइल्लकंतं रुइल्लवण्णं रुइल्ललेसं रुइल्ल–

वेणुदेवाभिधानस्य देवस्यावास इति, जगती जम्बूद्वीपनगरस्य प्राकारकल्पा पालीति, तथा पार्श्वस्यार्हतः—त्रयोविंशतितमतीर्थकरस्य 'पुरिसादाणीयस्स'त्ति पुरुषाणां मध्ये आदानीयः—आदेयः पुरुषादानीयस्तस्याष्टौ गणाः—समानवाचनाक्रियाः साधुसमुदायाः अष्टौ गणधरा—तन्नायकाः सूरयः, इदं चैतत्प्रमाणं स्थानाङ्गे पर्युषणाकल्पे च श्रूयते, केवलमावश्यके अन्यथा, तत्र ह्युक्तम्—'दस नवग गणाण माण जिणिंदाण'त्ति, कोऽर्थः ?—पार्श्वस्य दश गणा गणधराश्च, तदिह द्वयोरल्पायुष्कत्वादिना कारणेनाविवक्षाऽनुगन्तव्येति, 'सुभे' इत्यादि श्लोकः तथा अष्टौ नक्षत्राणि चन्द्रेण सार्धं प्रमर्द—चन्द्र ( ) मध्येन तेषां गच्छतीत्येवलक्षणं योग—सम्बन्धं योजयन्ति—कुर्वन्ति, अत्रार्थेऽभिहितं लोकश्रियां—"पुणव्वसु रोहिणी चित्ता मह जेट्ठणुराह कित्तिय विसाहा । चंदस्स उभयजोग"त्ति, यानि च दक्षिणोभययोगीनि तानि प्रमर्दयोगीन्यपि कदाचिद्भवन्ति, यतो लोकश्रीटीकाकृतोक्तम्—' एतानि नक्षत्राण्युभययोगीनि चन्द्रस्योत्तरेण दक्षिणेन च युज्यन्ते, कदाचिच्चन्द्रेण भेदमप्युपयान्ती"ति, तथाश्विरादीन्येकादश विमाननामानीति ॥ ८ ॥

नव बंभचेरगुत्तीओ प० तं०—नो इत्थीपसुपंडगसंसत्ताणि सिज्जासणाणि सेवित्ता भवइ १ नो इत्थीणं कहं कहित्ता भवइ २ नो इत्थीणं गणाइं सेवित्ता भवइ ३ नो इत्थीणं इंदियाणि मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता भवइ ४ नो पणीयरसभोई ५ नो पाणभोयणस्स अइमायाए आहारइत्ता ६ नो इत्थीणं पुव्वरयाइं पुव्वकीलिआइं समरइत्ता भवइ, नो सद्दाणुवाई नो रूवाणुवाई नो गन्धाणुवाई नो रसाणुवाई नो फासाणुवाई नो सिलोगाणुवाई ८ नो सायासोक्खपडिबद्धे यावि भवइ ९ नव बंभचेरअगुत्तीओ प० तं०—इत्थीपसुपंडगसंसत्ताणं सिज्जासणाणं सेवणया जाव सायासुक्खपडिबद्धे यावि भवइ, नव बंभचेरा प० तं०—

धसूत्रभावादिति, तथा कुशलानुष्ठानं ब्रह्मचर्यं तत्प्रतिपादकान्यध्ययनानि ब्रह्मचर्याणि तानि चाचाराङ्गप्रथमश्रुतस्कन्धप्रतिबद्धानीति, तथा अभिजिन्नक्षत्रं साधिकान्नव मुहूर्त्तांश्चन्द्रेण सार्द्धं योगं-सम्बन्धं योजयति-करोति, सातिरेकत्वं च तेषां चतुर्विंशत्या मुहूर्त्तस्य द्विषष्टिभागानां षट्षष्ट्या च द्विषष्टिभागस्य सप्तषष्टिभागानामिति, तथा अभिजिदादीनि नव नक्षत्राणि चन्द्रस्योत्तरेण योगं योजयन्ति, उत्तरस्यां दिशि स्थितानि दक्षिणाशास्थितचन्द्रेण सह योगमनुभवन्तीति भावः । 'बहुसमरमणिज्जाओ' इति अत्यन्तसमोबहुसमोऽत एव रमणीयो—रम्यस्तस्माद्भूमिभागान्न पर्वतापेक्षया नापि श्वभ्रापेक्षयेति भावः, रुचकापेक्षयेति तात्पर्यम्, 'आबाहाए'त्ति अन्तरे कृत्वेति शेषः 'उवरिल्ले'त्ति उपरितनं तारारूपं-तारकजातीयं चारं-भ्रमणं चरति-करोति, 'नवजोयणिय'त्ति नवयोजनायामा एव प्रविशन्ति, लवणसमुद्रे यद्यपि पञ्चयोजनशतिका मत्स्याः सम्भवन्ति तथापि नदीमुखेषु जगतीरन्ध्रौचित्येनैतावतामेव प्रवेश इति, लोकानुभावो वाऽयमिति, विजयद्वारस्य-जम्बूद्वीपसम्बन्धिनः पूर्वदिग्व्यवस्थितस्य 'एगमेगाए'त्ति एकैकस्यां 'बाहाए,'त्ति बाहौ पार्श्वे भौमानि-नगराणीत्येके विशिष्टस्थानानीत्यन्ये, तथा व्यन्तराणां सभा सुधर्मा नव योजनानि ऊर्ध्वमुच्चत्वेन तथा पक्ष्मादीनि द्वादश सूर्यादीन्यपि द्वादशैव रुचिरादीन्येकादश विमाननामानीति ॥ ९ ॥

**दसविहे समणधम्मे प० तं०—खंती १ मुत्ती २ अज्जवे ३ मद्दवे ४ लाघवे ५ सच्चे ६ संजमे ७ तवे ८ चियाए ९ बंभचेरवासे १०, दस चित्तसमाहिट्ठाणा प० तं०—धम्मचिंता वा से असमुप्पण्णपुव्वा समुप्पज्जिज्जा सव्वं धम्मं जाणित्तए १ सुमिणदंसणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा अहातच्चं सुमिणं पासित्तए २ सण्णिनाणे वा से असमुप्पण्णपुव्वे समुपज्जिज्जा पुव्वभवे सुमरितए ३ देवदंसणे वा से असमुप्पन्नपुव्वे समुप्प-**

जमय रुस्लसिंगं रुस्लसिद्ध रुस्लकूड रुस्लुत्तरवडिंसग विमाणं देवत्ताए उववण्णा तेसि ण देवाणं नव सागरोवमाइं ठिई प०, ते ण देवा नवण्हं अद्धमासाण आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि ण देवाणं नवहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे नवहिं भवग्गहणेहिं सिज्झिस्संति जाव सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र ९ ॥

अथ नवमस्थानकं सुखावबोध, नवरमिह ब्रह्मगुप्ति १ तद्गुप्ति २ ब्रह्मचर्याध्ययन ३ पाश्वार्थं ४ प्रश्नाणां चतुष्टय ज्योतिष्कार्थं ग्रय मत्स्य १ भौम २ समा ३ दर्शनावरणार्थं ४ चतुष्टयं स्पिस्थावर्यानि तथैव, तत्र ब्रह्मचर्यगुप्तयो मैथुनविरतिपरिरक्षणोपायाः नो स्त्रीपशुपण्डकैः संसक्तानि—सङ्कीर्णानि शय्यासनानि—शयनीयविष्टराणि वसत्यासनानि वा सेवयिता भवतीत्येका १ नो स्त्रीणां कथाः कथयिता भवतीति द्वितीया २ नो स्त्रीगणान्—स्त्रीसमुदायान् सेवयिता—उपासयिता भवतीति तृतीया ३ नो स्त्रीणामिन्द्रियाणि—नयननासादीनि मनोहराणि आक्षेपकत्वात् मनोरमाणि रम्यतयाऽऽलोकयिता—द्रष्टा निर्ध्याता-तदेकाग्रचित्ततया द्रष्टैव भवतीति चतुर्थी ४ नो प्रणीतरसभोजी—गलत्स्नेहरसबिन्दुकस्य भोजनस्य भोजको भवतीति पञ्चमी ५ नो पानभोजनस्यातिमात्रम्—अतिप्रमाणं यथा भवत्येवमाहारकः सदा भवतीति षष्ठी ६ नो पूर्वरतं—पूर्वक्रीडितमनुस्मर्ता भवति रतं—मैथुनं क्रीडितं—स्त्रीभिः सह तदन्या क्रीडेति सप्तमी, ७ नो शब्दानुपाती नो रूपानुपाती नो गन्धानुपाती नो रसानुपाती नो स्पर्शानुपाती नो श्लोकानुपाती कामोद्दीपकान् शब्दादीनात्मनो वर्णवादं च नानुपतति—नानुसरतीत्यर्थः इत्यष्टमी ८ नो सातसौख्यप्रतिबद्धश्चापि भवति सातात्—सातवेदनीयादुदयप्रासाद्यसौख्य तथा, अनेन च नवमसूत्रस्य व्युदास इति नवमी ९, इदं च व्याख्यानं वाचनाद्वयानुसारेण कृतं, प्रत्येकवाचनयोरेवंवि

असुरिंदवज्जाणं भोमिज्जाणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प, असुरकुमाराणं देवाणं अत्थेगइयाणं दस पलिओवमाइं ठिई प०, बायरवणस्सइकाइए णं उक्कोसेणं दस वाससहस्साइं ठिई प०, वाणमंतराणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं दस पलिओवमाइं ठिई प०, बंभलोए कप्पे देवाणं उक्कोसेणं दस सागरोवमाइं ठिई प०, लंतए कप्पे देवाणं अत्थेगइयाणं जहण्णेणं दस सागरोवमाइं ठिई प०, जे देवा घोसं सुघोसं महाघोसं नंदिघोसं सुसरं मणोरमं रम्मं रम्मगं रमणिज्जं मंगलावत्तं बंभलोगवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं दस सागरोवमाइं ठिई प०, ते णं देवा दसण्हं अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं दसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे दसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १० ॥

दशमं स्थानकं सुबोधमेव तथापि किञ्चिल्लिख्यते, इह पञ्चविंशतिः सूत्राणि, तत्र लाघवं द्रव्यतोऽल्पोपधिता भावतो गौरवत्यागः त्यागः सर्वसङ्गानां संविग्नमनोज्ञसाधुदानं वा ब्रह्मचर्येण वसनम्–अवस्थानं ब्रह्मचर्यवास इति, तथा चित्तस्य–मनसः समाधिः–समाधानं प्रशान्तता तस्य स्थानानि–आश्रया भेदा वा चित्तसमाधिस्थानानि, तत्र धर्मा–जीवादिद्रव्याणामुपयोगोत्पादादयः स्वभावास्तेषां चिन्ता–अनुप्रेक्षा धर्मस्य वा–श्रुतचारित्रात्मकस्य सर्वज्ञभाषितस्य हरिहरादिनिगदितधर्मेभ्यः प्रधानोऽयमित्येवं चिन्ता धर्मचिन्ता,

ज्जिज्जा दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं पासित्तए ४ ओहिनाणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा ओहिणा लोगं जाणित्तए ५ ओहिदंसणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा ओहिणा लोगं पासित्तए ६ मणपज्जवनाणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा जाव मणोगए भावे जाणित्तए ७ केवलनाणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा केवलं लोगं जाणित्तए ८ केवलदंसणे वा से असमुप्पण्णपुव्वे समुप्पज्जिज्जा केवलं लोयं पासित्तए ९ केवलिमरणं वा मरिज्जा सव्वदुक्खप्पहीणाए १०, मंदरे णं पव्वए मूले दसजोयणसहस्साइं विक्खंभेणं प०, अरिहा णं अरिट्ठनेमी दस धणूइं उद्धं उच्चत्तेणं होत्था, कण्हे णं वासुदेवे दस धणूइं उड्ढं उच्चत्तेणं होत्था, रामे णं बलदेवे दस धणूइं उद्धं उच्चत्तेणं होत्था, दस नक्खत्ता नाणवुड्ढिकरा प० तं०—मिगसिर अद्दा पुस्सो तिण्णि अ पुव्वा य मूलमस्सेसा । हत्थो चित्तोय तहा दस वुड्ढिकराइं नाणस्स ॥ १ ॥ अकम्मभूमियाणं मणुआणं दसविहा रुक्खा उवभोगत्ताए उवत्थिया प० तं०—[1]मत्तंगया य [2]भिंगा [3]तुडिअंगा [4]दीव [5]जोइ [6]चित्तंगा [7]चित्तरसा [8]मणिअंगा [9]गेहागारा [10]अनिगिणा य ॥१॥ इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं दस पलिओवमाइं ठिई प०, चउत्थीए पुढवीए दस निरयावाससयसहस्साइं प०, चउत्थीए पुढवीए अत्थेगइयाणं उक्कोसेणं दस सागरोवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं दस सागरोवमाइं ठिई प० असुरकुमाराणं देवाणं अत्थेगइयाणं जहण्णेणं दस वाससहस्साइं ठिई प०,

तिं—विशिष्टां शरीराभरणादिदीप्तिं दिव्यं देवानुभावं—उत्तमवैक्रियकरणादिप्रभावं द्रष्टुम्, एतद्दर्शनायेत्यर्थः, देवदर्शनाच्चागमार्थेषु श्रद्धातिशयो धर्मे बहुमानश्च भवतीति ततश्चित्तसमाधिरिति देवदर्शनं चित्तसमाधिस्थानमिति चतुर्थं, तथा अवधिज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, किमर्थं इत्याह—अवधिना—मर्यादया नियतद्रव्यक्षेत्रकालभावरूपेण लोकं ज्ञातुं लोकज्ञानायेत्यर्थः, भवति च विशिष्टज्ञानाच्चित्तसमाधिरिति पञ्चमं तदिति, एवमवधिदर्शनसूत्रमपीति षष्ठं, तथा मनःपर्यवज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, किमर्थं अत आह—'मणोगते भावे जाणित्तए' अर्द्धतृतीयद्वीपसमुद्रेषु सञ्ज्ञिनां पञ्चेन्द्रियाणां पर्याप्तकानां मनोगतान् भावान् ज्ञातुम्, एतद्ज्ञानायेत्यर्थ इति सप्तमं, तथा केवलज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, केवलः—परिपूर्णः लोक्यते—दृश्यते केवलालोकेनेति लोको—लोकालोकस्वरूपं वस्तु तद् ज्ञातुं केवलज्ञानस्य च समाधिभेदत्वा[चित्तसमाधिभेदत्वा]च्चित्तसमाधिस्थानता, इह चामनस्कतया केवलिनश्चित्तं चैतन्यमवसेयमित्यष्टमं, एवं केवलदर्शनसूत्रं नवरं द्रष्टुमिति विशेष इति नवमं, तथा केवलिमरणं वा म्रियेत—कुर्यात् इत्यर्थः, किमर्थं अत आह—'सर्वदुःखप्रहाणाये'ति, इदं तु केवलिमरणं सर्वोत्तमसमाधिस्थानमेवेति दशममिति, तथा अकर्मभूमिकानां—भोगभूमिजन्मनां मनुष्याणां दशविधा 'रुक्ख'त्ति कल्पवृक्षाः 'उवभोगत्ताए'त्ति उपभोग्यत्वाय 'उवत्थिय'त्ति उपस्थिता—उपनता इत्यर्थः, तत्र मताङ्गकाः मद्यकारणभूताः 'भिंग'त्ति भाजनदायिनः 'तुडियंग'त्ति तूर्याङ्गसम्पादकाः 'दीव'त्ति दीपशिखाः—प्रदीपकार्यकारिणः 'जोइ'त्ति ज्योतिः—अग्निस्तत्कार्यकारिण इति 'चित्तंग'त्ति चित्राङ्गाः पुष्पदायिनः चित्ररसा—भोजनदायिनः मण्यङ्गाः—आभरणदायिनः गेहाकाराः—भवनत्वेनोपकारिणः 'अणिगिण'त्ति अनग्नत्वं—सवस्त्रत्वं तद्धेतुत्वादनग्ना इति, घोपादीन्येकादश विमाननामानीति ॥ १० ॥

वाशब्दो वक्ष्यमाणसमाधिस्थानान्तरापेक्षया विकल्पार्थः, 'स' इति यः कल्याणभागी तस्य साधोरसमुत्पन्नपूर्वा-पूर्वस्मिन्ननादौ अतीते कालेऽनुपजाता तदुत्पादे यथार्हपुद्गलपरावर्तान्ते कल्याणस्यावश्यभावात् समुत्पद्येत-जायेत सा, किंप्रयोजनाय चेयमत आह-सर्वे-निरवशेष धर्मं-जीवादिद्रव्यस्वभावमुपयोगोत्पादादिकं श्रुतादिरूपं वा 'जाणिचए' ज्ञपरिज्ञया ज्ञातु ज्ञात्वा च प्रत्याख्यानपरिज्ञया परिहरणीयकर्म परिहर्तुम्, इदमुक्तं भवति-धर्मचिन्ता धर्मज्ञानकारणभूता जायत इति, इयं च समाधेरुक्तलक्षणस्य स्थानमुक्तलक्षणमेव भवतीति प्रथमं, तथा स्वप्नस्य-निद्रावशविकल्पज्ञानस्य दर्शन-संवेदन स्वप्नदर्शनं तथा कल्याणभाविसूचकमसमुत्पन्नपूर्वं समुत्पद्यते, तद् यथा भगवतो महावीरस्यास्थिकग्रामे शूलपाणियक्षकृतोपसर्गावसाने, किं प्रयोजन चेद ? इत्याह-'अहातचं सुमिण पासित्तए'त्ति यथा-येन प्रकारेण तथ्य -सत्यो यथा तथ्यः सर्वथा निर्व्यभिचार इत्यर्थः स स्वप्नं-स्वप्नफलमुपचाराच द्रष्टुं-ज्ञातुम्, अवश्यभाविनो मुक्त्यादेः शुभस्वप्नफलस्य दर्शनाय साधोः स्वप्नदर्शनमुपजायत इति भावः, क्वचित् 'सुजाण'त्ति पाठः, तत्राऽवितथमवश्यभावि सुयान-सुगतिं द्रष्टुं-ज्ञातु सुज्ञानं वा भाविशुभार्थपरिच्छेदं संवेदितुमिति, कल्याणसूचकावितथस्वप्नदर्शनाच भवति चित्तसमाधिरिति चित्तसमाधिस्थानमिदं द्वितीयं, तथा सञ्ज्ञान सञ्ज्ञा सा च यद्यपि हेतुवाददृष्टिवाददीर्घकालिकोपदेशभेदेन क्रमेण विकलेन्द्रियसम्यग्दृष्टिसमनस्कसम्बन्धित्वात्त्रिधा भवति तथापीह दीर्घकालिकोपदेशसञ्ज्ञा ग्राह्येति, सा यस्यास्ति स सञ्ज्ञी-समनस्कस्तस्य ज्ञान सञ्ज्ञिज्ञानं, तचेहाधिकृतत्वज्ञानान्यथानुपपत्तेर्जातिस्मरणमेव, तथा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, कस्मै प्रयोजनाय ? इत्याह-'पुव्वभवे सुमरित्तए'त्ति पूर्वभवान् स्मर्तुं, स्मृतपूर्वभवस्य च संवेगात्समाधिरुत्पद्यते इति समाधिस्थानमेतत् तृतीयमिति, तथा देवदर्शन वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्यते, देवा हि तस्य गुणित्वाद्दर्शनं ददति, किं फल ? इत्याह-दिव्यां देवर्द्धि-प्रधानपरिवारादिरूपां दिव्यां देवद्यु

तिं-विशिष्टां शरीराभरणादिदीप्तिं दिव्य देवानुभावं-उत्तमवैक्रियकरणादिप्रभावं द्रष्टुम्, एतद्दर्शनायेत्यर्थः, देवदर्शनाच्चागमार्थेषु श्रद्धातिशयं नदार्ढ्यं धर्मे बहुमानश्च भवतीति ततश्चित्तसमाधिरिति देवदर्शनं चित्तसमाधिस्थानमिति चतुर्थं, तथा अवधिज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, किमर्थं इत्याह-अवधिना-मर्यादया नियतद्रव्यक्षेत्रकालभावरूपेण लोकं ज्ञातुं लोकज्ञानायेत्यर्थः, भवति च विशिष्टज्ञानाच्चित्तसमाधिरिति पञ्चमं तदिति, एवमवधिदर्शनसूत्रमपीति षष्ठं, तथा मनःपर्यवज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, किमर्थं अत आह-'मणोगते भावे जाणित्तए' अर्द्धतृतीयद्वीपसमुद्रेषु सञ्ज्ञिनां पञ्चेन्द्रियाणां पर्याप्तकानां मनोगतान् भावान् ज्ञातुम्, एतद्ज्ञानायेत्यर्थ इति सप्तमं, तथा केवलज्ञानं वा 'से' तस्यासमुत्पन्नपूर्वं समुत्पद्येत, केवलः-परिपूर्णः लोक्यते-दृश्यते केवलालोकेनेति लोको-लोकालोकस्वरूपं वस्तु तद् ज्ञातुं केवलज्ञानस्य च समाधिभेदत्वा[चित्तसमाधिभेदत्वा]च्चित्तसमाधिस्थानता, इह चामनस्कतया केवलिनश्चित्तं चैतन्यमवसेयमित्यष्टमं, एवं केवलदर्शनसूत्रं नवरं द्रष्टुमिति विशेष इति नवमं, तथा केवलिमरणं वा म्रियेत-कुर्यात् इत्यर्थः, किमर्थं अत आह-'सर्वदुःखप्रहाणाये'ति, इदं तु केवलिमरणं सर्वोत्तमसमाधिस्थानमेवेति दशमामिति, तथा अकर्मभूमिकानां-भोगभूमिजन्मनां मनुष्याणां दशविधा 'रुक्ख'त्ति कल्पवृक्षाः 'उवभोगत्ताए'ति उपभोग्यत्वाय 'उवत्थिय'त्ति उपस्थिता-उपनता इत्यर्थः, तत्र मताङ्गकाः मद्यकारणभूताः 'भिंग'त्ति भाजनदायिनः 'तुडियंग'त्ति तूर्याङ्गसम्पादकाः 'दीव'त्ति दीपशिखाः-प्रदीपकार्यकारिणः 'जोइ'त्ति ज्योतिः-अग्निस्तत्कार्यकारिण इति 'चित्तंग'त्ति चित्राङ्गाः पुष्पदायिनः चित्ररसा-भोजनदायिनः मण्यङ्गाः-आभरणदायिनः गेहाकाराः-भवनत्वेनोपकारिणः 'अणिगिण'त्ति अनग्नत्वं-सवस्त्रत्वं तद्धेतुत्वादनग्ना इति, घोपादीन्येकादश विमाननामानीति ॥ १० ॥

एक्कारस उवासगपडिमाओ प० तं०—दंसणसावए १ कयव्वयकम्मे २ सामाइअकडे ३ पोसहोववासनिरए ४ दिया बंभयारी रत्ति परिमाणकडे ५ दिआवि राओवि बंभयारी असिणाई वियडभोई मोलिकडे ६ सचित्तपरिण्णाए ७ आरंभपरिण्णाए ८ पेसपरिण्णाए ९ उद्दिट्ठभत्तपरिण्णाए १० समणभूए ११ आवि भवइ समणाउसो !, लोगताओ इक्कारसएहिं एक्कारेहिं जोयणसएहिं आबाहाए जोइसते पण्णत्ते, जम्बूदीवे दीवे मंदरस्स पव्वयस्स एक्कारसहिं एक्कवीसेहिं जोयणसएहिं जोइसे चार चरइ, समणस्स णं भगवओ महावीरस्स एक्कारस गणहरा होत्था, तं–इंदभूई अग्गिभूई वायुभूई विअत्ते सोहम्मे मंडिए मोरियपुत्ते अकंपिए अयलभाए मेअज्जे पभासे, मूले नक्खत्ते एक्कारसतारे प०, हेट्ठिमगेविज्जयाणं देवाणं एक्कारसमुत्तरं गेविज्जविमाणसतं भवइत्तिमक्खायं, मंदरे णं पव्वए धरणितलाओ सिहरतले एक्कारसभागपरिहीणे उच्चत्तेणं प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कारस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं एक्कारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एक्कारस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एक्कारस पलिओवमाइं ठिई प०—लंतए कप्पे अत्थेगइयाणं देवाणं एक्कारस सागरोवमाइं ठिई प०, जे देवा बंभं सुबंभं बंभावत्तं बंभप्पभं बंभकंतं बंभवण्णं बंभलेसं बंभज्झयं बंभसिंगं बंभसिट्ठं बंभकूडं बंभुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं एक्कारस सागरोवमाइं ठिई प०, ते णं देवा एक्कारसण्हं अद्धमासाणं आणमंति वा पाणमंति

वा ऊससंति वा नीससंति वा तेसि णं देवाणं एक्कारसण्हं वाससहस्साणं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे एक्कारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ११ ॥

अथैकादशस्थानं, तदपि गतार्थं, नवरमिह प्रतिमाद्यर्थानि सूत्राणि सप्त स्थित्याद्यर्थानि तु नवेति, तत्रोपासन्ते-सेवन्ते श्रमणान् ये ते उपासकाः—श्रावकास्तेषां प्रतिमाः-प्रतिज्ञाः अभिग्रहरूपाः उपासकप्रतिमाः, तत्र दर्शनं—सम्यक्त्वं तत्प्रतिपन्नः श्रावको दर्शनश्रावकः, इह च प्रतिमानां प्रक्रान्तत्वेऽपि प्रतिमाप्रतिमावतोरभेदोपचारात्प्रतिमावतो निर्देशः कृतः, एवमुत्तरपदेष्वपि, अयमत्र भावार्थः-सम्यग्दर्शनस्य शङ्कादिशल्यरहितस्याणुव्रतादिगुणविकलस्य योऽभ्युपगमः सा प्रतिमा प्रथमेति, तथा कृतम्—अनुष्ठितं व्रतानाम्—अनुव्रतादीनां कर्म—तच्छ्रवणज्ञानवाञ्छाप्रतिपत्तिलक्षणं येन प्रतिपन्नदर्शनेन स कृतव्रतकर्मा प्रतिपन्नाणुव्रतादिरिति भाव इतीयं द्वितीया, तथा सामायिकं—सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं कृतं—विहितं देशतो येन स सामायिककृतः, आहिताग्न्यादिदर्शनात् क्तान्तस्योत्तरपदत्वं, तदेवमप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं सामायिककरणं मासत्रयं यावदिति तृतीया प्रतिमेति, तथा पोषं—पुष्टिं कुशलधर्माणां धत्ते यदाहारत्यागादिकमनुष्ठानं तत्पौषधं तेनोपवसनम्—अवस्थानमहोरात्रं यावदिति पौषधोपवास इति, अथवा पौषधं—पर्वदिनमष्टम्यादि तत्रोपवासः-अभक्तार्थः पौषधोपवास इति, इयं व्युत्पत्तिरेव, प्रवृत्तिस्त्वस्य शब्दस्याहारशरीरसत्काराब्रह्मचर्यव्यापारपरिवर्जनेष्विति, तत्र पौषधोपवासे निरतः—आसक्तः पौषधोपवासनिरतः (यः) सः, एवंविधस्य श्रावकस्य चतुर्थी प्रतिमेति प्रक्रमः, अयमत्र भावः—पूर्वप्रतिमात्रयोपेतः अष्टमीचतुर्दश्यमावास्यापौर्णमासीष्वाहारपौषधादि चतुर्विधं पौषधं

शतानि 'एक्कारे'त्ति एकादशयोजनाधिकानि अबाधया-बाधारहितय कृत्वेति शेषः 'जोतिसंते'त्ति ज्योतिश्चक्रपर्यन्तः प्रज्ञप्त इति, इदं च वाचनान्तर व्याख्यातं, उक्तं च—"एक्कारसेक्कवीसा सय एक्कारहिया य एक्कारा । मेरुअलोगाबाहं जोइसचक्कं चरइ ठाइ ॥ १ ॥" इति, अधिकृतवाचनायां पुनरिदमनन्तर व्याख्यातमालापकद्वय व्यत्ययेनाऽपि दृश्यते, 'विमाणसय भवतित्तिमक्खाय'त्ति इह मकारस्यागमिकत्वादयमर्थो-विमानशतं भवतीतिकृत्वा आख्यात-प्ररूपित भगवता अन्यैश्च केवलिभिरिति सुधर्मस्वामिवचन, तथा 'मंदरे ण पव्वए धरणितलाओ सिहरतले एक्कारसभागपरिहीणे उच्चत्तेणं पण्णत्ते' अस्यायमर्थः-मेरुर्भूतलादारभ्य शिखरतलमुपरिभाग यावद्विष्कम्भापेक्षयाऽङ्गुलादेरेकादशभागेनैकादशभागेन परिहीणो—हानिमुपगतः उच्चत्वेन-उपर्युपरि प्रज्ञप्त , इयमत्र भावना-मन्दरो भूतले दश योजनसहस्राणि विष्कम्भतः, ततश्चोच्चत्वेनाङ्गुले गतेऽङ्गुलस्यैकादशभागो विष्कम्भतो हीयते, एवमेकादशस्वङ्गुलेष्वङ्गुल हीयते, एतेनैव न्यायेनैकादशसु योजनेषु योजन एवं एकादशसहस्रेषु सहस्रं ततो नवनवत्यां योजनसहस्रेषु नव सहस्राणि हीयन्ते, ततो भवति सहस्रं विष्कम्भः शिखरे इति, अथवा धरणीतलात्-धरणीतलविष्कम्भात्सकाशाच्छिखरतल—शिखरविष्कम्भमाश्रित्य मेरुरेकादशभागेन परिहीणो भवति, कस्यैकादशभागेन ? इत्याह—'उच्चत्तेणं'ति उच्चत्वस्य, तथाहि-मेरोरुच्चत्व नवनवति सहस्राणि तदेकादशभागो नव तद्धीनो मूलविष्कम्भापेक्षया शिखरतले, शिखरस्य साहस्रिकत्वात्, दशसाहस्रिकत्वाच्च मूलविष्कम्भस्येति, प्रभादीनि द्वादश विमाननामानि ॥ ११ ॥

बारस भिक्खुपडिमाओ पण्णत्ताओ, तंजहा-मासिआ भिक्खुपडिमा दोमासिआ भिक्खुपडिमा तिमासिआ भिक्खुपडिमा चउमासिया भिक्खुपडिमा पंचमासिआ भिक्खुपडिमा छमासिआ भिक्खुपडिमा

सत्तमासिआ भिक्खुपडिमा पढमा सत्तराइंदिआ भिक्खुपडिमा दोचा सत्तराइंदिआ भिक्खुपडिमा तच्चा सत्तराइंदिआ भिक्खुपडिमा अहोराइया भिक्खुपडिमा एगराइया भिक्खुपडिमा, दुवालसविहे सम्भोगे प० तं- उवहीसुअभत्तपाणे अंजलीपग्गहेत्ति य। दायणे य निकाए अ, अब्भुट्ठाणेति आवरे॥ १ ॥ किअकम्मस्स य करणे, वेयावच्चकरणे इअ। समोसरणं संनिसिज्जा य, कहाए अ पबन्धणे॥२॥ दुवालसावत्ते कितिकम्मे प० तं०-दुओ- णयं जहाजायं, कितिकम्मं बारसावयं। चउसिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं ॥१॥ विजया णं राय- हाणी दुवालस जोयणसयसहस्साइं आयामविक्खंभेणं पण्णत्ता, रामे णं बलदेवे दुवालस वाससयाइं सव्वा- उयं पालित्ता देवत्तं गए, मंदरस्स णं पव्वयस्स चूलिआ मूले दुवालस जोयणाइं विक्खंभेणं पण्णत्ता, जंबू- दीवस्स णं दीवस्स वेइआ मूले दुवालस जोयणाइं विक्खंभेणं पण्णत्ता, सव्वजहण्णिआ राई दुवालसमुहुत्ति- आ पण्णत्ता, एवं दिवसोऽवि नायव्वो, सव्वट्ठसिद्धस्स णं महाविमाणस्स उवरिल्लाओ थुभिअग्गाओ दुवालस जोयणाइं उद्धं उप्पइआ ईसिपब्भारनामपुढवी पण्णत्ता, इसिपब्भाराए णं पुढवीए दुवालस नामधेज्जा पण्णत्ता तं जहा-ईसित्ति वा इसिपब्भाराति वा तणूइ वा तणूयतरित्ति वा सिद्धित्ति वा सिद्धालएत्ति वा मुत्तीति वा मुत्तालएत्ति वा बंभेत्ति वा बंभवडिंसएत्ति वा लोकपडिपूरणेत्ति वा लोगग्गचूलिआइ वा, इमीसे णं रय- णप्पभाए पुढवीए अत्थेगइआणं नेरइयाणं बारस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं बारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बारस पलिओवमाइं ठिई प०,

प्रतिपद्यमानस्य चतुरो मासान् यावच्चतुर्थी प्रतिमा भवतीति, तथा पञ्चमीप्रतिमायामष्टम्यादिषु पर्वस्वेकरात्रिकप्रतिमाकारी भवति, ए तदर्थे च सूत्रमधिकृतसूत्रपुस्तकेषु न दृश्यते दशादिषु पुनरुपलभ्यते इति तदर्थं उपदर्शित , तथा शेषदिनेषु दिवा ब्रह्मचारी 'रत्ती'ति रात्रौ किं ? अत आह–परिमाणं–स्त्रीणां तद्भोगानां वा प्रमाण कृत येन स परिमाणकृत इति, अयमत्र भावो–दर्शनव्रतसामायिकाष्ट म्यादिपौषधोपेतस्य पर्वस्वेकरात्रिकप्रतिमाकारिण शेषदिनेषु दिवा ब्रह्मचारिणो रात्रावब्रह्मपरिमाणकृतोऽस्नानसारात्रिभोजिनः अबद्ध- कच्छस्य पञ्च मासान् यावत्पञ्चमी प्रतिमा भवतीति, उक्त च–"[1]अट्ठमीचउद्दसीसु पडिम ठाएगराईय ॥ [पश्चार्द्ध] असिणाणवियड भोई मउलियडो दिवसबंभयारी य । रत्तिं परिमाणकडो पडिमावज्जेसु दियहेसु ॥ १ ॥"त्ति ॥ तथा दिवापि रात्रावपि ब्रह्मचारी 'असि- णाइ'त्ति अस्नायी स्नानपरिवर्जक', कश्चित्पठ्यते–'अनिसाइ'त्ति न निशायामत्तीत्यनिशादी'वियडभोई'त्ति विकटे प्रकटप्रकाशे दिवा न रात्रावित्यर्थः, दिवापि चाप्रकाशदेशे न भुङ्क्ते-अशनाद्यभ्यवहरतीति विकटभोजी 'मोलिकडे'त्ति अबद्धपरिधानकच्छ इत्यर्थः, षष्ठी प्र- तिमेति प्रकृतं, अयमत्र भावः–प्रतिमापञ्चकोक्तानुष्ठानयुक्तस्य ब्रह्मचारिणः षण्मासान् यावत्षष्ठी प्रतिमा भवतीति, तथा 'सचित्त' इति सचित्तवनाहार' परिज्ञात'–तत्स्वरूपादिपरिज्ञानात्प्रत्याख्यातो येन स सचित्ताहारपरिज्ञात श्रावकः सप्तमी प्रतिमेति प्रकृतं, इयमत्र भाव- ना पूर्वोक्तप्रतिमाषट्कानुष्ठानयुक्तस्य प्रासुकाहारस्य सप्त मासान् यावत्सप्तमी प्रतिमा भवतीति, तथा आरम्भ'–पृथिव्याद्युपमर्दनलक्षण परिज्ञात -तथैव प्रत्याख्यातो येनासावारम्भपरिज्ञातः श्राद्धोऽष्टमी प्रतिमेति, इह भावना–समस्तपूर्वोक्तानुष्ठानयुक्तस्यारम्भवर्जनमष्टौ मासान् यावदष्टमी प्रतिमेति, तथा प्रेष्या आरम्भेषु व्यापारणीयाः परिज्ञाताः–तथैव प्रत्याख्याता येन स प्रेष्यपरिज्ञातः श्रावको नव

[1] अष्टमीचतुर्दश्यो प्रतिमां करोत्येकरात्रिकी । अस्नानो विकटभोजी मुकुलितकच्छः दिवा ब्रह्मचारी च । रात्रौ कृतपरिमाण प्रतिमावर्जेषु दिवसेषु ॥ १ ॥

मीति, भावार्थश्चेह पूर्वोक्तानुष्ठायिनः आरम्भं परैरप्यकारयतो नव मासान् यावन्नवमी प्रतिमेति, तथा उद्दिष्टं-तमेव श्रावकमुद्दिश्य कृतं भक्तम्-ओदनादि उद्दिष्टभक्तं तत्परिज्ञातं येनासावुद्दिष्टभक्तपरिज्ञातः प्रतिमेति प्रकृतं, इहायं भावार्थः—पूर्वोदितगुणयुक्तस्याधाकर्मिकभोजनपरिहारवतः क्षुरमुण्डिताशिरसः शिखावतो वा केनापि किञ्चिद्गृहव्यतिकरे पृष्टस्य तज्ज्ञाने सति जानामीति अज्ञाने च सति न जानामीति ब्रुवाणस्य दश मासान् यावदुत्कर्षेण एवंविधविहारस्य दशमी प्रतिमेति, तथा श्रमणो-निर्ग्रन्थस्तद्वद्यस्तदनुष्ठानकरणात् स श्रमणभूतः, साधुकल्प इत्यर्थः, चकारः समुच्चयेऽपिः सम्भावने, भवति श्रावक इति प्रकृतं, हे श्रमण ! हे आयुष्मन् ! इति सुधर्मस्वामिना जम्बूस्वामिनमामन्त्रयतोक्तं इत्येकादशीति, इह चेयं भावना-पूर्वोक्तसमग्रगुणोपेतस्य क्षुरमुण्डस्य कृतलोचस्य वा गृहीतसाधुनेपथ्यस्य ईर्यासमित्यादिकं साधुधर्ममनुपालयतो भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां दत्तेति भाषमाणस्य कस्त्वमिति कस्मिंश्चित्पृच्छति प्रतिमाप्रतिपन्नः श्रमणोपासकोऽहमिति ब्रुवाणस्यैकादश मासान् यावदेकादशी प्रतिमा भवतीति, पुस्तकान्तरे त्वेवं वाचना-दंसणसावए प्रथमा कयवयकम्मे द्वितीया कयसामाइए तृतीया पोसहोववासनिरए चतुर्थी राइभत्तपरिण्णाए पञ्चमी सचित्तपरिण्णाए षष्ठी दिया बंभयारी राओ परिमाणकडे सप्तमी दियावि राओवि बंभयारी असिणाणए यावि भवति वोसट्ठकेसरोमनहे अष्टमी आरंभपरिण्णाए पेसणपरिण्णाए नवमी उदिट्ठभत्तवज्जए दशमी समणभूए यावि भवइत्ति समणाउसो एकादशीति, क्वचित्तु आरम्भपरिज्ञात इति नवमी प्रेष्यारम्भपरिज्ञात इति दशमी उद्दिष्टभक्तवर्जकः श्रमणभूतश्चैकादशीति, तथा जम्बूद्वीपे २ मन्दरस्य पर्वतस्यैकादश 'एगवीस'त्ति एकविंशतियोजनाधिकानि योजनशतानि 'अबाहाए' अबाधया व्यवधानेन कृत्वेति शेषः ज्योतिषं-ज्योतिश्चक्रं चारं-परिभ्रमणं चरति-आचरति, तथा लोकान्तात् णमित्यलङ्कारे एकादश

शतानि 'एक्कारे'पि एकादशयोजनाधिकानि अबाधया–बाधारहितया कृत्वेति शेष 'जोतिसंते'ति ज्योतिश्चक्रपर्यन्तः प्रज्ञप्त इति, इद च वाचनान्तर व्याख्यातं, उक्तं च—"एक्कारसेक्कवीसा सय एक्काराहिया य एक्कारा । मेरुअलोगाबाहं जोइसचंक्क चरइ ठाइ ॥ १ ॥" इति, अधिकृतवाचनायां पुनरिदमनन्तर व्याख्यास्यमालापकद्वयं व्यत्ययेनाऽपि दृश्यते, 'विमाणसय भवतिविमक्खायं'ति इह मकार स्यागमिकत्वाद्यमर्थो–विमानशतं भवतीतिकृत्वा आख्यात–प्रज्ञपितं भगवता अन्यैश्च केवलिभिरिति सुधर्मस्वामिवचन, तथा 'मंदरे ण पव्वए धरणितलाओ सिहरतले एक्कारसभागपरिहीणे उच्चत्तेणं पण्णत्ते' अस्यायमर्थः–मेरुर्भूतलादारभ्य शिखरतलभुपरिभाग याव–द्विष्कम्भापेक्षयाऽङ्गुलादेरेकादशभागेनैकादशभागेन परिहीणो—हानिमुपगतः उच्चत्वेन–उपर्युपरि प्रज्ञप्तः, इयमत्र भावना–मन्दरो भूतले दश योजनसहस्राणि विष्कम्भतः, ततश्चोच्चत्वेनाङ्गुले गतेऽङ्गुलस्यैकादशभागो विष्कम्भतो हीयते, एवमेकादशस्वङ्गुलेष्वङ्गुल हीयते, एतेनैव न्यायेनैकादशसु योजनेषु योजनं एवं एकादशसहस्रेषु सहस्र ततो नवनवत्यां योजनसहस्रेषु नव सहस्राणि हीयन्ते, ततो भवति सहस्र विष्कम्भ शिखरे इति, अथवा धरणीतलात्–धरणीतलविष्कम्भात्सकाशाच्छिखरतल—शिखरविष्कम्भमाश्रित्य मेरुरेकादशभागेन परिहीणो भवति, कस्यैकादशभागेन ? इत्याह—'उच्चत्तेणं'ति उच्चत्वस्य, तथाहि–मेरोरुच्चत्व नवनवतिः सहस्राणि तदेकादशभागो नव तैर्हीनो मूलविष्कम्भापेक्षया शिखरतले, शिखरस्य साहस्रिकत्वात्, दशसाहस्रिकत्वाच मूलविष्कम्भस्येति, भद्रादीनि द्वादश विमाननामानि ॥ ११ ॥

बारस भिक्खुपडिमाओ पण्णत्ताओ, तजहा–मासिआ भिक्खुपडिमा दोमासिआ भिक्खुपडिमा तिमासिआ भिक्खुपडिमा चउमासिया भिक्खुपडिमा पचमासिआ भिक्खुपडिमा छमासिआ भिक्खुपडिमा

सत्तमासिआ भिक्खुपडिमा पढमा सत्तराइंदिआ भिक्खुपडिमा दोच्चा सत्तराइंदिआ भिक्खुपडिमा तच्चा सत्तराइंदिआ भिक्खुपडिमा अहोराइया भिक्खुपडिमा एगराइया भिक्खुपडिमा, दुवालसविहे सम्भोगे प० तं- उवहीसुअभत्तपाणे अंजलीपग्गहेत्ति य। दायणे य निकाए अ, अब्भुट्ठाणेति आवरे॥ १ ॥ किअकम्मस्स य करणे, वेयावच्चकरणे इअ। समोसरणं संनिसिज्जा य, कहाए अ पबन्धणे ॥२॥ दुवालसावत्ते कितिकम्मे प० तं०-दुओ- णयं जहाजायं, कितिकम्मं बारसावयं। चउसिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं ॥१॥ विजया णं राय- हाणी दुवालस जोयणसयसहस्साइं आयामविक्खंभेणं पण्णत्ता, रामे णं बलदेवे दुवालस वाससयाइं सव्वा- उयं पालित्ता देवत्तं गए, मंदरस्स णं पव्वयस्स चूलिआ मूले दुवालस जोयणाइं विक्खंभेणं पण्णत्ता, जंबू- दीवस्स णं दीवस्स वेइआ मूले दुवालस जोयणाइं विक्खंभेणं पण्णत्ता, सव्वजहण्णिआ राई दुवालसमुहुत्ति- आ पण्णत्ता, एवं दिवसोऽवि नायव्वो, सव्वट्ठसिद्धस्स णं महाविमाणस्स उवरिल्लाओ थुभिअग्गाओ दुवालस जोयणाइं उद्धं उप्पइआ ईसिपब्भारनामपुढवी पण्णत्ता, इसिपब्भाराए णं पुढवीए दुवालस नामधेज्जा पण्णत्ता तं जहा-ईसित्ति वा इसिपब्भाराति वा तणूइ वा तणूयतरित्ति वा सिद्धित्ति वा सिद्धालएत्ति वा मुत्तीति वा मुत्तालएत्ति वा बंभेत्ति वा बंभवडिंसएत्ति वा लोकपडिपूरणेत्ति वा लोगग्गचूलिआइ वा, इमीसे णं रय- णप्पभाए पुढवीए अत्थेगइआणं नेरइयाणं बारस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं बारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बारस पलिओवमाइं ठिई प०,

अशुद्धं गृह्णन् प्रेरितः प्रतिपन्नप्रायाश्चित्तो वारत्रयं यावत्सम्भोगार्हश्चतुर्थवेलायां प्रायश्चित्तं प्रतिपद्यमानोऽपि विसम्भोगार्ह इति, विस
म्भोगिकेन-पार्श्वस्थादिना वा संयत्या वा सार्द्धमुपधिं शुद्धमशुद्धं वा निष्कारणं गृह्णन् प्रेरितः प्रतिपन्नप्रायश्चित्तोऽपि वेलात्रयस्योपरि
न सम्भोग्यः, एवमुपधेः परिकर्म परिभोगं वा कुर्वन् सम्भोग्यो विसम्भोग्यश्चेति, उक्तं च—"एगं व दो व तिन्नि व आउट्टंतस्स
होइ पच्छित्तं । [ आलोचयत इत्यर्थः ] आउट्टंतेवि तओ परेण तिण्हं विसंभोगो ॥ १ ॥" त्ति, 'सुयत्ति' सम्भोगिकस्यान्यसांभो-
गिकस्य वोपसम्पन्नस्य श्रुतस्य वाचनाप्रच्छनादिकं विधिना कुर्वन् तथा शुद्धः, तस्यैवाविधिनोपसम्पन्नस्यानुपसम्पन्नस्य वा पा-
र्श्वस्थादेर्वा स्त्रिया वा वाचनादि कुर्वंस्तथैव वेलात्रयोपरि विसम्भोग्यः, तथा 'भत्तपाणे'त्ति उपधिद्वारवदवसेयं, नवरमिह भोजनं दानं
च परिकर्मपरिभोगयोः स्थाने वाच्यमिति, तथा 'अंजलीपग्गहेत्ति य' इहेतिशब्दा उपदर्शनार्थाः चकाराः समुच्चयार्थाः, तत्रोपलक्ष-
णत्वादञ्जलिप्रग्रहस्य वन्दनादिकमपीह द्रष्टव्यं, तथाहि—सम्भोगिकानामन्यसम्भोगिकानां वा संविग्नानां वन्दनकं-प्रणाममञ्जलिप्र-
ग्रहं नमः क्षमाश्रमणेभ्य इति भणनं, आलोचनासूत्रार्थनिमित्तनिपद्याकरणं च कुर्वन् शुद्धः पार्श्वस्थादेरेतानि कुर्वंस्तथैव सम्भोग्यो वि-
सम्भोग्यश्चेति, तथा 'दायणे य' त्ति दानं, तत्र सम्भोगिकः सम्भोगिकाय [ वस्त्रादिभिः शिष्यगणोपग्रहासमर्थे सम्भोगिके ]ऽन्यस-
म्भोगिकाय वा शिष्यगणं यच्छन् शुद्धः, निष्कारणं विसम्भोगिकस्य पार्श्वस्थादेर्वा संयत्या वा तं यच्छंस्तथैव सम्भोग्यो विसम्भोग्य-
श्चेति, तथा 'निकाए य' त्ति निकाचनं छन्दनं निमन्त्रणमित्यनर्थान्तरं, तत्र शय्योपध्याहारैः शिष्यगणप्रदानेन स्वाध्यायेन च
सम्भोगिकः सम्भोगिकं निमन्त्रयन् शुद्धः, शेषं तथैव, तथा 'अब्भुट्ठाणेत्ति यावरे' त्ति अभ्युत्थानमासनत्यागरूपमित्यपरं सम्भोगा-
सम्भोगस्थानमित्यर्थः, तत्राभ्युत्थानं पार्श्वस्थादेः कुर्वंस्तथैवासम्भोग्यः, उपलक्षणत्वादभ्युत्थानस्य किङ्करतां च—प्राघूर्णकग्लानाद्य-

सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं बारस पलिओवमाइं ठिई प०, लंतए कप्पे अत्थेगइयाणं देवाणं बारस सागरोवमाइं ठिई प०, जे देवा महिंदं महिंदज्झयं कंबुं कंबुग्गीवं पुंखं सुपुंखं महापुंखं पुंडं सुपुंडं महापुंडं नरिंदं नरिंदकंतं नरिंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा। तेसि णं देवाणं उक्कोसेणं बारस सागरोवमाइं ठिई प० ते णं देवा बारसण्हं अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसिं णं देवाणं बारसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिया जीवा जे बारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र १२ ॥

द्वादशस्थानमथ, तच्च सुगमं, नवरं स्थितिसूत्रेभ्योऽर्वागेकादश सूत्राण्याह, तत्र भिक्षूणां विशिष्टसंहननश्रुतवतां प्रतिमा—अभिग्रहा भिक्षुप्रतिमाः तत्र मासिक्यादयः सप्तमासिकीपर्यन्ताः सप्त मासेन मासेनोत्तरोत्तरं वृद्धा एकैकाभिर्भक्तपानदत्तिभिरिति, तथा सप्त रात्रिन्दिवानि—अहोरात्राणि यासु ताः सप्तरात्रिन्दिवास्ताश्च तिस्रो भवन्तीति, सप्तनामुपर्यष्टमी प्रथमा सप्तरात्रिन्दिवा एवं नवमी द्वितीया दशमी तृतीया, आसां च तिसृणामप्यनुष्ठानकृतो विशेषः, तथाहि—अष्टम्यां चतुर्थभक्तं तपः ग्रामादेर्बहिस्थानम् पानादिकं च स्थानमिति, नवम्यां तु उत्कटुकासनेन विशेषः, दशम्यां वीरासनादिना, तथा अहोरात्रप्रमाणाऽहोरात्रिकी एकादशी, सा च षष्ठभक्तेन भवतीति विशेषः, एकरात्रिकी—रात्रिप्रमाणा, सा चाष्टमभक्तपर्यन्तरात्रौ प्रलम्बभुजस्य संहृतपादस्येषदवनतकायस्यानिमेषनयनस्येति । तथा सम् एकीभूय समानसमाचाराणां साधूनां भोजनं सम्भोगः, स चोपध्यादिलक्षणविषयभेदात् द्वादशधा, तत्र 'उवही'त्यादिरूपकद्वयं, तत्रोपधिर्वस्त्रपात्रादिस्तं साम्भोगिकः साम्भोगिकेन सार्द्धमुद्गमोत्पादनैषणादोषैर्विशुद्धं गृह्णन् शुद्धः

मणुन्नमसमणुन्ने अदिन्नणाभव्वगिण्हमाणे वा । सम्भोग वीसुकरणं [ पृथक्करणमित्यर्थः ] इयरे य अलंभ पेल्लंति ॥ १ ॥" [ इतरान् पार्श्वस्थादीनित्यर्थः ] तथा 'सन्निसिज्जा य'त्ति सन्निषद्या—आसनविशेषः, सा च सम्भोगासम्भोगकारणं भवति, तथाहि—संनिषद्यागत आचार्यो निषद्यागतेन सम्भोगिकाचार्येण सह श्रुतपरिवर्त्तनां करोति शुद्धः, अथामनोज्ञपार्श्वस्थादिसाध्वीगृहस्थैः सह तदा प्रायश्चित्ती भवति, तथा अक्षनिषद्यां विनाऽनुयोगं कुर्वतः शृण्वतश्च प्रायश्चित्तं तथा निषद्यायामुपविष्टः सूत्रार्थौ पृच्छति अतिचारान् वाऽऽलोचयति यदि तदा तथैवेति, तथा 'कहाए य पबंधणे' त्ति कथा—वादादिका पञ्चधा तस्याः प्रबन्धनं—प्रबन्धेन करणं कथाप्रबन्धनं, तत्र सम्भोगासम्भोगौ भवतः, तत्र मतमभ्युपगम्य पञ्चावयवेन त्र्यवयवेन वा वाक्येन यत्तत्समर्थनं स छलजातिविरहितो भूतार्थान्वेषणपरो वादः, स एव छलजातिनिग्रहस्थानपरो जल्पः, यत्रैकस्य पक्षपरिग्रहोऽस्ति नापरस्य सा दूषणमात्रप्रवृत्ता वितण्डा, तथा प्रकीर्णकथा चतुर्थी, सा चोत्सर्गकथा द्रव्यास्तिकनयकथा वा, तथा निश्चयकथा पञ्चमी, सा चापवादकथा पर्यायास्तिकनयकथा वेति, तत्राद्यास्तिस्रः कथाः श्रमणीवर्जैः सह करोति, श्रमणीभिस्तु सह कुर्वन् प्रायश्चित्ती, चतुर्थवेलायां चालोचयन्नपि विसम्भोगार्ह इति रूपकद्वयस्य संक्षेपार्थः विस्तरार्थस्तु निशीथपञ्चमोद्देशकभाष्यादवसेय इति तथा 'दुवालसावत्ते किइकम्मे'त्ति द्वादशावर्त्तं कृतिकर्म—वन्दनकं प्रज्ञप्तं, द्वादशावर्त्ततामेवास्यानुवदन् शेषांश्च तद्धर्मानभिधित्सुः रूपकमाह—'दुओणए'त्यादि, अवनतिरवनतम्—उत्तमाङ्गप्रधानं प्रणमनमित्यर्थ, द्वे अवनते यस्मिंस्तद्द्व्यवनतं, तत्रैकं यदा प्रथममेव 'इच्छामि खमासमणो ! वंदिउं जावणिज्जाए निसीहियाए'त्ति अभिधायावग्रहानुज्ञापनायावनमतीति, द्वितीयं पुनर्यदाऽवग्रहानुज्ञापनायैवावनमतीति, यथा जातं—श्रमणत्वभवनलक्षणं जन्माश्रित्य योनिनिष्क्रमणलक्षणं च, तत्र रजोहरणमुखवस्त्रिकाचोलपट्टमात्रया श्रमणो जातो रचितकरपुटस्तु योन्या निर्गत एवंभूत

वसतौ किं विश्रामयामि करोमीत्येवं प्रश्नलक्षणां तथाऽभ्यासकरणं—पार्श्वस्थादिधर्माच्च्युतस्य पुनस्तत्रैव संस्थापनलक्षणं, तथा अविमर्कि च—अपृपण्भावलक्षणां कुर्वन्नशुद्धोऽसम्भोग्यश्चापि, एतान्येव यथाऽऽगम कुर्वन् शुद्ध सम्भोग्यश्चेति, तथा 'किइकम्मस्स य करणे'त्ति कृतिकर्म-वन्दनकं तस्य करण—विधानं सद्विधिना कुर्वन् शुद्ध, इतरथा तथैवासम्भोग्य', तत्र चायं विधिः—य' साधुर्वातेन स्तब्धदेह उत्थानादि कर्तुमशक्तः स सूत्रमेवास्खलितादिगुणोपेतमुच्चारयति, एवमावर्तशिरोनमनादि यच्छक्नोति तत्करोत्येव चाशठप्रवृत्तिर्वन्दनविधिरिति भावः, तथा 'वेयावच्चकरणे इय'त्ति वैयावृत्यम्—आहारोपधिदानादिना प्रश्रवणादिमात्रकार्पणादिनाऽधिकरणोपशमनेन सहायदानेन चोपष्टम्भकरण तस्मिन् विषये सम्भोगासम्भोगौ भवत इति, तथा 'समोसरणे'त्ति जिनस्नपनरथानुयानपट्टयात्रादिषु यत्र बहवः साधवो मिलन्ति तत्समवसरणं, इह च क्षेत्रमाश्रित्य साधूनां साधारणोऽवग्रहो भवति, वसतिमाश्रित्य साधारणोऽसाधारणश्चेति, अनेन चान्येऽप्यवग्रहा उपलक्षिताः, ते चानेके, तद्यथा—वर्षावग्रह ऋतुबद्धावग्रहो वृद्धवासावग्रहश्चेति एकैकश्चायं साधारणावग्रहः प्रत्येकावग्रहश्चेति द्विधा, तत्र यत् क्षेत्रं वर्षाकल्पाद्यर्थं युगपत् द्वयादिभि साधुभिर्भिन्नगच्छस्यैरनुज्ञाप्यते स साधारणो यत्तु क्षेत्रमेके साधवोऽनुज्ञाप्याश्रिताः स प्रत्येकावग्रह इति, एवं चैतेष्ववग्रहेषु आकुट्टया अनाभाव्य सचित्तं शिष्यमचित्त वा वस्त्रादि गृह्णन्तोऽनाभोगेन च गृहीतं तदनर्पयन्तः समनोज्ञा अमनोज्ञाश्च प्रायश्चित्तिनो भवन्त्यसंभोग्याश्च, पार्श्वस्थादीनां चावग्रह एव नास्ति तथापि यदि तत् क्षेत्रं क्षुल्लकमन्यत्रैव च संविग्ना निर्वहन्ति ततस्तत् क्षेत्र परिहरन्त्येव, अथ पार्श्वस्थादीनां क्षेत्र विस्तीर्णं संविग्नाश्चान्यत्र न निर्वहन्ति ततस्तत्रापि प्रविशन्ति सचित्तादि च गृह्णन्ति प्रायश्चित्तिनोऽपि न भवन्तीति, आह च[1]—" स

[1] समणोसमणीण्णुवारदसमनाभाव्य गृह्णाति वा । संभोगविसंभोगं एवरांबादाये प्रेरणम्ि ॥ १ ॥

रिक्खजोणिआणं तेरसविहे पओगे प० तं०—सच्चमणपओगे मोसमणपओगे सच्चामोसमणपओगे असच्चामोसमणपओगे सच्चवइपओगे मोसवइपओगे सच्चामोसवइपओगे असच्चामोसवइपओगे ओरालिअसरीरकायपयोगे ओरालिअमीससरीरकायपओगे वेउव्विअसरीरकायपओगे वेउव्विअमीससरीरकायपओगे कम्मसरीरकायपओगे, सूरमंडलं जोयणेणं तरसेहिं एगसट्ठिभागेहिं जोयणस्स ऊणं प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं तेरस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइयाणं तेरस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं तेरस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं तेरस पलिओवमाइं ठिई प०, लंतए कप्पे [सु] अत्थेगइआणं देवाणं तेरस सागरोवमाइं ठिई प०, जे देवा वज्जं सुवज्जं वज्जावत्तं वज्जकंतं वज्जवण्णं वज्जलेसं वज्जरूवं वज्जसिंगं वज्जसिट्ठं वज्जकूडं वज्जुत्तरवडिंसगं वइरं वइरावत्तं वइरप्पभं वइरकंतं वइरवण्णं वइरलेसं वइररूवं वइरसिंगं वइरसिट्ठं वइरकूडं वइरुत्तरवडिंसगं लोगं लोगावत्तं लोगप्पभं लोगकंतं लोगवण्णं लोगलेसं लोगरूवं लोगसिंगं लोगसिट्ठं लोगकूडं लोगुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं तेरस सागरोवमाइं ठिई प० ते णं देवा तेरसहिं अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीस्ससंति वा तेसि णं देवाणं तेरसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिआ जीवा जे तेरसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥सूत्रं १३॥

एव वन्दते तदल्पविरेकाश्च यथाजातं भण्यते, कृतिकर्म–वन्दनक 'बारसावयं' ति द्वादशावर्त्त —सूत्राभिधानगर्भाः कायव्यापार विशेषाः यतिजनप्रसिद्धा यस्मिंस्तत् द्वादशावर्त्त, तथा 'चउसिरं'ति चत्वारि शिरांसि यस्मिंस्तच्चतुःशिरः प्रथमप्रविष्टस्य क्षामणाकाले शिष्याचार्यशिरोद्वयं पुनरपि निष्क्रम्य प्रविष्टस्य द्वयमेवेति भावना, तथा 'तिगुत्त'ति तिसृभिर्गुप्तिभिर्गुप्तः पाठान्तरेपि तिसृभिः( श्च ढाभिः ) गुप्तिभिरेवेति, तथा 'दुपवेस'ति द्वौ प्रवेशौ यस्मिंस्तद् द्विप्रवेश तत्र प्रथमोऽवग्रहमनुज्ञाप्य प्रविशतो द्वितीय पुनर्निर्गत्य प्रविशत इति, 'एगनिक्खमणं'ति एक निष्क्रमणमवग्रहादावश्यिकया निर्गच्छतः, द्वितीयवेलायां त्ववग्रहान्न निर्गच्छति, पादपतित एव सूत्रं समापयतीति, तथा 'विजयरायहानी' असङ्ख्यातत्तमे जम्बूद्वीपे आद्यजम्बूद्वीपविजयाभिधानपूर्वद्वाराधिपस्य विजयाभिधानस्य पल्योपमस्थितिकस्य देवस्य सम्बन्धिनीति, तथा रामो नवमो बलदेवः 'देवत्त गए'त्ति देवत्व–पञ्चमदेवलोके देवत्वं गतः, तथा सर्वजघन्या रात्रिरुत्तरायणपर्यन्ताहोरात्रस्य रात्रिः, सा च द्वादशमौहूर्तिकाचतुर्विंशतिघटिकाप्रमाणा, एवं 'दिवसोवि' त्ति सर्वजघन्यो द्वादशमौहूर्तिक एवेत्यर्थः, स च दक्षिणायनपर्यन्तदिवस इति। माहेन्द्रमाहेन्द्रध्वजकम्बुकम्बुग्रीवादीनि त्रयोदश विमाननामानीति ॥ १२॥

तेरस किरियाठाणा प० तं०—अट्ठावडे अणट्ठावडे हिंसावडे अकम्हावडे दिट्ठिविपरिआसिआवडे मुसावायवत्तिए अदिन्नादाणवत्तिए अज्झत्थिए मानवत्तिए मित्तदोसवत्तिए मायावत्तिए लोभवत्तिए इरिआवहिए नाम तेरसमे, सोहम्मीसाणेसु कप्पेसु तेरस विमाणपत्थडा प०, सोहम्मवडिंसगे णं विमाणे णं अद्धतेरसजोयणसयसहस्साइं आयामविक्खंभेण प०, एवं ईसाणवडिंसगेवि, जलयरपंचिंदियतिरिक्खजोणिआणं अद्धतेरस जाइकुलकोडीजोणीपमुहसयसहस्साइं प०, पाणाउस्स णं पुव्वस्स तेरस वत्थू प०, गब्भवक्कंतियपंचिंदियतिरि–

णाउस्स'त्ति यत्र प्राणिनामायुर्विधानं सभेदमभिधीयते—तत्प्राणायुर्द्वादशं पूर्वं तस्य त्रयोदश वस्तूनि—अध्ययनवद्विभागविशेषाः, तथा गर्भे—गर्भाशये व्युत्क्रान्तिः—उत्पत्तिर्येषां ते गर्भव्युत्क्रान्तिकाः, ते च ते पञ्चेन्द्रियतिर्यग्योनिकाश्चेति विग्रहः, प्रयोजनं—मनोवाक्कायानां व्यापारणं प्रयोगः स त्रयोदशविधः, पञ्चदशानां प्रयोगाणां मध्ये आहारकाहारकमिश्रलक्षणकायप्रयोगद्वयस्य तिरश्चामभावात्, तौ हि संयमिनामेव स्तः, संयमश्च संयतमनुष्याणामेव न तिरश्चामिति, तत्र सत्यासत्योभयानुभयस्वभावाश्चत्वारो मनःप्रयोगाः वाक्प्रयोगाश्चेति अष्टौ पुनरौदारिकादयः पञ्च कायप्रयोगाः एवं त्रयोदशेति, तथा सूरमण्डलस्य—आदित्यविमानवृत्तस्य योजनं सूरमण्डलयोजनं तत् 'ण'मित्यलङ्कारे त्रयोदशभिरेकषष्टिभागैर्येषां भागानामेकषष्ट्या योजनं भवति तैर्भागैर्योजनस्य सम्बन्धिभिरूनं—न्यूनं प्रज्ञप्तमष्टचत्वारिंशद् योजनभागा इत्यर्थः । वज्राभिलापेन द्वादश वइराभिलापेन लोकाभिलापेन चैकादश विमानानीति ॥ १३ ॥

**चउद्दस भूअग्गामा प० तं०—सुहुमा अपज्जत्तआ सुहुमा पज्जत्तया बादरा अपज्जत्तया बादरा पज्जत्तया बेइंदिया अपज्जत्तया बेइंदिया पज्जत्तया तेंदिआ अपज्जत्तया तेंदिया पज्जत्तया चउरिंदिया अपज्जत्तया चउरिंदिया पज्जत्तया पंचिंदिआ असन्निअपज्जत्तया पंचिंदिआ असन्निपज्जत्तया पंचिंदिआ सन्निअपज्जत्तया पंचेंदिआ सन्निपज्जत्तया, चउदस पुव्वा प० तं०—उप्पायपुव्वमग्गेणियं च तइयं च वीरियं पुव्वं । अत्थीनत्थिपवायं तत्तो नाणप्पवायं च ॥१॥ सच्चप्पवायपुव्वं तत्तो आयप्पवायपुव्वं च । कम्मप्पवायपुव्वं पच्चक्खाणं भवे नवमं ॥ २ ॥ विज्जाअणुप्पवायं अवंझपाणाउ बारसं पुव्वं । तत्तो किरियविसालं पुव्वं तह बिंदुसारं च ॥ ३ ॥ अग्गेणीअस्स णं पुव्वस्स चउद्दस वत्थू प०, समणस्स णं भगवओ महावीरस्स चउद्दस**

अथ त्रयोदशस्थानके किञ्चिल्लिख्यते, इह स्थितिसूत्रेभ्योऽर्वागष्ट सूत्राणि, तत्र करणं क्रिया–कर्मबन्धनिबन्धनचेष्टा तस्याः स्थानानि–भेदाः पर्यायाः क्रियास्थानानि, तत्रार्थाय–शरीरस्वजनधर्मादिप्रयोजनाय दण्डः–त्रसस्थावरहिंसा अर्थदण्डः क्रियास्थानमिति-प्रक्रमः १ तद्विलक्षणोऽनर्थदण्डः २ तथा हिंसामाश्रित्य हिंसितवान् हिनस्ति हिंसिष्यति वा अयं वैरिकादिर्ममेत्येवं प्रणिधानेन दण्डो—विनाशनं हिंसादण्डः ३ तथाऽकस्माद्–अनभिसन्धिनोऽन्यवधाय प्रवृत्त्या 'दण्ड'–अन्यस्य विनाशोऽकस्माद्दण्डः ४ तथा दृष्टेः–बुद्धेर्विपर्यासिका विपर्यासिता वा दृष्टिविपर्यासिका दृष्टिविपर्यासिता वा मतिभ्रम इत्यर्थः तया दण्डः–प्राणिवधो दृष्टिविपर्यासिकादण्डो दृष्टिविपर्यासितादण्डो वा, मित्रादेरमित्रादिबुद्ध्या हननमिति भावः ५ तथा मृषावादः–आत्मपरोभयार्थमलीकवचनं स एव प्रत्ययः—कारणं यस्य दण्डस्य स मृषावादप्रत्ययः ६ एवमदत्तादानप्रत्ययोऽपि ७ तथा अध्यात्मनि–मनसि भव आध्यात्मिको बाह्यनिमित्तानपेक्षः शोकादि[दि]भव इति भावः ८ तथा मानप्रत्ययो–जात्यादिमदहेतुकः ९ तथा मित्रद्वेषप्रत्ययः—मातापित्रादीनामल्पेऽप्यपराधे महादण्डनिर्वर्तनमिति भावः १० मायाप्रत्ययो मायानिबन्धनः ११ एवं लोभप्रत्ययोऽपि १२ ऐर्यापथिकः केवलयोगप्रत्ययः कर्मबन्ध–उपशान्तमोहादीनां सातवेदनीयबन्धः १३। तथा 'विमाणपत्थड'त्ति विमानप्रस्तटा उपर्युपरिव्यवस्थिता, तथा 'सोहम्मवडिंसए'त्ति सौधर्मस्य देवलोकस्यार्द्धचन्द्राकारस्य पूर्वापरायतस्य दक्षिणोत्तरविस्तीर्णस्य मध्यभागे त्रयोदशप्रस्तटे शक्रावासभूतं विमानं सौधर्मावतंसकः सौधर्मदेवलोकस्यावतंसक–शेखरक इव प्रधानत्वाद् इत्येवं यथार्थनामकमिति, मकारो वाक्यालङ्कारे, अर्द्धत्रयोदश येषु तान्यर्द्धत्रयोदशानि तानि च तानि योजनशतसहस्राणि चेति विग्रहः सार्द्धानि द्वादशेत्यर्थः, तथाऽर्द्धत्रयोदशानि जातौ–जलचरपञ्चेन्द्रियतिर्यग्जातौ कुलकोटीनां योनिप्रमुखानि–उत्पत्तिस्थानप्रभवानि यानि शतसहस्राणि तानि तथोच्यन्त इति, तथा 'पा

मागरोवमाइं ठिई प० ते णं देवा चउद्दसहिं अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसिणं देवाणं चउद्दसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे चउद्दसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥सूत्रं १४॥

अथ चतुर्दशस्थानकं सुबोधं, नवरमिहाष्टौ सूत्राण्यर्वाक् स्थितिसूत्रादिति, तत्र चतुर्दश 'भूतग्रामा.' भूतानि—जीवाः तेषां ग्रामाः—समूहाः भूतग्रामा', तत्र सूक्ष्माः सूक्ष्मनामकर्मोदयवर्त्तित्वात् पृथिव्यादय एकेन्द्रियाः, किंभूता ?—अपर्याप्तकाः—तत्कर्मोदयादपरिपूर्णस्वकीयपर्याप्तय इत्येको ग्रामः, एवमेते एव पर्याप्तकाः—तथैव परिपूर्णस्वकीयपर्याप्तय इति द्वितीयः, एवं बादरा बादरनामकर्मोदयात् पृथिव्यादय एव, तेऽपि पर्याप्तेतरभेदाद् द्विधा, एवं द्वीन्द्रियादयोऽपि, नवरं पञ्चेन्द्रियाः सञ्ज्ञिनो—मनःपर्याप्त्युपेता इतरे त्वसञ्ज्ञिन इति । तथा 'उप्पायपुव्वे'त्यादि गाथात्रयं, तथा उप्पायपुव्वमग्गेणियं च' त्ति यत्रोत्पादमाश्रित्य द्रव्यपर्यायाणां प्ररूपणा कृता तदुत्पादपूर्वं, यत्र तेषामेवाग्रं–परिमाणमाश्रित्य तदग्रेणीयं, 'तइयं च वीरियं पुव्वं'ति यत्र जीवादीनां वीर्यं प्रोच्यते प्रवादं ... 'अत्थीनत्थिप्पवायं'ति यद्यथा लोके अस्ति नास्ति च तद्यत्र तथोच्यते तदस्तिनास्तिप्रवादं 'तत्तो नाणप्पवायं च'त्ति यत्र ...मत्यादिकं ...भेदादिभिः प्रोच्यते तत् ज्ञानप्रवादमिति ?। 'सच्चप्पवायपुव्वं' ति यत्र सत्यः–संयमः सत्यं वचनं वा सभेदं सप्रतिपक्षं च प्रोच्यते तत्सत्यप्रवादं, ततः 'आयप्पवायपुव्वं च'त्ति यत्रात्मा—जीवोऽनेकनयैः प्रोच्यते तदात्मप्रवादमिति. 'कम्मप्पवायपुव्वं'ति यत्र ज्ञानावरणादि कर्म प्रोच्यते तत्कर्मप्रवादमिति, 'पच्चक्खाणं भवे नवमं' ति यत्र प्रत्याख्यानस्वरूपं वर्ण्यते तत्प्रत्याख्यानमिति ?। 'विज्जाणुप्पवायं'ति यत्रानेकविधा विद्यातिशया वर्ण्यन्ते तद्विद्यानुप्रवादं. 'अबंझमपाणाउ बारसं पुव्वं'ति यत्र ग-

पुराणप्प... [illegible]

करणीसंस्थानेति, इह सप्ताद्यानि पञ्चान्द्रय... [illegible]

पन्नरस परमाहम्मिआ प० तं०–[1]अंबे [2]अंबरिसी चेव, [3]सामे [4]सबलेत्ति आवरे । [5]रुद्दो[6]वरुद्द[7]काले अ, [8]महाकालेत्ति आवरे ॥ १ ॥ [9]असिपत्ते [10]धणु [11]कुम्भे, [12]वालुए [13]वेअरणीति अ । [14]खरस्सरे [15]महाघोसे, एते पन्नरसाहिआ ॥ २ ॥ णमी णं अरहा पन्नरस धणूइं उड्ढं उच्चत्तेणं होत्था, धुवराहू णं बहुलपक्खस्स पडिवए पन्नरसभागं पन्नरस-

समणसाहस्सीओ उक्कोसिआ समणसंपया होत्था, कम्मविसोहिमग्गणं पडुच्च चउद्दस जीवट्ठाणा प० तं०- मिच्छदिट्ठी सासायणसम्मदिट्ठी सम्मामिच्छदिट्ठी अविरयसम्मदिट्ठी विरयाविरए पमत्तसंजए अप्पमत्त- संजए निअट्टीबायरे अनिअट्टिबायरे सुहुमसंपराए उवसामए वा खवए वा उवसंतमोहे खीणमोहे सजोगी केवली अयोगी केवली, भरहेरवयाओ णं जीवाओ चउद्दस चउद्दस जोयणसहस्साइं चत्तारि अ एगुत्तरे जोयणसए छच्च एगूणवीसे भागे जोयणस्स आयामेण प०, एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स चउद्दस रयणा प० तं०-इत्थीरयणे सेणावइरयणे गाहावइरयणे पुरोहियरयणे वड्ढइरयणे आसरयणे हत्थिरयणे असिर यणे दंडरयणे चक्करयणे छत्तरयणे चम्मरयणे मणिरयणे कागिणिरयणे, जम्बुद्दीवे णं दीवे चउद्दस महानईओ पुव्वावरेण लवणसमुद्दं समप्पंति, तं० गंगा सिंधू रोहिआ रोहिअंसा हरी हरिकंता सीआ सीओदा नरकंता नारिकंता सुवण्णकूला रुप्पकूला रत्ता रत्तवई, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं चउद्दस पलिओवमाइं ठिई प०, पंचमीए णं पुढवीए अत्थेगइयाणं नेरइयाणं चउद्दस सागरोवमाइं ठिई प०, असुर कुमाराणं देवाणं अत्थेगइयाणं चउद्दस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं चउद्दस पलिओवमाइं ठिई प०, लंतए कप्पे[सु] देवाणं अत्थेगइयाणं चउद्दस सागरोवमाइं ठिई प०, महासुक्के कप्पे देवाणं अत्थेगइयाणं जहण्णेणं चउद्दस सागरोवमाइं ठिई प० जे देवा सिरिकंतं सिरिमहिअं सिरिसोमनसं लंतयं काविट्ठं महिंदं महिंदकंतं महिंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं चउद्दस

सागरोवमाइं ठिई प० ते णं देवा चउद्दसहिं अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति
वा तेसिणं देवाणं चउद्दसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे चउद्दस-
हिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥सूत्रं १४॥

अथ चतुर्दशस्थानकं सुबोधं, नवरमिहाष्टौ सूत्राण्यर्वाक् स्थितिसूत्रादिति, तत्र चतुर्दश 'भूतग्रामाः' भूतानि—जीवाः तेषां ग्रा-
माः—समूहाः भूतग्रामाः, तत्र सूक्ष्माः सूक्ष्मनामकर्मोदयवर्त्तित्वात् पृथिव्यादय एकेन्द्रियाः, किंभूता ?—अपर्याप्तकाः—तत्कर्मोदया-
दपरिपूर्णस्वकीयपर्याप्तय इत्येको ग्रामः, एवमेते एव पर्याप्तकाः—तथैव परिपूर्णस्वकीयपर्याप्तय इति द्वितीयः, एवं बादरा बादरनामक-
र्मोदयात् पृथिव्यादय एव, तेऽपि पर्याप्तेतरभेदाद् द्विधा, एवं द्वीन्द्रियादयोऽपि, नवरं पञ्चेन्द्रियाः सञ्ज्ञिनो—मनःपर्याप्त्युपेता इतरे
त्वसञ्ज्ञिन इति । तथा 'उप्पायपुव्वे'त्यादि गाथात्रयं, तथा उप्पायपुव्वमग्गेणियं च' त्ति यत्रोत्पादमाश्रित्य द्रव्यपर्यायाणां प्ररूपणा
कृता तदुत्पादपूर्वं, यत्र तेषामेवाग्रं-परिमाणमाश्रित्य तदग्रेणीयं, 'तइय च वीरियं पुव्वं'ति यत्र जीवादीनां वीर्यं प्रोच्यते-प्ररूप्यते
तद्वीर्यप्रवादं 'अत्थीनात्थिपवायं'ति यद्यथा लोके अस्ति नास्ति च तद्यत्र तथोच्यते तदस्तिनास्तिप्रवादं 'तत्तो नाणप्पवायं च'त्ति यत्र
ज्ञानं—मत्यादिकं स्वरूपभेदादिभिः प्रोच्यते तत् ज्ञानप्रवादमिति १। 'सच्चप्पवायपुव्वं' ति यत्र सत्यः—संयमः सत्यं वचनं वा सभेदं
सप्रतिपक्षं च प्रोच्यते तत्सत्यप्रवादपूर्वं, ततः 'आयप्पवायपुव्वं च'त्ति यत्रात्मा—जीवोऽनेकनयैः प्रोच्यते तदात्मप्रवादमिति. 'कम्म-
प्पवायपुव्वं'ति यत्र ज्ञानावरणादि कर्म प्रोच्यते तत्कर्मप्रवादमिति, 'पच्चक्खाणं भवे नवमं' ति यत्र प्रत्याख्यानस्वरूपं वर्ण्यते तत्प्र-
त्याख्यानमिति २। 'विज्जाअणुप्पवायं'ति यत्रानेकविधा विद्यातिशया वर्ण्यन्ते तद्विद्यानुप्रवादं, 'अवंझपाणाउ बारसं पुव्वं'ति यत्र स-

न्यग्ज्ञानादयोऽत्र वन्ध्याः-अफला पर्यन्ते तदेव वन्ध्यमेकादशं, यत्र प्राणा-जीवा आयुश्चानेकधा वर्ण्यन्ते तत्प्राणायुरिति द्वादश पूर्वं, 'त
था किरियविसाल'त्ति यत्र क्रियाः-कायिक्यादिकाः विशाला-विस्तीर्णाः सभेदत्वादभिधीयन्ते तत् क्रियाविशालं 'पुव्वं तह बिंदुसार
च' त्ति लोकशब्दोऽत्र लुप्तो द्रष्टव्यः, ततश्च लोकस्य बिन्दुरिवाक्षरस्य सारं सर्वोत्तमं यत्तल्लोकबिन्दुसारमिति ३। तथा
'चोद्दस वत्थूणि'त्ति द्वितीयपूर्वस्य वस्तूनि—विभागविशेषाः तानि च चतुर्दश मूलवस्तूनि, चूलावस्तूनि तु द्वादशेति,
तथा 'सारस्सिओ'त्ति सहस्राण्येव साहस्र्यं, तथा 'कम्मविसोही'त्यादि, कर्मविशोधिमार्गणां प्रतीत्य—ज्ञानावरणादिकर्मविशु
द्धिगवेषणामाश्रित्य चतुर्दश जीवस्थानानि—जीवभेदाः प्रज्ञप्ताः, तद्यथा—मिथ्या—विपरीता दृष्टिर्यस्यासौ मिथ्यादृष्टिः
—उदितमिथ्यात्वमोहनीयविशेषः, तथा 'सासायणसम्मदिट्ठि'त्ति सहोपशमिकसम्यक्त्वरसास्वादनेन वर्तते इति सास्वादनः, षडावलि
कान्यायेन प्रायः परित्यक्तसम्यक्त्वः तदुत्तरकाल षडावलिकाः, तथा चोक्तम्—'उवसमसंमत्ताओ चयओ मिच्छं अपावमाणस्स ।
सासायणसम्मत्तं तदन्तरालम्मि छावलिय ॥ १ ॥'' इति, सास्वादनश्चासौ सम्यग्दृष्टिश्चेति विग्रहः, सम्मामिच्छदिट्ठि'त्ति सम्यक् च मि-
थ्या च दृष्टिरस्येति सम्यग्मिथ्यादृष्टिः—उदितदर्शनमोहनीयविशेषः, तथाऽविरतसम्यग्दृष्टिर्देशविरतिविरहितः विरताविरतो-देशविरत'
श्रावक इत्यर्थः, प्रमत्तसंयत —किञ्चित्प्रमादवान् सर्वविरत', अप्रमत्तसंयतः—सर्वप्रमादरहितः स एव, 'नियट्टी०' इह क्षपकश्रेणि-
मुपशमश्रेणिं वा प्रतिपन्नो जीवः क्षीणदर्शनसप्तक उपशान्तदर्शनसप्तको वा निवृत्तिबादर उच्यते, तत्र निवृत्तिः—यत्गुणस्थानकं सम-
कालप्रतिपन्नानां जीवानामध्यवसायभेदः तत्प्रधानो बादरो-बादरसम्परायो निवृत्तिबादरः, 'अनियट्टिबायरे'त्ति अनिवृत्तिबादरः, स
च कषायाष्टकक्षपणारम्भान्नपुंसकवेदोपशमनारम्भाच्चारभ्य बादरलोभखण्डक्षपणोपशमने यावद्भवतीति, 'सुहुमसंपराए'त्ति सूक्ष्मः—

सञ्ज्वलनलोभासङ्ख्येयखण्डरूपः सम्परायः—कषायो यस्य स सूक्ष्मसम्परायो—लोभानुवेदक इत्यर्थः, अयं च द्विविध इत्याह—उपशमको वा—उपशमश्रेणीप्रतिपन्नः क्षपको वा—क्षपकश्रेणिप्रतिपन्न इति दशमं जीवस्थानमिति, तथा उपशान्तः—सर्वथानुदयावस्थो मोहो—मोहनीयं कर्म यस्य स उपशान्तमोहः, उपशमवीतराग इत्यर्थः, अयं चोपशमश्रेणिसमाप्तावन्तर्मुहूर्त्तं भवति, ततः प्रच्यवत् एवेति, तथा क्षीणो—निःसत्ताकीभूतो मोहो यस्य स तथा, क्षयवीतराग इत्यर्थः, अयमप्यन्तर्मुहूर्त्तमेवेति, तथा सयोगी केवली—मनःप्रभृतिव्यापारवान् केवलज्ञानीति, तथाऽयोगीकेवली—निरुद्धमनःप्रभृतियोगः शैलेशीगतो ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं यावदिति चतुर्दशं जीवस्थानमिति, 'भरहे' इत्यादि, भरतैरावतयोर्जीवा, इह भरतमैरवतं चारोपितगुणकोदण्डाकारं यतस्त [तस्त]योर्जीवे भवतः, तत्र भरतस्य हिमवतोऽर्वागनन्तरप्रदेशश्रेणिर्जीवा ऐरावतस्य च शिखरिणः परतोऽनन्तरप्रदेशश्रेणीति भरतैरावतजीवा, 'चाउरंतचक्कवट्टिस्स' त्ति चत्वारोऽन्ता—विभागा यस्यां सा चतुरन्ता भूमिः तत्र भवः स्वामितयेति चातुरन्तः स चासौ चक्रवर्त्ती चेति विग्रहः, रत्नानि—स्वजातीयमध्ये समुत्कर्षवन्ति वस्तूनीति, यदाह—"रत्नं निगद्यते तज्जातौ जातौ यदुत्कृष्ट"मिति, 'गाहावइ'त्ति गृहपतिः—कोष्ठागारिकः 'पुरोहिय'त्ति पुरोहितः—शान्तिकर्मादिकारी 'वड्ढइ'त्ति वर्द्धकिः—रथादिनिर्मापयिता मणिः—पृथिवीपरिणामः काकिणी—सुवर्णमयी आधिकरणीसंस्थानेति, इह सप्ताद्यानि पञ्चेन्द्रियाणि शेषाण्येकेन्द्रियाणीति, श्रीकान्तमित्यादीन्यष्टौ विमाननामानीति ॥ १४ ॥

**पन्नरस परमाहम्मिआ प० तं०—[1]अंबे [2]अंबरिसी चेव, [3]सामे [4]सबलेत्ति आवरे । [5]रुद्दो[6]वरुद्द[7]काले अ, [8]महाकालेत्ति आवरे ॥ १ ॥ [9]असिपत्ते [10]धणु [11]कुम्भे, [12]वालुए [13]वेअरणीति अ । [14]खरस्सरे [15]महाघोसे, एते पन्नरसाहिआ ॥ २ ॥ णमी णं अरहा पन्नरस धणूइं उड्ढं उच्चत्तेणं होत्था, धुवराहू णं बहुलपक्खस्स पडिवए पन्नरसभागं पन्नरस-**

भागेण चंदस्स लेस आवरेत्ताण चिट्ठति, त जहा–पढमाए पढम भाग बीआए दुभाग तइआए तिभाग चउत्थीए चउभाग पञ्चमीए पञ्चभाग छट्ठीए छभाग सत्तमीए सत्तभाग अट्ठमीए अट्ठभाग नवमीए नवभाग दसमीए दसभाग एक्कारसीए एक्कारसभाग बारसीए बारसभाग तेरसीए तेरसभाग चउद्दसीए चउद्दसभाग पन्नरसेसु पन्नरसभागं, त चेव सुक्कपक्खस्स य उवदंसेमाणे उवदंसेमाणे चिट्ठति, तंजहा–पढमाए पढम भाग जाव पन्नरसेसु पन्नरसभाग, छ णक्खत्ता पन्नरसमुहुत्तसंजुत्ता प० त०—सतभिसय भरणि अद्दा असलेसा साई तहा जेट्ठा । एते छण्णक्खत्ता पन्नरसमुहुत्तसंजुत्ता ॥ १ ॥ चेत्तासोएसु णं मासेसु पन्नरस मुहुत्तो दिवसो भवति एवं चेत्तमासेसु पण्णरसमुहुत्ता राई भवति, विज्जाअणुप्पवायस्स णं पुव्वस्स पन्नरस वत्थू पण्णत्ता, मणूसाण पण्णरसविहे पओगे प० त०—सच्चमणपओगे मोसमणपओगे सच्चमोसमण पओगे असच्चामोसमणपओगे सच्चवइपओगे मोसवइपओगे सच्चमोसवइपओगे असच्चामोसवइपओगे ओरालिअसरीरकायपओगे ओरालिअमीससरीरकायपओगे वेउव्वियसरीरकायपओगे वेउव्वियमीससरीरका-यपओगे आहारयसरीरकायप्पओगे आहारयमीससरीरकायप्पओगे कम्मयसरीरकायपओगे, इमीसे णं रयण-प्पभाए पुढवीए अत्थेगइआणं नेरइआणं पण्णरस पलिओवमाइं ठिई प०, पंचमीए पुढवीए अत्थेगइयाणं नेरइआणं पण्णरस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं पण्णरस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं पण्णरस पलिओवमाइं ठिई प०, महासुक्के कप्पे अत्थे-

गइआणं देवाणं पण्णरस सागरोवमाइं ठिई प०, जे देवा णंदं सुणंदं णंदावत्तं णंदप्पभं णंदकंतं णंदवण्णं णंदलेसं णंदज्झयं णंदसिंगं णंदसिट्ठं णंदकूडं णंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं पण्णरस सागरोवमाइं ठिई प० ते णं देवा पण्णरसण्हं अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसि णं देवाणं पण्णरसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे पन्नरसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १५ ॥

अथ पञ्चदशस्थानके सुगमेऽपि किञ्चिल्लिख्यते, इह स्थितेरर्वाक् सप्त सूत्राणि, तत्र परमाश्च तेऽधार्मिकाश्च संक्लिष्टपरिणामत्वात्परमाधार्मिकाः–असुरविशेषाः, ये तिसृषु पृथिवीषु नारकान् कदर्थयन्तीति, तत्रांबेत्यादि श्लोकद्वयं, एते च व्यापारभेदेन पञ्चदश भवन्ति, तत्र 'अंबे' त्ति यः परमाधार्मिकदेवो नारकान् हन्ति पातयति बध्नाति नीत्वा चाम्बरतले विमुञ्चति सोऽम्ब इत्यभिधीयते १, 'अम्बरिसी चेव' त्ति यस्तु नारकान्निहतान् कल्पनिकाभिः खण्डशः कल्पयित्वा भ्राष्ट्रपाकयोग्यान् करोति सोऽम्बरिषीति २ 'सामे' त्ति यस्तु रज्जुहस्तप्रहारादिना शातनपातनादि करोति वर्णतश्च श्यामः स श्याम इति ३, 'सबलेत्ति यावरे' त्ति शबल इति चापरः परमाधार्मिक इति प्रक्रमः, स चान्त्रवसाहृदयकालेयकादीन्युत्पाटयति वर्णतश्च शबलः कर्बुर इत्यर्थः ४, 'रुद्दोवरुद्दे' त्ति यः शक्तिकुन्तादिषु नारकान् प्रोतयति स रौद्रत्वाद्रौद्र इति ५, यस्तु तेषामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्र इति ६, 'काले' त्ति यः कण्ड्वादिषु पचति वर्णतः कालश्च स कालः ७, महाकाल इति चापरः परमाधार्मिक इति प्रक्रमः स च श्लक्ष्णमांसानि खण्डयित्वा

खादयति घणतम महाकाल इति ८, असिपत्ते'त्ति असिः—खड्गस्तदाकारपत्रवद्वनं विकुर्व्य यस्तत्समाश्रितान् नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः ९, 'धणु'त्ति यो धनुर्विमुक्तार्धचन्द्रादिबाणैः कर्णादीनां छेदनभेदनादि करोति स धनुरिति १०, 'कुंभे'त्ति यः कुम्भादिषु तान् पचति स कुम्भः ११, 'वालु'त्ति यः कदम्बपुष्पाकारासु वज्राकारासु वैक्रियवालुकासु तप्तासु चणकानिव तान् पचति स वालुक इति १२, 'वेयरणी इय'त्ति वैतरणीति च परमाधार्मिकः, स च पूयरुधिरत्रपुताम्रादिभिरतितापात्कलकलायमानैर्भृतां विरूप तरणं प्रयोजनमस्या इति वैतरणीति यथार्था नदीं विकुर्व्य तत्तारणेन कदर्थयति नारकानीति १३, 'खरस्सरे'त्ति यो वज्रकण्टकाकुलं शाल्मलीवृक्षं नारकमारोप्य खरस्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वर इति १४, 'महाघोस'त्ति यो भीतान् पलायमानान् नारकान् पशूनिव वाटकेषु महाघोषं कुर्वन्निरुणद्धि स महाघोष इति १५, 'एवमेव [एमे] पन्नरसाहिय'त्ति यो 'एव'मित्यस्मादिक्रमेणैते परमाधार्मिकाः पञ्चदशाख्याताः—कथिता जिनैरिति ॥ २ ॥ 'धुवराहू य' मित्यादि, द्विविधो राहुः भवति—पर्वराहुर्ध्रुवराहुश्च, तत्र यः पर्वणि—पौर्णमास्याममावास्यायां वा चन्द्रादित्ययोरुपरागं करोति स पर्वराहुः, यस्तु चन्द्रस्य सदैव सन्निहितः सञ्चरति स ध्रुवराहुः, आह च—"किण्हं राहुविमाणं निच्चं चंदेण होइ अविरहियं । चउरंगुलमप्पत्तं हेट्ठा चंदस्स तं चरइ ॥ १ ॥" त्ति, तत्रोऽसौ ध्रुवराहु' 'म'मित्यलङ्कारे बहुलपक्षस्य प्रतीतस्य 'पाडिवयं' ति प्रतिपदं—प्रथमतिथिमादौ कृत्वेति वाक्यशेषः पञ्चदशभाग पञ्चदशभागेनेति वीप्सायां द्विर्वचनादि यथा पदं पदेन गच्छतीत्यादिषु, प्रतिदिनं पञ्चदशभागं पञ्चदशभागमिति भावः, चन्द्रस्य प्रतीतस्य लेश्यामिति लेश्या—दीप्तिस्तत्कारणत्वात् मण्डलं लेश्या तामावृत्य—आच्छाद्य तिष्ठति, एतदेव दर्शयन्नाह—'तयथे'त्यादि 'पढ

१ कृष्णं राहुविमानमपरित्यागि नित्यं चन्द्रेण भवत्यविरहितम् । चतुरङ्गुलमप्राप्तमधस्ताच्चन्द्रस्य तच्चरति ॥ १ ॥

माइ, त्ति प्रथमायां तिथ्यां प्रथमं भागं पञ्चदशांशलक्षणं चन्द्रलेश्याया आवृत्य तिष्ठतीति प्रक्रमः, अनेन क्रमेण यावत् 'पन्नरसेसु' त्ति पञ्चदशसु दिनेषु पञ्चदशं पञ्चदशभागमावृत्य तिष्ठति, 'तं चेव' त्ति तमेव पञ्चदशभागं शुक्लपक्षस्य प्रतिपदादिषु चन्द्रलेश्याया उपदर्शयन् २—पञ्चदशभागतः स्वयमपसरणतः प्रकटयन् प्रकटयन् तिष्ठति ध्रुवराहुरिति, इह चायं भावार्थः—षोडशभागीकृतस्य चन्द्रस्य षोडसभागोऽवस्थित एवास्ते, ये चान्ये भागास्तान् राहुः प्रतिदिनमेकैकं भागं कृष्णपक्षे आवृणोति शुक्लपक्षे तु विमुञ्चतीति, उक्तं च ज्योतिष्करण्डके—[1]सोलसभागे काऊण उडुवई हायएत्थ पन्नरसं । तत्तियमेत्ते भागे पुणोवि परिवड्ढई जोण्हा ॥ १ ॥ इति, ननु चन्द्रविमानस्य पञ्चैकषष्टिभागन्यूनयोजनप्रमाणत्वात् राहुविमानस्य च ग्रहविमानत्वेनार्द्धयोजनप्रमाणत्वात्कथं पञ्चदशैर्दिनैश्चन्द्रविमानस्य महत्त्वेनेतरस्य च लघुत्वेन सर्वावरणं स्यात् ? इति, अत्रोच्यते, यदिदं ग्रहविमानानामर्द्धयोजनमिति प्रमाणं तत्प्रायिकमिति राहोर्ग्रहस्य योजनप्रमाणमपि विमानं सम्भाव्यते, लघीयसोऽपि वा राहुविमानस्य महता तमिस्त्ररश्मिजालेन तस्यावरणान्न दोष इति, तथा षड् नक्षत्राणि पञ्चदश मुहूर्त्तान् यावच्चन्द्रेण सह संयोगो येषां तानि पञ्चदशमुहूर्त्तसंयोगानि, तद्यथा—'सयभिसया भरणीओ अद्दा अस्सेस साइ जेट्ठा य । एए छन्नक्खत्ता पन्नरसमुहुत्तसंजुत्ता ॥ १ ॥' संयुक्तं संयोग इति, तथा 'चेत्तासोएसु मासेसु'—त्ति, स्थूलन्यायमाश्रित्य चैत्रेऽश्वयुजि च मासे पञ्चदशमुहूर्त्तो दिवसो भवति रात्रिश्च, निश्चयतस्तु मेषसङ्क्रान्तिदिने तुलासंक्रान्तिदिने चैवं दृश्यमिति । 'पओगे' त्ति प्रयोजनं प्रयोगः सपरिस्पन्द आत्मनः क्रियापरिणामो व्यापार इत्यर्थः, अथवा प्रकर्षेण युज्यते—संयुज्यते सम्बध्यतेऽनेन क्रियापरिणामेन कर्मणा सहात्मेति प्रयोगः, तत्र सत्यार्थालोचननिबन्धनं मनः सत्यमनस्तस्य प्रयोगो—व्यापारः

---

[1] षोडश भागान् कृत्वोडुपतिर्हीयतेऽत्र पञ्चदश । तावन्मात्रान् भागान् पुनरपि परिवर्धते ज्योत्स्ना ॥ १ ॥

मत्यमनःप्रयोग', एवं शेषेष्वपि, नवरमौदारिकशरीरकायप्रयोग औदारिकशरीरमेव पुद्गलस्कन्धसमुदायरूपत्वेनोपचीयमानत्वात् काय स्तस्य प्रयोग इति विग्रहः, अय च पर्याप्तकस्यैव वेदितव्यः, तथौदारिकमिश्रकायप्रयोगः अयं चापर्याप्तकस्येति, इह चोत्पत्तिमाश्रि त्यौदारिकस्य प्रारम्भस्य प्रधानत्वादौदारिकं कार्मणेन मिश्रं, यदा तु मनुष्यः पञ्चेन्द्रियतिर्यङ् बादरवायुकायिको वा वैक्रियं करोति तदौदारिकस्य प्रारम्भकत्वेन प्रधानत्वादौदारिको वैक्रियेण मिश्रो यावद्वैक्रियपर्याप्त्या न पर्याप्तिं गच्छति, एवमाहारकेणाप्यौदारिकस्य मिश्रताऽवसेयेति, तथा वैक्रियशरीरकायप्रयोगो वैक्रियपर्याप्तकस्य, तथा वैक्रियमिश्रशरीरकायप्रयोगस्तदपर्याप्तकस्य देवस्य नारकस्य वा कार्मणेनैव लब्धिवैक्रियपरित्यागे वा औदारिकप्रवेशाद्धायामौदारिकोपादानाय प्रवृत्तेर्वैक्रियप्राधान्यादौदारिकेणाऽपि मिश्रतेत्येके, तथा आहारकशरीरकायप्रयोगस्तदभिनिर्वृत्तौ सत्यां तस्यैव प्रधानत्वात्, तथा आहारकमिश्रशरीरकायप्रयोगः औदारिकेण सहाहारकपरित्या-गेनेतरग्रहणायोद्यतस्य, एतदुक्तं भवति–यदाहारकशरीरीभूत्वा कृतकार्यं पुनरप्यौदारिकं गृह्णाति तदाऽऽहारकस्य प्रधानत्वादौदारिके प्रवेशं प्रति व्यापारभावाद्यावत् सर्वथैव न परित्यजत्याहारकं तावदौदारिकेण सह मिश्रतेति, आह–न तथेन सर्वथा मुक्तं पूर्वनिर्वर्तितं विद्यत्येव तत्कथं गृह्णाति ?, सत्यं, तथाप्यौदारिकशरीरोपादानार्थं प्रवृत्त इति गृह्णात्येव, तथा कार्मणशरीरकायप्रयोगो विग्रहे समुद्-घातगतस्य च केवलिनस्तृतीयचतुर्थपञ्चमसमयेषु भवतीति ॥ १५ ॥

सोलस य गाहा सोलसगा प० तं०–समए[1] वेयालिए[2] उवसग्गपरिन्ना[3] इत्थीपरिण्णा[4] निरयविभत्ती[5] महावीरथुई[6] कुसीलपरिभासिए[7] वीरिए[8] धम्मे[9] समाही[10] मग्गे[11] समोसरणे[12] आहातहिए[13] गंथे[14] जमईए[15] गाहासोलसमे[16] सोलसगे, सोलस कसाया प० तं०–अणंताणुबंधी कोहे अणंताणुबंधी माणे अणंताणुबंधी माया अणंताणुबंधी लोभे

अपच्चक्खाणकसाए कोहे अपच्चक्खाणकसाए माणे अपच्चक्खाणकसाए माया अपच्चक्खाणकसाए लोभे पच्च-क्खाणावरणे कोहे पच्चक्खाणावरणे माणे पच्चक्खाणावरणा माया पच्चक्खाणावरणे लोभे संजलणे कोहे संजलणे माणे संजलणे माया संजलणे लोभे, मंदरस्स णं पव्वयस्स सोलस नामधेया पं० तं० मंदर[1]मेरु[2]मणोरम[3] सुदंसण[4] सयंपभे[5] य गिरिराया[6]। रयणुच्चय[7] पियदंसण[8] मज्झे लोगस्स[9] नाभी[10] य ॥ १ ॥ अत्थे अ[11] सूरिआवत्ते[12] सूरिआवरणेत्ति[13] अ। उत्तरे अ[14] दिसाई अ[15], वडिंसे[16] इअ सोलसमे ॥२॥ पासस्स ण अरहतो पुरिसादाणीयस्स सोलस समणसाहस्सीओ उक्कोसिआ समण संपदा होत्था, आयप्पवायस्स णं पुव्वस्स णं सोलस वत्थू प०, चमरबलीणं ऊवारियालेणे सोलस जोयणसहस्साइं आयामविक्खंभेणं प०, लवणे णं समुद्दे सोलस जोयणसहस्साइं उस्सेहपरिवुड्ढीए प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं सोलस पलिओवमाइं ठिई प०, पंचमाए पुढविए अत्थेगइयाणं नेरइयाणं सोलस सागरोवमा ठिती प०, असुरकुमाराणं देवाणं अत्थेगइयाणं सोलस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं सोलस पलिओवमाइं ठिई प०, महासुक्के कप्पे देवाणं अत्थेगइयाणं सोलस सागरोवमाइं ठिई प०, जे देवा आवत्तं विआवत्तं नंदिआवत्तं महाणंदिआवत्तं अंकुसं अंकुसपलंबं भद्दं सुभद्दं महाभद्दं सव्वओभद्दं भद्दुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं सोलस सागरोवमाइं ठिई प० ते णं देवा सोलसहिं-

अद्धमासाण आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा तेसि णं देवाणं सोलसवाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ, भव्वसिद्धिआ जीवा जे सोलसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र १६ ॥

अथ षोडशस्थानकमुच्यते सुगमं चेदं, नवरं गाथाषोडशकादीनि त्रिविधेभ्य आरात्सप्त सूत्राणि, तत्र सूत्रकृताङ्गस्य प्रथमश्रुतस्कन्धे षोडशाध्ययनानि तेषां च गाथाभिधानं षोडशमिति गाथाभिधानमध्ययनं षोडशं येषां तानि गाथाषोडशकानि, तत्र 'समए' त्ति नास्तिकादिसमयप्रतिपादनपरमध्ययनं समय एवोच्यते, वैतालीयच्छन्दोजातिवद्धं वैतालीयम्, एवं शेषाणां यथाभिधेयं नामानि, 'समोसरणे'त्ति समवसरणं त्रयाणां त्रिषष्ट्यधिकानां प्रवादिशतानां मतपिण्डनरूपं, 'आहातहिए'त्ति यथा वस्तु तथा प्रतिपाद्यते यत्र तद्याथातथिकं, प्र याभिधायकं ग्रन्थ, 'जमइए'त्ति यमकीयं यमकनिबद्धसूत्रं 'गाहे'त्ति प्राक्तनपञ्चदशाध्ययनार्थस्य गानाद्गाथा गाथा वा तत्प्रतिष्ठाभूतत्वादिति, मेरुनामसूत्रे गाथा श्लोकश्च 'मज्झे लोगस्सनाभी य'त्ति लोकमध्ये लोकनाभिमित्यर्थः ।१। 'उत्तरे य'त्ति भरतादीनामुत्तरदिग्वर्त्तित्वात् यदाह—'सव्वेसिं उत्तरो मेरु'त्ति [सर्वेषामुत्तरो मेरु] 'दिसाइ य' त्ति दिशामादिर्दिगादिरित्यर्थः, 'वर्डिसे इय'त्ति अवतंस—शेखरः स इवावतंस इति, 'पुरिसादाणीय'त्ति पुरुषाणां मध्ये आदेयस्येत्यर्थः, तथा आत्मप्रवादपूर्वस्य सप्तमस्य, तथा चमरबल्योर्दक्षिणोत्तरयोरसुरकुमारराजयोः, 'उवारियालेणे'त्ति चमरचञ्चाबलीचञ्चाभिधानराजधान्योर्मध्यभागे सन्नूयनयोर्मध्योन्नता ऽवतरत्पार्श्वपीठरूपे आवतारिकलयने षोडश योजनसहस्राण्यायामविष्कम्भाभ्यां प्रज्ञप्तावयोरिति, तथा लवणसमुद्रे मध्यमेषु दशसु सहस्रेषु नगरप्राकार इव जलमूर्ध्वं गतं तस्य चोत्सेधवृद्धिः षोडश सहस्राणि अत उच्यते—लवणसमुद्रः षोडश योजनसहस्राण्युत्से

धपरिवृद्ध्या मज्ञप्त इति, आवर्त्तादीन्येकादश विमाननामानि ॥ १६ ॥

सत्तरसविहे असंजमे प० तं०—पुढविकायअसंजमे आउकायअसंजमे तेउकायअसंजमे वाउकायअसंजमे वणस्सइकायअसंजमे बेइंदिअअसंजभे तेइंदियअसंजमे चउरिंदियअसंजमे पंचिंदिअअसंजमे अजीवकायअसंजमे पेहाअसंजमे उवेहाअसंजमे अवहट्टुअसंजमे अप्पमज्जणाअसंजमे मणअसंजमे वइअसंजमे कायअसंजमे सत्तरसविहे संजमे प० तं०—पुढवीकायसंजमे आउकायसंजमे तेउकायसंजमे वाउकायसंजमे वणस्सइकायसंजमे बेइंदिअसंजमे तेइंदिअसंजमे चउरिंदिअसंजमे पंचिंदिअसंजमे अजीवकायसंजमे पेहासंजमे उवेहासंजमे अवहट्टुसंजमे पमज्जणासंजमे मणसंजमे वइसंजमे कायसंजमे माणुसत्तरे णं पव्वए सत्तरसएक्कवीसे जोयणसए उड्ढं उच्चत्तेणं प०, सव्वेसिंपि णं वेलंधरअणुवेलंधरणागराईणं आवासपव्वया सत्तरसएक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, लवणे णं समुद्दे सत्तरस जोयणसहस्साइं सव्वग्गेणं प०, इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ सातिरेगाइं सत्तरस जोयणसहस्साइं उड्ढं उप्पतित्ता ततो पच्छा चारणाणं तिरिआ गती पवत्तति, चमरस्स णं असुरिंदस्स असुररण्णो तिगिंछिकूडे उप्पायपव्वए सत्तरस एक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, बलिस्स णं असुरिंदस्स रुअगिंदे उप्पायपव्वए सत्तरस एक्कवीसाइं जोयणसयाइं उड्ढं उच्चत्तेणं प०, सत्तरसविहे मरणे प०—आवीईमरणे ओहिमरणे आयंतियमरणे वलायमरणे वसट्टमरणे अंतोसल्लमरणे तब्भवमरणे बालमरणे पंडितमरणे बालपंडितमरणे छउमत्थमरणे केव–

लिमरणे वेहाणसमरणे गिद्धपिट्ठमरणे भत्तपच्चक्खाणमरणे इंगिणिमरणे पाओवगमणमरणे, सुहुमसपराए ण भगव सुहुमसपरायभावे वट्टमाणे सत्तरस कम्मपगडीओ णिबंधति त०-आभिणिबोहियणाणावरणे सुय-णाणावरणे ओहिणाणावरणे मणपज्जवणाणावरणे केवलणाणावरणे चक्खुदसणावरणे अचक्खुदसणावरणे ओहीदसणावरणे केवलदसणावरणे सायावेयणिज्ज जसोकित्तिनाम उच्चागोय दाणंतराय लाभंतराय भोगंतराय उवभोगंतराय वीरिअअंतरायं, इमीसे ण रयणप्पभाए पुढवीए अत्थेगइआण नेरइयाण सत्तरस पलिओवमाइ ठिई प०, पचमीए पुढवीए अत्थेगइयाण नेरइयाण उक्कोसेणं सत्तरस सागरोवमाइं ठिई प०, छट्ठीए पुढवीए अत्थेगइयाण जहण्णेण सत्तरस सागरोवमाइ ठिई प०, असुरकुमाराण देवाण अत्थेगइयाण सत्तरस पलिओवमाइ ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाण देवाण सत्तरस पलिओवमाइ ठिई प०, महासुक्के कप्पे देवाणं उक्कोसेण सत्तरस सागरोवमाइ ठिई प०, सहस्सारे कप्पे देवाण जहण्णेण सत्तरस सागरोवमाइ ठिई प०, जे देवा सामाण सुसामाण महासामाण पउम महापउम कुमुद महाकुमुद नलिण महानलिणं पोंडरीअं महापोंडरीअ सुक्कं महासुक्क सीह सीहकंत सीहवीअ भाविअ विमाण देवत्ताए उववण्णा तेसि ण देवाण उक्कोसेण सत्तरस सागरोवमाइ ठिई प०, ते ण देवा सत्तरसहिं अद्धमासेहिं आणमति वा पाणमति वा उस्ससति वा नीससति वा तेसि ण देवाण सत्तरसहिं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, सतेगइया भवसिद्धिआ जीवा जे सत्तरसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्सति मुच्चिस्संति परिनि-

ञ्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १७ ॥

अथ सप्तदशस्थानकं, तच्च व्यक्तं, नवरमिह स्थितिसूत्रेभ्योऽर्वाग् दश, तथा अजीवकायासंयमो–विकटसुवर्णबहुमूल्यवस्त्रपात्र-पुस्तकादिग्रहणं, प्रेक्षायामसंयमो यः स तथा, स च स्थानोपकरणादीनामप्रत्युपेक्षणमविधिप्रत्युपेक्षणं वा,उपेक्षाऽसंयमोऽसंयमयोगेषु व्यापारणं संयमयोगेष्वव्यापारणं वा, तथा अपहृत्यासंयमः अविधिनोच्चारादीनां परिष्ठापनतो यः स तथा, अप्रमार्जनाऽसंयमः–पात्रादेरप्रमार्जनयाऽविधिप्रमार्जनया वेति, मनोवाक्कायानामसंयमास्तेषामकुशलानामुदीरणानीति । असंयमविपरीतः संयमः । वेलन्धरानुवेलन्धरावासपर्वतस्वरूपं क्षेत्रसमासगाथाभिरवगन्तव्यं, एताश्चैताः—[1]"दस जोयणसाहस्सा लवणसिहा चक्कवालओ रुन्दा । सोलससहस्स उच्चा सहस्समेगं तु ओगाढा ॥ १ ॥ देसूणमद्धजोयण लवणसिहोवरि दगं तु कालदुगे । अतिरेगं २ परिवड्ढइ हायए वावि ॥ २ ॥ अब्भंतरियं वेलं धरंति लवणोदहिस्स नागाणं । बायालीससहस्सा दुसत्तरि सहस्स बाहिरियं ॥ ३ ॥ सट्ठी नागसहस्सा धरंति अग्गे दगं समुद्दस्स । वेलंधर आवासा लवणे य चउदिसिं चउरो ॥४॥ पुव्वादिसा अणुकमसो गोथुभ १ दगभास २ संख ३ दगसीमा ४ । गोथुभे १ सिवए २ संखे ३ मणोसिले ४ नागरायाणो ॥५॥ अणुवेलंधरवासा लवणे विदिसासु संठिआ चउरो । कक्कोडे १ विज्जुप्पभे २ केलास ३ ऽरुणप्पभे ४ चेव ॥६॥ कक्कोडय कद्दमए केलासऽरुप्पभेत्थ[नाग]रायाणो । बायालीससहस्से

---

१ दशयोजनसहस्राणि लवणशिखा चक्रवालतो विस्तीर्णा । षोडशसहस्रोच्चा सहस्रमेकं त्ववगाढा ॥१॥ देशोनार्धयोजनं लवणशिखोपरि दकं तु कालद्विके अतिरेकमतिरेकं परिवर्धते हीयते वाऽपि ॥ २ ॥ अभ्यन्तरां वेलां धारयन्ति लवणोदधेर्नागानां । द्वाचत्वारिंशत्सहस्राणि द्विसप्तति सहस्राणि बाह्या ॥ ३ ॥ षष्टि नागसहस्राणि धारयति अग्रे दकं समुद्रस्य । वेलन्धराणामावासा. लवणे चतसृषु दिक्षु चत्वार ॥ ४ ॥ पूर्वदिगनुक्रमतो गोस्तूभदकभासशङ्खदकसीमान । गोस्तूभशिवशङ्खमन शिला नागराजा ॥ ५ ॥

गतु उयरिंमि सव्वेवि ॥ ७ ॥ चत्तारि य जोयणसए तीसे कोस य उग्गया भूमी । सत्तरस जोयणसए इगवीसे ऊसिआ सव्वे ॥ ८ ॥" त्ति 'चारणाणं'ति जङ्घाचारणानां विद्याचारणानां च 'तिरिअं'ति तिर्यग् रुचकादिद्वीपगमनायेति, तिगिञ्छिकूट उत्पातपर्वतो यत्रागत्य मनुष्यक्षेत्राभिगमनायोत्पतति, स चेतोऽसङ्ख्यातमेऽरुणोदयसमुद्रे दक्षिणतो द्विचत्वारिंशत योजनसहस्राण्यतिक्रम्य भवति, रुचकेन्द्रोत्पातपर्वतस्तरुणोदयसमुद्र एव उत्तरतो एवमेव भवतीति, 'आवीईमरणे'त्ति आ–समन्ताद्वीचय इव वीचय' –आयुर्दलिकविच्युतिलक्षणावस्था यस्मिंस्तदावीचि अथवा वीचि –विच्छेदस्तदभावादवीचि, दीर्घत्वं तु प्राकृतत्वात्तदेवम्भूत मरणमावीचिमरण—प्रतिक्षणमायुर्द्रव्यविचटनलक्षणं, तथाऽवधि'–मर्यादा तेन मरणमवधिमरण, यानि हि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते यदि पुनस्तान्येवानुभूय मरिष्यति तदा तदवधिमरणमुच्यते, तद्द्रव्यापेक्षया पुनस्तद्ग्रहणावधि यावज्जीवस्य मृतत्वादिति, तथा 'आयंतियमरणे'त्ति आत्यन्तिकमरण यानि नारकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते मृतश्च न पुनस्तान्यनुभूय मरिष्यतीति, एवं यन्मरणं तद्द्रव्यापेक्षया अत्यन्तभावित्वादात्यन्तिकमिति, 'वलायमरणे'त्ति संयमयोगेभ्यो वलतां–भग्नव्रतपरिणतीनां व्रतिनां मरणं वलन्मरणं तथा वशेन–इन्द्रियविषयपारतन्त्र्येण ऋता–बाधिता वशार्त्ताः स्निग्धदीपकलिकावलोकनात् शलभवत् तथाऽन्तः–मध्ये मनसीत्यर्थ शल्यमिव शल्यमपराधपदं यस्य सोऽन्तःशल्यो—लज्जाभिमानादिभिरनालोचितातीचारस्तस्य मरणम् अन्तःशल्यमरणं, तथा यस्मिन् भवे–तिर्यग्मनुष्यभवलक्षणे वर्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनः तत्क्ष-

---

...मासा काले सिद्धिसु चत्तारः दीक्षिता । कर्कोटको विद्युत्प्रभ कैलासोऽरुणप्रभश्च ॥ ६ ॥ कर्कोटकः कर्दमकः कैलासोऽरुणप्रभोऽथ राजतः । ...रिव सहस्राणि गत्वोपरि सर्वे ॥ ७ ॥ चत्वारि योजनशतानि त्रिंशत्क्रोशा चोद्गता भूमिं । सप्तदशयोजनशतानि एकविंशत्युच्छ्रिता सर्वे ॥ ८ ॥

येण म्रियमाणस्य यद्भवति तत्तद्भवमरणं, एतच्च तिर्यग्मनुष्याणामेव न देवनारकाणां, तेषां तेष्वेवोत्पादाभावादिति, तथा बाला इव बालाः-अविरतास्तेषां मरणं बालमरणं, तथा छद्मस्थमरणम्-अकेवलिमरणं, केवलिमरणं तु प्रतीतं, 'वेहासमरणं'त्ति विहायसि -व्योमनि भवं वैहायसं, विहायोभवत्वं च तस्य वृक्षाशाखाद्युद्बद्धत्वे सति भावात्, तथा गृद्ध्रैः-पक्षिविशेषैरुपलक्षणत्वाच्छकुनिकाशिवादिभिश्च स्पृष्टं-स्पर्शनं यस्मिंस्तद्गृध्रस्पृष्टम् अथवा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि यत्र तद्गृध्रपृष्ठम्, इदं च करिकरभादिशरीरमध्यपातादिना गृध्रादिभिरात्मानं भक्षयतो महासत्त्वस्य भवति, त्तथा भक्तस्य-भोजनस्य यावज्जीवं प्रत्याख्यानं यस्मिंस्तत्तथा, इदं च त्रिविधाहारस्य चतुर्विधाहारस्य वा नियमरूपं सप्रतिकर्म च भक्तपरिज्ञेति यद्रूढम्, तथा इङ्ग्यते प्रतिनियतदेश एव चेष्टयतेऽस्यामनशनक्रियायामितीङ्गिनी तया मरणमिङ्गिनीमरणम्, तद्धि चतुर्विधाहारप्रत्याख्यातुर्निष्प्रतिकर्मशरीरस्येङ्गितदेशाभ्यन्तरवर्त्तिन एवेति, तथा पादपस्येवोपगमनम्-अवस्थानं यस्मिन् तत्पादपोपगमनं तदेव मरणमिति विग्रहः, इदं च यथा पादपः क्वचित् कथञ्चिद् निपतितः सममसममिति चाविभावयन्निश्चलमेवास्ते तथा यो वर्त्तते तस्य तद्भवतीति । तथा सूक्ष्मसम्परायः उपशमकः क्षपको वा सूक्ष्मलोभकषायकिट्टिकावेदको भगवान्-पूज्यत्वात् सूक्ष्मसम्परायभावे वर्त्तमानः-तत्रैव गुणस्थानकेऽवस्थितः नातीतानागतसूक्ष्मसम्परायपरिणाम इत्यर्थः सप्तदश कर्मप्रकृतीर्निबध्नाति विंशत्युत्तरे बन्धप्रकृतिशतेऽन्या न बध्नातीत्यर्थः, पूर्वतरगुणस्थानकेषु बन्धं प्रतीत्य तासां व्यवच्छिन्नत्वात्, तथोक्तानां सप्तदशानां मध्यादेका सातप्रकृतिरुपशान्तमोहादिषु बन्धमाश्रित्यानुयाति, शेषाः षोडशैव व्यवच्छिद्यन्ते, यदाह-"नाणं ५ तराय १० दसगं दंसण चत्तारि १४ उच्च १५ जसकित्ती १६ । एया सोलसपयडी सुहुमकसायमि वोच्छिन्ना ॥ १ ॥" सूक्ष्मसम्परायात्परे न बध्नन्तीत्यर्थः, सामानादीनि सप्तदश विमानानां नामानीति ॥ १७ ॥

अट्ठारसविहे बंभे प० तं—ओरालिए कामभोगे णेव सयं मणेणं सेवइ नोवि अण्णं मणेणं सेवावेइ मणेणं सेवंतं पि अण्णं न समणुजाणाइ ओरालिए कामभोगे णेव सयं वायाए सेवइ नोवि अण्णं वायाए सेवावेइ वायाए सेवंतंपि अण्णं न समणुजाणाइ ओरालिए कामभोगे णेव सयं काएणं सेवइ णोवि अण्णं काएणं सेवावेइ काएणं सेवंतंपि अण्णं न समणुजाणाइ, दिव्वे कामभोगे णेव सयं मणेणं सेवइ णोवि अण्णं मणेणं सेवावेइ मणेणं सेवंतंपि अण्णं न समणुजाणाइ दिव्वे कामभोगे णेव सयं वायाए सेवइ णोवि अण्णं वायाए सेवावेइ वायाए सेवंतंपि अण्णं न समणुजाणाइ दिव्वे कामभोगे णेव सयं काएणं सेवइ णोवि अण्णं काएणं सेवावेइ काएणं सेवंतंपि अण्णं न समणुजाणाइ, अरहतो णं अरिट्ठनेमिस्स अट्ठारस समणसाहस्सीओ उक्कोसिया समणसंपया होत्था, समणेणं भगवया महावीरेणं समणाणं णिग्गंथाणं सखुड्डयवियत्ताणं अट्ठारस ठाणा प० तं—वयछक्कं ६ कायछक्कं १२, अकप्पो १३ गिहिभायणं १४ । पलियंक १५ निसिज्जा १६ य, सिणाणं १७ सोभवज्जणं १८ ॥१॥ आयारस्स णं भगवतो सचूलिआगस्स अट्ठारस पयसहस्साइं पयग्गेणं प०, बंभीए णं लिवीए अट्ठारसविहे लेखविहाणे प० तं०—बंभी [1] जवणी [2] लिया[3] दोसाउरिआ [4] खरोट्ठिआ [5] खरसाविआ [6] पहाराइया [7] उच्चत्तरिआ [8] अक्खरपुट्ठिया [9] भोगवयता [10] वेणतिया [11] णिण्हइया [12] अंकलिवि [13] गणिअलिवी [14] गंधव्वलिवी [15] भूयलिवि [16] आदसलिवी [17] माहेसरीलिवी दामिलिवी पोलिंदिलिवी, अत्थिनत्थिप्पवायस्स णं पुव्वस्स अट्ठारस वत्थू प०, धूमप्पभाए णं पुढवीए अट्ठारसुत्तर जोयणसयसहस्सं बाहल्लेणं प० पोसासाढेसु णं मासेसु सइ

उक्कोसेणं अट्ठारसमुहुत्ते दिवसे भवइ सइ उक्कोसेणं अट्ठारसमुहुत्ता राती भवइ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठारस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठारस पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइआणं देवाणं अट्ठारस पलिओवमाइं ठिई प०, सहस्सारे कप्पे देवाणं उक्कोसेणं अट्ठारस सागरोवमाइं ठिई प०, आणए कप्पे देवाणं अत्थेगइयाणं जहण्णेणं अट्ठारस सागरोवमाइं ठिई प०, जे देवा कालं सुकालं महाकालं अंजणं रिट्ठं सालं समाणं दुमं महादुमं विशालं सुसालं पउमं पउमगुम्मं कुमुदं कुमुदगुम्मं नलिणं नलिणगुम्मं पुंडरीअं पुंडरीयगुम्मं सहस्सारवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं अट्ठारस सागरोवमाइं ठिई प० ते णं देवा णं अट्ठारसेहिं अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं अट्ठारसवाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइअ भवसिद्धिया जे अट्ठारसहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं १८॥

अथाष्टादशस्थानकम्, इह चाष्टौ सूत्राणि स्थितिसूत्रेभ्योऽर्वाक् सुगमानि च, नवरं 'बंभे'त्ति ब्रह्मचर्यं यथौदारिककामभोगान्—मनुष्यतिर्यक्सम्बन्धिविषयान् तथा दिव्यकामभोगान्—देवसम्बन्धिन इत्यर्थः । तथा 'सखुड्डगावियत्ताणं'त्ति सह क्षुद्रकैर्व्यक्तैश्च ये ते सक्षुद्रकव्यक्ताः तेषां, तत्र क्षुद्रका—वयसा श्रुतेन वाऽव्यक्ताः, व्यक्तास्तु ये वयःश्रुताभ्यां परिणताः, स्थानानि—परिहारसेवाश्रयवस्तूनि 'व्रतषट्कं' महाव्रतानि रात्रभोजनविरतिश्च 'कायषट्कं' पृथिवीकायादि, अकल्पः—अकल्पनीयपिण्डशय्यावस्त्रपात्ररूपः

पदार्थाः, 'गृहिमाजन'स्थाल्यादिः पर्यङ्को-मञ्चकादि निषद्याश्रिया सहासन 'स्नानं' शरीरक्षालन 'शोभावर्जनं' प्रतीतं । तथा, आचार-स्य' प्रथमाङ्गस्य सचूलिकाकस्य—चूडासमन्वितस्य, तस्य पिण्डैषणाद्याः पञ्च चूलाः द्वितीयश्रुतस्कन्धात्मिकाः स च नवमब्रह्मचर्या-भिधानाध्ययनात्मकप्रथमश्रुतस्कन्धरूपः, तस्यैव चेद पदप्रमाणं न चूलानां, यदाह—"[1]नवबंभचेरमइओ अट्ठारस पयसहस्सीओ वेओ हवइ य सपचचूलो बहुबहुतरओ पयग्गेण ॥ १ ॥" त्ति, यच्च सचूलिकाकस्येति विशेषणं तत्तस्य चूलिकासत्ताप्रतिपादनार्थं, न तु पदप्रमाणाभिधानार्थं यतोऽवाचि नन्दीटीकाकृता—'अट्ठारसपयसहस्साणि पुण पढमसुयखंधस्स नवबंभचेरमइयस्स पमाणं, विचि-त्तत्थाणि य सुत्ताणि गुरूवएसओ तेसिं अत्थो जाणियव्वो'त्ति, पदसहस्राणीह यत्रार्थोपलब्धिस्तत्पदं, 'पदाग्रेणे'—ति पदपरिमाणे नेति, तथा 'बंभि'त्ति ब्राह्मी—आदिदेवस्य भगवतो दुहिता ब्राह्मी वा—संस्कृतादिभेदा वाणी तामाश्रित्य तेनैव या दर्शिता अक्षर-लेखनप्रक्रिया सा ब्राह्मीलिपिः अतस्तस्या ब्राह्म्या लिपे 'ण' मित्यलङ्कारे लेखो-लेखनं तस्या विधानं-भेदो लेखविधानं प्रज्ञप्तं, तद्यथा—पमीत्यादि, एतत्स्वरूपं न दृष्टमिति न दर्शितं । तथा यल्लोके यथाऽस्ति यथा वा नास्ति अथवा स्याद्वादाभिप्रायस्तदेवास्ति नास्ति चेत्येवं प्रवदतीत्यस्तिनास्तिप्रवादं, तच्च चतुर्थं पूर्वं तस्य, तथा धूमप्रभा पञ्चमी अष्टादशोत्तरं अष्टादशयोजनसहस्राधिकमि त्यर्था, 'बाहल्येन' पिण्डेन, 'पोसासाढे'त्यादेरेव योजना—आषाढमासे 'सइ' इति सकृदेकदा कर्कसङ्क्रान्तावित्यर्थः उत्कर्षेण—उत्कर्ष-तोऽष्टादशमुहूर्तो दिवसो भवति, षट्त्रिंशद्घटिका इत्यर्थः, तथा पौषमासे सकृदिति—मकरसङ्क्रान्तौ रात्रिमेवमिवेति, कमलसुकमला दीनि विंशतिर्विमानानि ॥ १८ ॥

[1] नवब्रह्मचर्यमयोऽष्टादशपदसहस्रिको वेदः भवति च सपञ्चचूलो बहुबहुतरकः पदाग्रेण ॥ १ ॥

एगूणवीसं णायज्झयणा पं० तं०—उक्खित्तणाए[1] संघाडे,[2] अंडे[3] कुम्मे[4] अ सेलए[5] । तुंबे[6] अ रोहिणी[7] मल्ली,[8] मागंदी[9] चंदिमा[10]ति अ ॥ १ ॥ दावद्दवे[11] उदगणाए,[12] मंडुक्के[13] तेत्तली[14] इअ । नंदिफले[15] अवरकंका,[16] आइण्णे[17] सुंसमा[18] इअ ॥ २ ॥ अवरे अ पोण्डरीए,[19] णाए एगूणवीसमे । जंबूद्दीवे णं दीवे सूरिआ उक्कोसेणं एगूणवीसं जोयणसयाइं उड्ढमहो तवयंति, सुक्केणं महग्गहे अवरेणं उदिए समाणे एगूणवीसं णक्खत्ताइं समं चारं चरित्ता अवरेणं अत्थमणं उवागच्छइ, जंबुद्दीवस्स णं दीवस्स कलाओ एगूणवीसं छेअणाओ प०, एगूणवीसं तित्थयरा अगारवासमज्झे वसित्ता मुंडे भवित्ता णं अगाराओ अणगारिअं पव्वइआ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइआणं नेरइआणं एगूणवीस पलिओवमाइं ठिई प०, छट्ठीए पुढवीए अत्थेगइयाणं नेरइयाणं एगूणवीससागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एगूणवीसपलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एगूणवीसं पलिओवमाइं ठिई प०, आणयकप्पे अत्थेगइयाणं देवाणं उक्कोसेणं एगूणवीससागरोवमाइं ठिई प०, पाणए कप्पे अत्थेगइयाणं देवाणं जहण्णेणं एगूणवीससागरोवमाइं ठिई प०, जे देवा आणतं पाणतं णतं विणतं घणं सुसिरं इंदं इंदोकंतं इंदुत्तरवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं एगूणवीससागरोवमाइं ठिई प०, ते णं देवा एगूणवीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं एगूणवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिया जीवा जे एगूणवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति

सुचिस्संति परिनिव्वाइस्सति सव्वदुक्खाण अंत करिस्सति ॥ सूत्र १९ ॥

अथैकोनविंशतितमस्थान, तत्र स्थितिसूत्रस्य पञ्च पदानि सुगमानि च, नवरं ज्ञातानि—दृष्टान्तास्तत्प्रतिपादकान्यध्ययनानि षष्ठाङ्गप्रथमश्रुतस्कन्धवर्त्तीनि, 'उक्खित्ते' त्यादि सार्द्धं रूपकत्रयम्, इदं च षष्ठाङ्गाधिगमादवसेयमिति, तथा 'जम्बुद्दीवे णं' इत्यादौ भावना—यदौ स्वस्थानादुपरि योजनशत तपतोऽधस्तादष्ट शतानि, तत्र च समभूतलेऽष्टौ भवन्ति, दश चापरविदेह जगतीप्रत्यास प्रदेशे, जम्बूद्वीपापरविदेहे हि निम्नीभवत् क्षेत्रमन्तिमे विजयद्वारस्य देशे अधोलोकदेशमधिगतमिति, द्वीपान्तरवर्त्यास्तूर्ध्वं शतमघोऽष्टशतानि, क्षेत्रस्य समत्वादिति, तथा शुक्रसूत्रे जयन्त 'नक्खत्ताइं'ति विभक्तिपरिणामाभवत्रैः' सम सह चार—चरणं चरित्वा—विधायेति, तथा 'कलाओ'त्ति 'पंचसए छव्वीसे छच कला वित्थडं भरहवास'मित्यादिषु जम्बूद्वीपगणितेषु या कला उच्यन्ते ता योजनस्यैकोनविंशतिभागच्छेदना, एकोनविंशतिभागरूपा इति भावः, 'अगारमज्झे वसित्त'त्ति अगार—गेहं अधिक—आधिक्येन चिरकाल राज्यपरिपालनतः आ—मर्यादया नीत्या वसित्वा—उषित्वा तत्र वास विधायेति, अव्येष्टया प्रव्रजिता, शेषास्तु पञ्च कुमारभाव एवेत्याह च—"वीर अरिट्ठनेमिं पासं मल्लिं च वासुपुज्जं च । एए मोत्तूण जिणे अवसेसा आसि रायाणो ॥१॥"त्ति ॥

वीस असमाहिठाणा पं० तं०—दवदवचारि यावि[1] भवइ अपमज्जियचारि आवि[2] भवइ दुप्पमज्जियचारि आवि[3] भवइ अतिरित्तसज्जासणिए[4] रातिणिअपरिभासी[5] थेरोवघाइए[6] भूओवघाइए[7] संजलणे[8] कोहणे[9] पिट्ठिमंसिए[10] अभिक्खणं २ ओहारइत्ता[11] भवइ णवाणं अधिकरणाणं अणुप्पण्णाणं उप्पाएत्ता[12] भवइ पोराणाणं अधिकरणाणं

खामिअविउसविआणं पुणोदीरेत्ता भवइ [13] ससरक्खपाणिपाए [14] अकालसज्झायकारए यावि भवइ [15] कलहकरे [16] सद्दकरे [17] झंझकरे [18] सूरप्पमाणभोई [19] एसणाऽसमिते [20] आवि भवइ, मुणिसुव्वए णं अरहा वीसं धणूइं उड्ढं उच्चत्तेणं होत्था, सव्वेविअ णं घणोदही वीसं जोयणसहस्साइं बाहल्लेणं प०, पाणयस्स णं देविंदस्स देवरण्णो वीसं सामाणिअसाहस्सीओ प०, णपुंसयवेयणिज्जस्स णं कम्मस्स वीसं सागरोवमकोडाकोडीओ बंधओ बंधठिई प०, पच्चक्खाणस्स णं पुव्वस्स वीसं वत्थु, उस्सप्पिणिओसप्पिणिमंडले वीसं सागरोवमकोडाकोडीओ कालो प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं वीसं पलिओवमाइं ठिई प०, छट्ठीए पुढवीए अत्थेगइयाणं नेरइयाणं वीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं वीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं वीसं पलिओवमाइ ठिई प०, पाणते कप्पे देवाणं उक्कोसेणं वीसं सागरोवमाइं ठिई प०, आरणे कप्पे देवाणं जहण्णेणं वीसं सागरोवमाइं ठिई प०, जे देवा सायं विसायं सुविसायं सिद्धत्थं उप्पलं भित्तिलं तिगिच्छं दिसासोवत्थियं पलंबं रुइलं पुप्फं सुपुप्फं पुप्फावत्तं पुप्फपभं पुप्फकंतं पुप्फवण्णं पुप्फलेसं पुप्फज्झयं पुप्फसिंगं पुप्फसिद्धं पुप्फुत्तरवडिंसगं विमाणं देवताए उववण्णा तेसि णं देवाणं उक्कोसेणं वीसं सागरोवमाइं ठिई प०, ते णं देवा वीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीसमंति वा, तेसि णं देवाणं वीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे वीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति

परिणिव्वाइस्संति सव्वदुक्खाणमंत करिस्संति ॥ सूत्रं २० ॥

अथ विंशतितमस्थाने किञ्चिल्लिख्यते, तत्र स्थितिसूत्रेभ्योऽर्वाक् सप्त सूत्राणि, तत्र समाधान समाधिः—चेतसः स्वास्थ्यं मोक्षमार्गेऽवस्थानमित्यर्थः न समाधिरसमाधिस्तस्याः स्थानानि—आश्रयभेदाः पर्याया वा असमाधिस्थानानि, तत्र 'दवदवचारि'त्ति यो हि द्रुतं द्रुतं चरति—गच्छति सोऽनुकरणशब्दतो दवदवचारीत्युच्यते, चापीत्युत्तरासमाधिस्थानापेक्षया समुच्चयार्थः, भवतीति प्रसिद्धं, स च द्रुतं द्रुतं संयमात्मनिरपेक्षो व्रजन्नात्मानं प्रपतनादिभिरसमाधौ योजयति अन्यांश्च सत्त्वान् घ्नन्नसमाधौ योजयति, सत्त्ववधजनितेन च कर्म्मणा परलोकेऽप्यात्मानमसमाधौ योजयति, अतो द्रुतगन्तृत्वमसमाधिकारणत्वादसमाधिस्थानम्, एवमन्यत्रापि यथायोगमवसेयं १, तथा अप्रमार्जितचारी २ दुष्प्रमार्जितचारी च ३ स्थाननिषीदनत्वग्वर्त्तनादिष्वात्मादिविराधनां लभते, तथाऽतिरिक्ता-अतिप्रमाणा शय्या—वसतिरासनानि च—पीठकादीनि यस्य सन्ति सोऽतिरिक्तशय्यासनिकः, स च अतिरिक्तायां शय्यायां घट्टशालादिरूपायामन्येऽपि कार्पटिकादय आवसन्ति इति तैः सहाधिकरणसम्भवादात्मपरावसमाधौ योजयतीति, एवमासनाधिक्येनापि वाच्यमिति ४, तथा 'रात्निकपरीभाषी' आचार्यादिपूज्यपुरुषपराभवकारी, स चात्मानमन्यांश्चासमाधौ योजयत्येव ५, तथा स्थविरा—आचार्यादिगुरवः तानाचारदोषेण शीलदोषेण च ज्ञानादिभिरुपहन्तीत्येवंशीलः स एव चेति स्थविरोपघातिकः ६ तथा भूतानि—एकेन्द्रियास्ताननर्थत उपहन्तीति भूतोपघातिकः ७, तथा संज्वलतीति संज्वलनः—प्रतिक्षणरोषण ८, तथा क्रोधनः—सकृत् क्रुद्धोऽत्यन्तक्रुद्धो भवति ९, तथा पृष्ठिमांसाशिकः—पराङ्मुखस्य परस्यावर्णवादकारी १०, 'अभिक्खणं ओहारयित्त'त्ति अभीक्ष्णमभीक्ष्णमवधारयिता—शङ्कितस्याप्यर्थस्य निःशङ्कितस्यैवमेवायमित्येवं वक्ता,. अथवाऽपहारयिता—परगुणानामपहारकारी, यथा

अदासादिकमपि परं भणति–दासस्त्वं चौरस्त्वमित्यादि ११, तथाऽधिकरणानां–कलहानां यन्त्रादीनां वोत्पादयिता १२, 'पोराणाणं' ति पुरातनानां कलहानां क्षमितव्यवशमितानां–मर्षितत्वेनोपशान्तानां पुनरुदीरयिता भवति १३, तथा 'सरजस्कपाणिपादो' यः सचेतनादिरजोगुण्डितेन हस्तेन दीयमानां भिक्षां गृह्णाति, तथा योऽस्थण्डिलादेः स्थण्डिलादौ सङ्क्रामन्न पादौ प्रमार्ष्टि अथवा यस्तथाविधे कारणे (ऽसति) सचित्तादिपृथिव्यां कल्पादिनाऽनन्तरितायामासनादि करोति स सरजस्कपाणिपाद इति १४, तथा अकालस्वाध्यायादिकारकः प्रतीतः १५, तथा 'कलहकरः' कलहहेतुभूतकर्तव्यकारी १६, तथा 'शब्दकरः' रात्रौ महता शब्देनोल्लापस्वाध्यायादिकारको गृहस्थभाषाभाषको वा १७, तथा 'झञ्झाकरो' येन येन गणस्य भेदो भवति तत्तत्करो, येन वा गणस्य मनोदुःखं समुत्पद्यते तद्भाषी १८, तथा 'सूरप्रमाणभोजी' सूर्योदयादस्तमयं यावदशनपानाद्यभ्यवहारी १९, एषणाअसमितश्चापि भवति–अनेषणां न परिहरति, प्रेरितश्चासौ साधुभिः कलहायते, तथाऽनेषणीयमपरिहरन् जीवोपरोधे वर्त्तते, एवं चात्मपरयोरसमाधिकरणादसमाधिस्थानमिदं विंशतितममिति २० । तथा घनोदधयः–सप्तपृथिवीप्रतिष्ठानभूताः, सामानिकाः–इन्द्रसमानर्द्धयः साहस्र्यः–सहस्राणि, बन्धतो–बन्धसमयादारभ्य बन्धस्थितिः स्थितिबन्ध इत्यर्थः, प्रत्याख्याननामकं पूर्वं नवमं, सतादीनि चैकविंशतिर्विमाननामानीति ॥ २० ॥

एक्कवीसं सबला पण्णत्ता, तंजहा–हत्थकम्मं करेमाणे सबले[1] मेहुणं पडिसेवमाणे सबले[2] राइभोअणं भुंजमाणे सबले[3] आहाकम्मं भुंजमाणे सबले[4] सागारियं पिंडं भुंजमाणे सबले[5] उद्देसियं कीयं आहट्टु दिज्जमाणं भुंजमाणे सबले[6] अभिक्खणं पडियाइक्खेत्ता णं भुंजमाणे सबले[7] अंतो छण्हं मासाणं गणाओ गणं संकम–

माणे सबले अंतो मासस्स तओ दगलेवे करेमाणे [९] सबले अंतो मासस्स तओ माइठाणे सेवमाणे सबले [१०] रायपिंड भुजमाणे [११] सबले आउट्टिआए पाणाइवाय करेमाणे [१२] सबले आउट्टिआए मुसावाय वदमाणे [१३] सबले आउट्टिआए अदिण्णादाण गिण्हमाणे [१४] सबले आउट्टिआए अणतरहिआए पुढवीए ठाणं वा निसीहिय वा चेतेमाणे [१५] सबले एव आउट्टिआ चित्तमताए पुढवीए एव [१६] आउट्टिआ चित्तमताए सिलाए कोलावाससि वा दारुए ठाण वा सिज्ज वा निसीहिय वा चेतेमाणे सबले जीवपइट्ठिए सपाणे सबीए सहरिए सउत्तिंगे पणग-दगमट्टीमक्कडासताणए तहप्पगारे ठाणं वा सिज्ज वा निसीहिय वा चेतेमाण [१७] सबले आउट्टिआए मूलभोअण वा कदभोअण वा तयाभोयण वा पवालभोयण वा पुप्फभोयण वा फलभोयण हरियभोयण वा भुजमाणे [१८] सबले अतो सवच्छरस्स दस दगलेवे करेमाणे [१९] सबले अतो सवच्छरस्स दस माइठाणाइ सेवमाणे [२०] सबले अभिक्खण २ सीतोदयवियडवग्घारियपाणिणा असण वा पाण वा खाइम वा साइम वा पडिगाहित्ता भुज-माणे [२१] सबले। णिअट्टिबादरस्स ण खवितसत्तयस्स मोहणिज्जस्स कम्मस्स एक्कवीस कम्मसा सतकम्मा प० तं०—अपच्चक्खाणकसाए कोहे अपच्चक्खाणकसाए माणे अपच्चक्खाणकसाए माया अपच्चक्खाणकसाए लोभे पच्चक्खाणावरणकसाए कोहे पच्चक्खाणावरणकसाए माणे पच्चक्खाणावरणकसाए माया पच्चक्खाणावरण कसाए लोभे इत्थिवेदे पुवेदे णपुवेदे हासे अरति रति भय सोग दुगुंछा। एक्कमेक्काए ण ओसप्पिणीए पंचमछट्ठाओ समाओ एक्कवीस एक्कवीस वाससहस्साइं कालेण प० तं०—दूसमा दूसमदूसमा, एगमेगाए ण

उस्सप्पिणीए पढमबितिआओ समाओ एकवीसं एकवीसं वाससहस्साइं कालेणं प० तं–दूसमदूसमाए दूसमाए य, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एकवीसपलिओवमाइं ठिई प०, छट्ठी पुढवीए अत्थेगइयाणं नेरइयाणं एकवीस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एगवीसपलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं एक्कवीसं पलिओवमाइं ठिई प०, आरणे कप्पे देवाणं उक्कोसेणं एक्कवीसं सागरोवमाइं ठिई प०, अच्चुते कप्पे देवाणं जहण्णेणं एकवीस सागरोवमाइं ठिई प०, जे देवा सिरिवच्छं सिरिदामकंडं मल्लं किट्टं चावोण्णतं अरण्णवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं एक्कवीसं सागरोवमाइं ठिई प०, ते णं देवा एक्कवीसाए अद्धमासाणं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवा एक्कवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिआ जीवा जे एक्कवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं २१ ॥

अथैकविंशतितमस्थानकं, तत्र चत्वारि सूत्राणि स्थितिसूत्रैर्विना सुगमानि, नवरं शबलं–कर्बुरं चारित्रं यैः क्रियाविशेषैर्भवति ते शबलास्तद्योगात्साधवोऽपि, ते एवं–तत्र हस्तकर्म–वेदविकारविशेषं कुर्वन्नुपलक्षणत्वात्कारयन् वा शबलो भवत्येकः १ एवं मैथुनं प्रतिसेवमानोऽतिक्रमादिभिस्त्रिभिः प्रकारैः २ तथा रात्रिभोजनं दिवागृहीतं दिवाभुक्तमित्यादिभिश्चतुर्भिर्भङ्गकैरतिक्रमादिभिश्च भुञ्जान ३ तथा आधाकर्म ४ सागारिकः–स्थानदाता तत्पिण्डं ५ औद्देशिकं क्रीतमाहृत्य दीयमानं (च) भुञ्जानः उपलक्षणत्वात्पामिचाच्छे-

घानिसृष्टग्रहणमपीह ग्रहण्यमिति ६, यावत्करणोपात्तपदान्येवमर्थतोऽवगन्तव्यानि, अभीक्ष्ण २ प्रत्याख्यायाशनादि भुञ्जानः ७ अन्त षण्णां मासानामेकतो गणाद्गणमन्य सङ्क्रामन् ८ अन्तर्मासस्य त्रीनुदकलेपान् कुर्वन्, उदकलेपश्च नाभिप्रमाणजलावगाहन मिति, ९, अन्तर्मासस्य त्रीणि मायास्थानानि, स्थानमिति–भेदः १०, राजपिण्डं भुञ्जान' ११, आकुट्ट्या प्राणातिपातं कुर्वन्, उपेत्य पृथिव्यादिकं हिंसन्नित्यर्थः १२, आकुट्ट्या मृषावाद वदन् १३, अदत्तादान गृह्णन् १४, आकुट्ट्यैवानन्तर्हितायां पृथिव्यां स्थान वा नैषेधिक वा चेतयन् कायोत्सर्गं स्वाध्यायभूमिं वा कुर्वन्नित्यर्थः १५, एवमाकुट्ट्या सस्निग्धसरजस्कायां पृथिव्यां सचित्तवत्यां शिलायां लेष्टौ वा कोलावासे दारुणि, कोला–घुणाः तेषामावास' १६ अन्यस्मिंश्च तथाप्रकारे सप्राणे सबीजादौ स्थानादि कुर्वन् १७ आकुट्ट्या मूलकन्दादि भुञ्जानः १८ अन्तः संवत्सरस्य दशोदकलेपान् कुर्वन् १९ तथाऽन्त संवत्सरस्य दश मायास्थानानि च २० तथा अभीक्ष्णं–पौन'पुन्येन शीतोदकलक्षण यद्विकटं–जल तेन व्यापारितो–व्याप्तो यः पाणि'–हस्तः स तथा तेनाशन मगृह्य भुञ्जान शबल इत्येकविंशतितमः २१। तथा निवृत्तिबादरस्य–अपूर्वकरणस्याष्टमगुणस्थानवर्त्तिन इत्यर्थः, षं वाक्यालङ्कारे, क्षीण सप्तकम्–अनन्तानुबन्धिचतुष्टयदर्शनत्रयलक्षण यस्य स तथा, तस्य मोहनीयस्य कर्मणः एकविंशतिः कर्मांशा–अप्रत्याख्यानादिकषायद्वादशनोकषायनवकरूपा उत्तरप्रकृतयः सत्कर्म–सत्तावस्थं कर्म प्रज्ञप्तमिति, तथा श्रीवत्सं श्रीदामगण्डं माल्यं कृष्टि चापोन्नत आरणावतंसकं चेति षट् विमाननामानीति ॥ २१ ॥

बावीसं परीसहा प० तं०–दिगिंछापरीसहे[1] पिवासापरीसहे[2] सीतपरीसहे[3] उसिणपरीसहे[4] दसमसगपरीसहे[5] अचेलपरीसहे[6] अरइपरीसहे[7] इत्थीपरीसहे[8] चरिआपरीसहे[9] निसीहियापरीसहे[10] सिज्जापरीसहे[11] अक्कोसपरीसहे[12]

वहपरीसहे[13] जायणापरीसहे[14] अलाभपरीसहे[15] रोगपरीसहे[16] तणफासपरीसहे[17] जल्लपरीसहे[18] सक्कारपुरक्कारपरीसहे[19] पण्णापरीसहे[20] अण्णाणपरीसहे[21] दंसणपरीसहे[22], दिट्ठिवायस्स णं बावीसं सुत्ताइं छिन्नछेयणइयाइं ससमयसुत्तपरिवाडीए बावीसं सुत्ताइं अछिन्नछेयणइयाइं आजीवियसुत्तपरिवाडीए बावीसं सुत्ताइं तिकणइयाइं तेरासिअसुत्तपरिवाडीए बावीसं सुत्ताइं चउक्कणइयाइं समयसुत्तपरिवाडीए, बावीसविहे पोग्गलपरिणामे प० तं०-कालवण्णपरिणामे नीलवण्णपरिणामे लोहियवणपरिणामे हालिद्दवणपरिणामे सुक्किल्लवण्णपरिणामे सुब्भिगंधपरिणामे दुब्भिगंधपरिणामे तित्तरसपरिणामे कडुयरसपरिणामे कसायरसपरिणामे अंबिलरसपरिणामे महुररसरिणामे कक्खडफासपरिणामे मउयफासपरिणामे गुरुफासपरिणामे लहुफासपरिणामे सीतफासपरिणामे उसिणफासपरिणामे णिद्धफासपरिणामे लुक्खफासपरिणामे अगुरुलहुफासपरिणामे गुरुलहुफासपरिणामे, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं बावीसं पलिओवमाइं ठिई प०, छट्ठीए पुढवीए उक्कोसेणं बावीसं सागरोवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं जहण्णेणं बावीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बावीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाणं देवाणं बावीसं पलिओवमाइं ठिई प०, अचुते कप्पे देवाणं बावीसं सागरोवमाइं ठिई प०, हेट्ठिमहेट्ठिमगेवेज्जगाणं देवाणं जहण्णेणं बावीस सागरोवमाइं ठिई प०, जे देवा महियं विसूहियं विमलं पभासं वणमालं अच्चुतवडिंसगं विमाणं देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं

बावीसं सागरोवमाइं ठिई प०, ते णं देवा णं बावीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं बावीसं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे बावीसं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र २२ ॥

द्वाविंशतितमं तु स्थानं प्रतीतार्थमेव, नवरं क्षुधादि पदं स्थितेरर्वाक्, तत्र मार्गाच्यवननिर्जरार्थं परिषह्यन्ते इति परीषहाः, 'दिगिंछ'त्ति बुभुक्षा सैव परीषहो दिगिञ्छापरीषह इति, सहनं चास्य मर्यादानुल्लङ्घनेन, एवमन्यत्रापि १, तथा पिपासा—तृट् २ शीतोष्णे प्रतीते ३–४ तथा दंशाश्च मशकाश्च दंशमशकं उभयेऽप्येते चतुरिन्द्रिया महत्त्वामहत्त्वकृतश्चैषां विशेषोऽथवा दंशो—दशनं भक्षणमित्यर्थः, तत्प्रधाना मशका दंशमशका, एते च यूकामत्कुणमत्कोटकमक्षिकादीनामुपलक्षणमिति ५ तथा चेलानां—वस्त्राणां बहुधननवीनावदातसुप्रमाणानां सर्वेषां वाऽभावः अचेलत्वमित्यर्थः ६ अरतिः मानसो विकारः ७ स्त्री प्रतीता ८ 'चर्या' ग्रामादिष्वनियतविहारित्वं ९ 'नैषेधिकी' शून्यागारादिरूपा सोपद्रवेतरा च स्वाध्यायभूमि १० 'शय्या' मनोज्ञामनोज्ञवसतिः संस्तारको वा ११ 'आक्रोशो' दुर्वचनं १२ 'वधो' यष्ट्यादिताडनं १३ 'याचना' भिक्षणं तथाविधे प्रयोजने मार्गणं वा १४ अलाभरोगौ प्रतीतौ १६ तृणस्पर्शः संस्तारकाभावे तृणेषु शयानस्य १७ 'जल्लः' शरीरवस्त्रादिमलः १८ सत्कारपुरस्कारौ च वस्त्रादिपूजनाभ्युत्थानादिसंपादनेन सत्कारेण वा पुरस्करणं—सन्माननं सत्कारपुरस्कारः १९ ज्ञानं-सामान्येन मत्यादि कश्चिदज्ञानमिति श्रूयते २० दर्शनं सम्यग्दर्शनं, सहनं चास्य क्रियावादिवादिनां विचित्रमतश्रवणेऽपि निश्चलचित्ततया धारणं २१ 'प्रज्ञा' स्वयं विमर्शपूर्वको वस्तुपरिच्छेदो मतिज्ञानविशेषभूत

इति २२। 'दृष्टिवादो' द्वादशाङ्गः, स च पञ्चधा-परिकर्म १ सूत्र २ पूर्वगत ३ प्रथमानुयोग ४ चूलिका ५ भेदात्, तत्र दृष्टिवादस्य द्वितीये प्रस्थाने द्वाविंशतिः सूत्राणि, तत्र [सर्व] द्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणि, 'छिन्नच्छेयणइयाइं'ति इह यो नयः सूत्रं छिन्नं छेदेनेच्छति स छिन्नछेदनयः यथा 'धम्मो मंगलमुक्कट्ठ'मित्यादिश्लोकः सूत्रार्थतः छेदनयस्थितो न द्वितीयादिश्लोकानपेक्षते, इत्येव यानि सूत्राणि छिन्नछेदनयवन्ति तानि छिन्नछेदनयिकानि, तानि च स्वसमया-जिनमताश्रिता या सूत्राणां परिपाटिः-पद्धतिस्तस्यां स्वसमयपरिपाट्यां भवन्ति तया वा भवन्तीति, तथा 'अछिन्नच्छेयणइयाइं' ति इह यो नयः सूत्रमच्छिन्नं छेदेनेच्छति सोऽच्छिन्नछेदनयो यथा 'धम्मोमंगलमुक्कट्ठ'मित्यादिश्लोकोऽर्थतो द्वितीयादिश्लोकमपेक्षमाण इत्येवं यान्यच्छिन्नच्छेदनयवन्ति तान्यछिन्नच्छेदनयिकानि तानि चाऽऽजीविकसूत्रपरिपाट्यां-गोशालकमतप्रतिबद्धसूत्रपद्धत्यां तया वा भवन्ति, अक्षररचनाविभागस्थितानप्यर्थतोऽन्योऽन्यं प्रेक्षमाणानि भवन्तीति भावना, तथा 'तिकणइयाइं'ति नयत्रिकाभिप्रायाच्चिन्त्यन्ते यानि तानि नयत्रिकवन्तीति त्रिकनयिकानीत्युच्यन्ते, 'त्रैराशिकसूत्रपरिपाट्या' इह त्रैराशिका गोशालकमतानुसारिणोऽभिधीयन्ते, यस्मात्ते सर्वं त्र्यात्मकमिच्छन्ति, तद्यथा-जीवोऽजीवो जीवाजीवश्चेति, तथा लोकोऽलोको लोकालोकश्चेत्यादि, नयचिन्तायामपि ते त्रिविधनयमिच्छन्ति, तद्यथा-द्रव्यास्तिकः पर्यायास्तिकः उभयास्तिकश्चेति, एतदेव नयत्रयमाश्रित्य त्रिकनयिकानीत्युक्तमिति, तथा 'चउक्कनइयाइं'ति नयचतुष्काभिप्रायात्तैश्चिन्त्यन्ते यानि तानि चतुष्कनयिकानि, नयचतुष्कं चैवं नैगमनयो द्विविधः-सामान्यग्राही विशेषग्राही च, तत्र यः सामान्यग्राही स सङ्ग्रहेऽन्तर्भूतो विशेषग्राही तु व्यवहारे, तदेवं सङ्ग्रहव्यवहारऋजुसूत्राः शब्दादित्रयं चैक एवेति चत्वारो नया इति, 'स्वसमये'त्यादि तथैवेति, तथा पुद्गलानाम्-अण्वादीनां परिणामो-धर्मः पुद्गलपरिणामः, स च वर्णपञ्चकगन्धद्वयरसपञ्चस्पर्शाष्टक-

मेदाद्विविधा, तथा गुरुलघुरगुरुलघु इति भेदद्वयक्षेपात् द्वाविंशतिः तत्र गुरुलघु द्रव्य यथिर्यग्गामि वाय्वादि अगुरुलघुर्यत् स्थिरं सिद्धिक्षेत्र घण्टाकारव्यवस्थितज्योतिष्कविमानादीति, तथा माहिंदादीनि षट् विमाननामानि ॥ २२ ॥

तेवीस सुयगडज्झयणा प०, तं०—समए[1] वेतालिए[2] उवसग्गपरिण्णा[3] थीपरिण्णा[4] नरयविभत्ती[5] महावीर-थुई[6] कुसीलपरिभासिए[7] विरिए[8] धम्मे[9] समाही[10] मग्गे[11] समोसरणे[12] आहत्तहिए[13] गंथे[14] जमईए[15] गाथा[16] पुंडरीए[17] किरियाठाणा[18] आहारपरिण्णा[19] अपच्चक्खाणकिरिआ[20] अणगारसुय[21] अद्दइज्ज[22] णालंदइज्ज[23], जंबुद्दीवे ण दीवे भारहे वासे इमीसे ण ओसप्पिणीए तेवीसाए जिणाणं सूरुग्गमणमुहुत्तंसि केवलवरनाणदंसणे समुप्पण्णे, जंबु-दीवे ण दीवे इमीसे ण ओसप्पिणीए तेवीस तित्थकरा पुव्वभवे एक्कारसंगिणो होत्था तं०—अजित संभव अभिणंदण सुमई जाव पासो वद्धमाणो य, उसभे ण अरहा कोसलिए चोद्दसपुव्वी होत्था, जंबुद्दीवे ण दीवे इमीसे ओसप्पिणीए तेवीस तित्थंकरा पुव्वभवे मंडलियरायाणो होत्था तं०—अजित संभव अभिणंदण जाव पासो वद्धमाणो य, उसभे ण अरहा कोसलिए पुव्वभवे चक्कवट्टी होत्था, इमीसे ण रयणप्पभाए पुढवीए अत्थेगइयाण नेरइयाणं तेवीस पलिओवमाई ठिई प०, अहेसत्तमाए ण पुढवीए अत्थेगइयाण नेरइ-याण तेवीस सागरोवमाइं ठिई प०, असुरकुमाराण देवाणं अत्थेगइयाणं तेवीस पलिओवमाइं ठिई प०, सोहम्मीसाणाण देवाण अत्थेगइयाण तेवीस पलिओवमाइं ठिई प०, हेट्ठिममज्झिमगेविज्जाण देवाण जह-ण्णेण तेवीसं सागरोवमाइं ठिई प०, जे देवा हेट्ठिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि ण देवाण

उक्कोसेणं तेवीसं सागरोवमाइं ठिई प०, ते णं देवा तेवीसाए अद्धमासाणं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं तेवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइआ भवसिद्धिआ जीवा जे तेवीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुचिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं २३ ॥

त्रयोविंशतिस्थानकं सुगममेव, नवरं चत्वारि सूत्राणि अर्वाक् स्थितिसूत्रेभ्यः, तत्र सूत्रकृताङ्गस्य प्रथमे श्रुतस्कन्धे षोडशाध्ययनानि द्वितीये सप्त, तेषां चान्वर्थस्तदधिगमाधिगम्य इति ॥ २३ ॥

चउव्वीसं देवाहिदेवा प०तं०-उसभअजितसंभवअभिणंदणसुमइपउमप्पहसुपासचंदप्पहसुविधिसीअलसिज्जंसवासुपुज्जविमलअणंतधम्मसंतिकुंथुअरमल्लीमुणिसुव्वयनमिनेमीपासवद्धमाणा, चुल्लहिमवंतसिहरीणं वासहरपव्वयाणं जीवाओ चउव्वीसं चउव्वीस जोयणसहस्साइं णवबत्तीसे जोयणसए एगं अट्ठत्तीसइभागं जोयणस्स किंचिविसेसाहिआओ आयामेणं प० चउवीसं देवट्ठाणा सइंदया प०, सेसा अहमिंदा अनिंदा अपुरोहिआ, उत्तरायणगते णं सूरिए चउवीसंगुलिए पोरिसिछायं णिव्वत्तइत्ता णं णिअट्टति, गंगासिंधूओ णं महाणदीओ पवाहे सातिरेगेणं चउवीसं कोसे वित्थारेणं प०, रत्तारत्तवतीओ णं महाणदीओ पवाहे सातिरेगे चउवीसं कोसे वित्थारेणं पन्नत्ता, इमीसे णं रयणप्पभाए पुढवीए अत्थे० चउवीसं पलिओवमाइं० अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं चउवीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं चउ-

वीस पलिओवमाइ ठिई प०, सोहम्मीसाणे ण देवाणं अत्थेगइयाण चउवीसं पलिओवमाइ ठिई प०, हेट्ठि-मउवरिमगेवेज्जाण देवाण जहण्णेण चउवीस सागरोवमाइ ठिई प, जे देवा हेट्ठिममज्झिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि ण देवाण उक्कोसेण चउवीस सागरोवमाइ ठिई प०, ते णं देवा चउवीसाए अद्ध-मासाण आणमति वा पाणमति वा ऊससति वा नीससंति वा तेसि ण देवाण चउवीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, सतेगइया भवसिद्धिया जीवा जे चउवीसाए भवग्गहणेहिं सिज्झिस्सति बुज्झिस्सति मुच्चिस्सति परिनिव्वाइस्सति सव्वदुक्खाणमत करिस्संति ॥ २४ ॥

चतुर्विंशतिस्थानके पर् सूत्राणि स्थितेः प्राक्, सुगमानि च, नवरं देवानाम्—इन्द्रादीनामधिका देवा पूज्यत्वाद्देवाधिदेवा इति, तथा 'जीवाओ'त्ति जम्बूद्वीपलक्षणवृत्तक्षेत्रस्य वर्षाणां वर्षधराणां (च) ऋज्वी सीमा जीवोच्यते, आरोपितज्याधनुर्जीवाकल्पत्वात्, तयोश्च लघुहिमवच्छिखरिमत्कयोः प्रमाण २४९३२ अष्टत्रिंशद्भागम योजनस्य किञ्चिद्विशेषाधिकः, अत्र गाथा—'चउवीस सहस्साइ नव य सए जोयणाण बत्तीसे । चुल्लहिमवतजीवा आयामेणं कलद्ध च ॥ १ ॥" त्ति, कलार्द्धमिति—एकोनविंशतिभागस्यार्द्धं, तथा-ष्टत्रिंशद्भाग एव भवतीति चतुर्विंशतिर्देवस्थानानि—देवभेदाः, दश भवनपतीनां, अष्टौ व्यन्तराणां, पञ्च ज्योतिष्कानां, एकं कल्पो-पपन्नवैमानिकानां, एवं चतुर्विंशतिः, सेन्द्राणि चमरेन्द्राद्यधिष्ठितानि शेषाणि, च ग्रैवेयकानुत्तरसुरलक्षणानि अह अहं इत्येवमिन्द्रा येषु तान्यहमिन्द्राणि, प्रस्तारमेन्द्रकाणीत्यर्थः, अत एव अनिन्द्राणि—अविद्यमाननायकानि अपुरोहितानि—अविद्यमानशान्तिकर्मकारीणि, उपलक्षणपरत्वादस्याविद्यमानसेवकजनानीति, तथोत्तरायणगत'—सर्वाभ्यन्तरमण्डलप्रविष्टः सूर्य कर्कसङ्क्रान्तिदिन इत्यर्थ, चतुर्विंशत्य-

ङ्गुलिकां पौरुष्यां—प्रहरे भवा छाया पौरुषीया तां छायां हस्तप्रमाणशङ्कोरिति गम्यते, 'निर्वर्त्य' कृत्वा णं वाक्यालङ्कारे 'निवर्तते' सर्वाभ्यन्तरमण्डलात् द्वितीयमण्डलमागच्छति, आह च-'आसाढमासे दुपये'त्यादि, 'पवह' इति यतः स्थानान्नदी प्रवहति—वोढुं प्रवर्त्तेत, स च पद्महृदात्तोरणेन निर्गम इह सम्भाव्यते, न पुनर्योऽन्यत्र प्रवहशब्देन मकरमुखप्रणालनिर्गमः प्रपातकुण्डनिर्गमो वा विवक्षितः, तत्र हि जंबूद्वीपप्रज्ञप्त्यामिह च पञ्चविंशतिक्रोशप्रमाणा गङ्गादिनद्यो विस्तारतोऽभिहिताः ॥ २४ ॥

पुरिमपच्छिमगाणं तित्थगराणं पंचजामस्स पणवीसं भावणाओ पण्णत्ता, तं जहा—ईरिआसमिई मणगुत्ती वयगुत्ती आलोयभायणभोयणं आदाणमंडमत्तनिक्खेवणासमिई ५ अणुवीतिभासणया कोहविवेगे लोभविवेगे भयविवेगे हासविवेगे ५ उग्गहअणुण्णवणया उग्गहसीमजाणणया सयमेव उग्गहं अणुगिण्हणया साहम्मियउग्गहं अणुण्णविय परिभुंजणया साहारणभत्तपाणं अणुण्णविय पडिभुंजणया ५ इत्थीपसुपंडगसंसत्तगसयणासणवज्जणया इत्थीकहविवज्जणया इत्थीणं इंदियाणमालोयणवज्जणया पुव्वरयपुव्वकीलिआणं अणणुसरणया पणीताहारविवज्जणया ५ सोइंदियरागोवरई चक्खिंदियरागोवरई घाणिंदियरागोवरई जिब्भिंदियरागोवरई फासिंदियरागोवरई ५, मल्ली णं अरहा पणवीसं धणु उड्ढं उच्चत्तेणं होत्था, सव्वेवि दीहवेयड्ढपव्वया पणवीसं जोयणाणि उड्ढं उच्चत्तेणं प० पणवीसं पणवीसं गाउआणि उव्विद्धेणं प०, दोच्चाए णं पुढवीए पणवीसं णिरयावाससयसहस्सा प० [आयारस्स णं भगवओ सचूलिआयस्स पणवीसं अज्झयणा प० तं—सत्थपरिण्णा[1] लोगविजओ[2] सीओसणीअ[3] सम्मत्तं[4]। आवंति[5] धुय[6]विमोह[7] उवहाणसुयं[8] महपरिण्णा[9] ॥१॥

पिंडेसण[१] सिज्जरिआ[११] मासस्सपणा[१२] य[१३] वत्थ[१४] पाएसा[१५]। उग्गहपडिमा[१६] सत्तिक्कसत्तया[२३] भावण[२४] विमुत्ती[२५] ॥२॥ निसीहज्झयण पणवीसइमं। मिच्छादिट्ठिविगलिंदिए ण अपज्जत्तए ण संकिलिट्ठपरिणामे णामस्स कम्मस्स पणवीस उत्तरपयडीओ णिबंधति–तिरियगतिनाम विगलिंदियजातिनाम ओरालिअसरीरणाम तेअगसरीरणाम कम्मणसरीरनाम हुंडगसंठाणनाम ओरालिअसरीरंगोवंगणाम छेवट्ठसंघयणनाम वण्णनाम गंधणाम रसणाम फासणाम तिरिआणुपुव्विनाम अगुरुलहुनाम उवघायनाम तसनाम थावरणाम अपज्जत्तयणाम पत्तेयसरीरणामं अथिरणाम असुभणाम दुभगणाम अणादेज्जनाम अजसोकित्तिनाम निम्माणनाम २५, गंगासिंधूओ ण महाणदीओ पणवीसं गाऊयाणि पुहुत्तेण दुहओ घडमुहपवित्तिएण मुत्तावलिहारसंठिएण पवातेण पडति, रत्तारत्तवईओ ण महाणदीओ पणवीस गाउयाणि पुहुत्तेण मकरमुहपवित्तिएण मुत्तावलिहारसंठिएण पवातेण पडति, लोगबिंदुसारस्स ण पुव्वस्स पणवीस वत्थू प०, इमीसे ण रयणप्पभाए पुढवीए अत्थेगइयाण नेरइयाणं पणवीस पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाइं नेरइयाण पणवीस सागरोवमाइं ठिई प०, असुरकुमाराणं देवाण अत्थेगइयाणं पणवीसं पलिओवमाइं ठिई प०, सोहम्मीसाणे णं देवाण अत्थेगइयाण पणवीस पलिओवमाइं ठिई प०, मज्झिमहेट्ठिमगेवेज्जाण देवाण जहण्णेण पणवीस सागरोवमाइं ठिई प०, जे देवा हेट्ठिमउवरिमगेवेज्जगविमाणेसु देवत्ताए उववण्णा तेसि ण देवाण उक्कोसेण पणवीस सागरोवमाइं ठिई प०, ते णं देवा पणवीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा

अत्थेगइयाणं छव्वीसं पलिओवमाइं ठिई प०, मज्झिममज्झिमगेवेज्जयाणं देवाणं जहण्णेणं छव्वीसं सागरोवमाइं ठिई प०, जे देवा मज्झिमहेट्ठिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं छव्वीसं सागरोवमाइं ठिई प० ते णं देवा छव्वीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं छव्वीसं वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे छव्वीसेहिं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २६ ॥

षड्विंशतिस्थानकं व्यक्तमेव, नवरं उद्देशनकाला यत्र श्रुतस्कन्धेऽध्ययने च यावन्त्यध्ययनान्युद्देशका वा तत्र तावन्त एव उद्देशनकाला–उद्देशावसराः श्रुतोपचाररूपा इति, तथा अभव्यानां त्रिपुञ्जीकरणाभावेन सम्यक्त्वमिश्ररूपं प्रकृतिद्वयं सत्तायां न भवतीति षड्विंशतिसत्कर्मांशा भवन्तीति ॥ २६ ॥

सत्तावीसं अणगारगुणा प० तं०–पाणाइवायाओ वेरमणं मुसावायाओ वेरमणं अदिन्नादाणाओ वेरमणं मेहुणाओ वेरमणं परिग्गहाओ वेरमणं सोइंदियनिग्गहे चक्खिंदियनिग्गहे घाणिंदियनिग्गहे जिब्भिंदियनिग्गहे फासिंदियनिग्गहे कोहविवेगे माणविवेगे मायाविवेगे लोभविवेगे भावसच्चे करणसच्चे जोगसच्चे खमा विरागया मणसमाहरणया वयसमाहरणया कायसमाहरणया णाणसंपण्णया दंसणसंपण्णया चरित्तसंपण्णया वेयणअहियासणया मारणंतीयअहियासणया, जंबुद्दीवे दीवे अभिइवज्जेहिं सत्तावीसाए णक्खत्तेहिं

दिट्ठि'त्यादि, मिथ्यादृष्टिरेव तिर्यग्गत्यादिकाः कर्म्मप्रकृतीर्बध्नाति न सम्यग्दृष्टिः, तासां मिथ्यात्वप्रत्ययत्वादिति मिथ्यादृष्टिग्रहण, विकलेन्द्रियो-द्वित्रिचतुरिन्द्रियाणामन्यतमः, णामित्यलङ्कारे, पर्याप्तोऽन्या अपि बध्नातीत्यपर्याप्तग्रहण, अपर्याप्तक एव ह्येता अप्रशस्ताः परिवर्तमानिका बध्नाति, सोऽप्येता' सक्लिष्टपरिणामो बध्नातीति सक्लिष्टपरिणाम इत्युक्तम्, अयमपि द्वीन्द्रियाद्यपर्याप्तकप्रायोग्यं बध्नाति, तत्र 'विगलिंदियजाइनामं'ति कदाचित् द्वीन्द्रियजात्या सह पञ्चविंशतिः कदाचित् त्रीन्द्रियजात्या एवमितरथाऽपीति, 'गगा' इत्यादि पञ्चविंशतिगव्यूतानि पृथुत्वेन यः प्रपातस्तेनेति शेषः, 'दुहओ'त्ति द्वयोर्दिशोः पूर्वतो गङ्गा अपरत' सिन्धुरि-त्यर्थ, पद्मद्रहाद्विनिर्गते पञ्च २ योजनशतानि पर्वतोपरि गत्वा दक्षिणाभिमुखे प्रवृत्ते 'घडमुहपवित्तिएणं'ति घटमुखादिव पञ्चविंश तिकोशपृथुलजिह्विकात् मकरमुखप्रणालात् प्रवृत्तेन मुक्तावलीनां मुक्तासरीणां यो हारस्तत्संस्थितेन प्रपातेन—प्रपतज्जलसतानेन योजनशतोच्छ्रितस्य हिमवतोऽधोवर्त्तिनोः स्वकीययो' प्रपातकुण्डयोः प्रपततः, एव रक्तारक्तवत्यौ, नवरं शिखरिवर्षधरोपरिप्रतिष्ठि तपुण्डरीकह्रदात्प्रपतत इति, तथा लोकबिन्दुसार—चतुर्दशपूर्वमिति ॥ २५ ॥

छव्वीस दसकप्पववहाराण उद्देसणकाला प० त०—दस दसाण छ कप्पस्स दस ववहारस्स, अभवसिद्धियाण जीवाण मोहणिज्जस्स कम्मस्स छव्वीस कम्मंसा सतकम्मा प० त०—मिच्छत्तमोहणिज्ज सोलस कसाया इत्थीवेदे पुरिसवेदे नपुसकवेदे हास अरति रति भयं सोग दुगुछा,इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाण छव्वीस पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाण नेरइयाण छव्वीस सागरोवमाइं ठिई प०, असुरकुमाराण देवाण अत्थेगइयाणं छव्वीस पलिओवमाइं ठिई प०. सोहम्मीसाणे णं देवाण

यत्प्रतिलेखनाक्रियां यथोक्तां सम्यगुपयुक्तः कुरुते योगसत्यं—योगानां—मनःप्रभृतीनामवितथत्वं १७ क्षमा—अनभिव्यक्तक्रोधमान-स्वरूपस्य द्वेषसञ्ज्ञितस्याप्रीतिमात्रस्याभावः, अथवा क्रोधमानयोरुदयनिरोधः, क्रोधमानविवेकशब्दाभ्यां तदुदयप्राप्तयोस्तयोर्निरोधः प्रागेवाभिहित इति न पुनरुक्तताऽपीति, १८ विरागता अभिष्वङ्गमात्रस्याऽभावः,अथवा मायालोभयोरनुदयो, मायालोभविवेकशब्दाभ्यां तूदयप्राप्तयोस्तयोर्निरोधः प्रागभिहित इतीहापि न पुनरुक्ततेति १९, मनोवाक्कायानां समाहरणता,पाठान्तरतः समन्वाहरणता-अकुशलानां रोधास्त्रयः २२ ज्ञानादिसम्पन्नतास्तिस्रः २५ वेदनातिसहनता—शीताद्यतिसहनं २६ मारणान्तिकातिसहनता—कल्याणमित्रबुद्ध्या मारणान्तिकोपसर्गसहनमिति २७, तथा जम्बूद्वीपे न धातकीखण्डादौ अभिजिद्वर्जैः सप्तविंशत्या नक्षत्रैर्व्यवहारः प्रवर्त्तते, अभिजिन्नक्षत्रस्योत्तराषाढचतुर्थपादानुप्रवेशनादिति, तथा मासो नक्षत्रचन्द्राभिवर्द्धितऋत्वादित्यमासभेदात्पञ्चविधोऽन्यत्रोक्तः, तत्र नक्षत्रमासः—चन्द्रस्य नक्षत्रमण्डलभोगकाललक्षणः सप्तविंशतिः रात्रिन्दिवानि-अहोरात्राणि रात्रिन्दिवाग्रेणेति—अहोरात्रपरिमाणापेक्षयेदं परिमाणं नतु सर्वथा, तस्याधिकत्वाद्, आधिक्य चाहोरात्रसप्तषष्टिभागानामेकविंशत्येति, "विमाणपुढवी"त्ति विमानानां पृथिवी—भूमिका, तथा वेदकसम्यक्त्वबन्धः—क्षायोपशमिकसम्यक्त्वहेतुभूतशुद्धदलिकपुञ्जरूपा दर्शनमोहनीयप्रकृतिस्तस्य 'उवरओ'त्ति प्राकृतत्वादुद्वलको—वियोजको जन्तुः तस्य मोहनीयकर्मणोऽष्टाविंशतिविधस्य मध्ये सप्तविंशतिरुत्तरप्रकृतयः सत्कर्मांशाः सत्तायामित्यर्थः, एकस्योद्वलितत्वादिति, तया श्रावणमासस्य शुद्धसप्तम्यां सूर्यः सप्तविंशत्यङ्गुलिकां हस्तप्रमाणशङ्कोरिति गम्यते पौरुषीं छायां निर्वर्त्य दिवस—क्षेत्रं—रविकरप्रकाशमाकाशं निवर्द्धयन्—प्रकाशहान्या हानिं नयन् रजनीक्षेत्रम्—अन्धकाराक्रान्तमाकाशमभिवर्द्धयन्—प्रकाशहान्या वृद्धिं नयन्—चारं चरति—व्योममण्डले भ्रमणं करोति, अयमत्र भावार्थः—इह किल स्थूलन्यायमाश्रित्य आषाढ्यां चतुर्विंशत्यङ्गुलप्र-

सवषहारे वट्टति, पगमेगे ण णक्खत्तमासे सत्तावीसाहिं राइंदियाहिं राइंदियग्गेण प०, सोहम्मीसाणेसु कप्पेसु विमाणपुढवी सत्तावीस जोयणसयाइं बाहल्लेण प०, वेयगसम्मत्तबन्धोवरयस्स णं मोहणिज्जस्स कम्मस्स सत्तावीस उत्तरपगडीओ सतकम्मसा प०, सावणसुद्धसत्तमीसु ण सूरिए सत्तावीसंगुलिय पोरिसिच्छाय णिव्वत्तइत्ता ण दिवसखेत्त नियट्टेमाणे रयणिखेत्त अभिणिवड्ढमाणे चार चरइ, इमीसे ण रयणप्पमाए पुढवीए अत्थेगइयाण नेरइयाण सत्तावीस पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाण नेरइयाण सत्तावीस सागरोवमाइ ठिई प०, असुरकुमाराण देवाण अत्थेगइयाण सत्तावीस पलिओवमाइ ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाण देवाण सत्तावीस पलिओवमाइ ठिई प०, मज्झिमउवरिमगेवेज्जयाण देवाण जहण्णेण सत्तावीस सागरोवमाइ ठिई प०, जे देवा मज्झिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि ण देवाणं उक्कोसेण सत्तावीस सागरोवमाइ ठिई प०, ते ण देवा सत्तावीसाए अद्धमासेहिं आणमति वा पाणमति वा उस्ससति वा नीससति वा,तेसि ण देवाण सत्तावीस वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, सतेगइया भवसिद्धिया जीवा जे सत्तावीसाए भवग्गहणेहिं सिज्झिस्सति बुज्झिस्सति मुच्चिस्सति परिनिव्वाइस्सति सव्वदुक्खाणमत करिस्सति ॥ २७ ॥

सप्तविंशतिस्थानमपि व्यक्तमेव, केवलं पद् सूत्राणि विवेचनीयानि, तत्र अनगाराणां—साधूनां गुणाः—चारित्रविशेषरूपाः अनगारगुणाः, तत्र महाव्रतानि पञ्चेन्द्रियनिग्रहाश्च पञ्च क्रोधादिविवेकाश्चत्वारः सत्यानि त्रीणि, तत्र भावसत्य—शुद्धान्तरात्मता करणसत्यं—

जीवे णं देवगइम्मि बंधमाणे नामस्स कम्मस्स अट्ठावीसं उत्तरपगडीओ णिबंधति, तं०—देवगतिनामं पंचिंदियजातिनामं वेउव्वियसरीरनामं तेयगसरीरनामं कम्मणसरीरनामं समचउरंससंठाणणामं वेउव्वियसरीरंगोवंगणामं वण्णणामं गंधणामं रसणामं फासनामं देवाणुपुव्विणामं अगुरुलहुनामं उवघायनामं पराघायनामं उस्सासनामं पसत्थविहायोगइणामं तसनामं बायरणामं पज्जत्तनामं पत्तेयसरीरनामं थिराथिराणं सुभासुभाणं आएज्जाणाएज्जाणं दोण्हं अण्णयरं एगं नामं णिबंधइ जसोकित्तिनामं निम्माणनामं, एवं चेव नेरइआवि, णाणत्तं अप्पसत्थविहायोगइणामं हुंडगसंठाणणामं अथिरणामं दुब्भगणामं असुभनामं दुस्सरनामं अणादिज्जणामं अजसोकित्तीणामं निम्माणनामं, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, अहे सत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु-देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, उवरिमहेट्ठिमगेवेज्जयाणं देवाणं जहण्णेणं अट्ठावीसं सागरोवमाइं ठिई प०, जे देवा मज्झिमउवरिमगेवेज्जएसु विमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं अट्ठावीसं सागरोवमाइं ठिई प०, ते णं देवा अट्ठावीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं अट्ठावीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे अट्ठावीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २८ ॥

माणा पौरुषीच्छाया भवति, दिनसप्तके सातिरेक छायाऽङ्गुल वर्द्धते, ततश्च श्रावणशुद्धसप्तम्यामङ्गुलत्रयं वर्द्धते, सातिरेकैकविंशतित मदिनरात्रस्या', तदेवमाषाढ्याः सप्तैरङ्गुलैः सह सप्तविंशतिरङ्गुलानि भवन्ति, निश्चयतस्तु कर्कसङ्क्रान्तेरारभ्य यत्सातिरेकैकविंशति-तमं दिनं तत्रोक्तरूपा पौरुषीच्छाया भवति ॥ २७ ॥

अट्ठावीसविहे आयारपकप्पे प० त०–मासिआ आरोवणा सपंचराईमासिया आरोवणा सदसराइमासिआ आरोवणा एवं चेव दोमासिआ आरोवणा सपंचराईदोमासिया आरोवणा एवं तिमासिआ आरोवणा चउमासिया आरोवणा उवघाइया आरोवणा अणुवघाइया आरोवणा कसिणा आरोवणा अकसिणा आरोवणा एतावता आयारपकप्पे एताव ताव आयरियव्वे, भवसिद्धियाणं जीवाणं अत्थेगइयाणं मोहणिज्जस्स कम्मस्स अट्ठावीसं कम्मंसा संतकम्मा प०त०-सम्मत्तवेअणिज्जं मिच्छत्तवेयणिज्जं सम्मामिच्छत्तवेयणिज्जं सोलस कसाया णव णोकसाया, आभिणिबोहियणाणे अट्ठावीसइविहे प० त०–सोइंदियअत्थावग्गहे चक्खिंदियअत्थावग्गहे घाणिंदियअत्थावग्गहे जिब्भिंदियअत्थावग्गहे फासिंदियअत्थावग्गहे णोइंदियअत्थावग्गहे सोइंदियवंजणोग्गहे घाणिंदियवंजणोग्गहे जिब्भिंदियवंजणोग्गहे फासिंदियवंजणोग्गहे सोतिंदियईहा चक्खिंदियईहा घाणिंदियईहा जिब्भिंदियईहा फासिंदियईहा णोइंदियईहा सोतिंदियावाए चक्खिंदियावाए घाणिंदियावाए जिब्भिंदियावाए फासिंदियावाए णोइंदियावाए सोइंदिअधारणा चक्खिंदियधारणा घाणिंदियधारणा जिब्भिंदियधारणा फासिंदियधारणा णोइंदियधारणा, ईसाणे णं कप्पे अट्ठावीसं विमाणावाससयसहस्सा प०,

जीवे णं देवगइम्मि बंधमाणे नामस्स कम्मस्स अट्ठावीसं उत्तरपगडीओ णिबंधति, तं०—देवगतिनामं पंचिंदियजातिनामं वेउव्वियसरीरनामं तेयगसरीरनामं कम्मणसरीरनामं समचउरंससंठाणणामं वेउव्वियसरीरंगोवंगणामं वण्णणामं गंधणामं रसणामं फासनामं देवाणुपुव्विणामं अगुरुलहुनामं उवघायनामं पराघायनामं उस्सासनामं पसत्थविहायोगइणामं तसनामं बायरणामं पज्जत्तनामं पत्तेयसरीरनामं थिराथिराणं सुभासुभाणं आएज्जाणाएज्जाणं दोण्हं अण्णयरं एगं नामं णिबंधइ जसोकित्तिनामं निम्माणनामं, एवं चेव नेरइआवि, णाणत्तं अप्पसत्थविहायोगइणामं हुंडगसंठाणणामं अथिरणामं दुब्भगणामं असुभनामं दुस्सरनामं अणादिज्जणामं अजसोकित्तीणामं निम्माणनामं, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, अहे सत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं अट्ठावीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं अट्ठावीसं पलिओवमाइं ठिई प०, उवरिमहेट्ठिमगेवेज्जयाणं देवाणं जहण्णेणं अट्ठावीसं सागरोवमाइं ठिई प०, जे देवा मज्झिमउवरिमगेवेज्जएसु विमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं अट्ठावीसं सागरोवमाइं ठिई प०, ते णं देवा अट्ठावीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा, तेसि णं देवाणं अट्ठावीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे अट्ठावीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ २८ ॥

अष्टाविंशतिस्थानकमपि व्यक्तं, नवरमिह पञ्च स्थितेः प्राक् सूत्राणि, तत्र आचारः प्रथमाङ्गं तस्य प्रकल्प अध्ययनविशेषो निशीथमित्यपराभिधानं आचारस्य वा-साध्वाचारस्य ज्ञानादिविषयस्य प्रकल्पो-व्यवस्थापनमित्याचारप्रकल्पः, तत्र कश्चित् ज्ञानाद्याचारविषये अपराधमापन्नस्य कस्यचित् प्रायश्चित्तं दत्तं, पुनरन्यमपराधविशेषमापन्नस्ततस्तत्रैव प्राक्तने प्रायश्चित्ते मासवहनयोग्यं मासिकं प्रायश्चित्तमारोपितमित्येव मासिक्यारोपणा भवति, तथा पञ्चरात्रिकशुद्धियोग्यं मासिकशुद्धियोग्यं चापराधद्वयमापन्नस्ततः पूर्वदत्ते प्रायश्चित्ते सपञ्चरात्रिमासिकप्रायश्चित्तारोपणात्सपञ्चरात्रमासिक्यारोपणा भवति, एवं मासिक्यारोपणा षट् ६ एवं द्विमासिक्यः ६ त्रिमासिक्यः ६ चतुर्मासिक्योऽपि ६ चतुर्विंशतिरारोपणाः, तथा सार्द्धदिनत्रयस्य पक्षस्य चोपघातनेन लघूनां मासादीनां प्राचीन प्रायश्चित्ते आरोपणा उपघातिकारोपणा, यदाह-"अद्धेण छिन्नसेसं पुव्वद्धेण तु संजुयं काउं । देज्जा य लहुयदाणं गुरुदाणं तत्तियं चेव ॥ १ ॥" ति यथा मासार्द्धं १५ पञ्चविंशतिकार्द्धं च सार्द्धद्वादश सर्वमीलने सार्द्धसप्तविंशतिरिति लघुमासः, तथा मासद्वयार्द्धं मासो मासिकस्यार्द्धं पक्ष उभयमीलने सार्द्धो मास इति लघुद्विमासिकं २५ तथा तेषामेव सार्द्धदिनत्रयाद्यनुद्घातनेन गुरूणामारोपणा अनुद्घातिकारोपणा २६, तथा यावतोऽपराधानापन्नस्तावतीनां तच्छुद्धीनामारोपणा कृत्स्नारोपणा २७ तथा बहूनपराधानापन्नस्य षण्मासान्तं तप इतिकृत्वा षण्मासाधिकं तपःकर्म तेष्वेवान्तर्भाव्य शेषमारोप्यते यत्र सा अकृत्स्नारोपणेत्यष्टाविंशतिः २८, एतच्च सम्यग् निशीथविंशतितमोद्देशकादवगम्यम्, अत्रैव निगमनमाह-एतावांस्तावदाचारप्रकल्पः, इह स्थानके आरोपणामाश्रित्य विवक्षितोऽन्यथा तद्व्यतिरेकेणाऽपि तस्योद्घातिकानुद्घातिकरूपस्य भावात्, अथवैतावानेवाज्ञ्य तावदाचारप्रकल्पः, शेषस्याऽत्रैवाऽन्तर्भावात्, तथा एतावत्तावदाचरितव्यमित्यपि, तथैव देवगतिसूत्रे स्थिरास्थिरयोः शुभाशुभयोरादेयानादेययोश्च परस्परं विरोधित्वेनैकदा

वन्धाभावादन्यदन्यतरद्बध्नातीत्युक्तं, तत्र चैकशब्दग्रहणं भाषामात्र एवाऽवसेयमिति, नारकसूत्रे विंशतिस्ता एव प्रकृतयोऽष्टानां तु स्थाने अष्टावन्या बध्नाति, एतदेवाह–'एवं चेवे' त्यादि, नानात्वं विशेषः ॥ २८ ॥

एगूणतीसइविहे पावसुयपसंगे णं प० तं–भोमे उप्पाए सुमिणे अंतरिक्खे अंगे सरे वंजणे लक्खणे, भोमे तिविहे प० तं० सुत्ते वित्ती वत्तिए, एवं एक्केक्कं तिविहं, विकहाणुजोगे विज्जाणुजोगे मंताणुजोगे जोगाणुजोगे अण्णतित्थियपवत्ताणुजोगे, आसाढे णं मासे एगूणतीसराइंदिआइं राइंदियग्गेणं प०, (एवं चेव) भद्दवए णं मासे कत्तिए णं मासे पोसे णं मासे फग्गुणे णं मासे वइसाहे णं मासे, चंददिणे णं एगूणतीसं मुहुत्ते सातिरेगे मुहुत्तग्गेणं प०, जीवे णं पसत्थज्झवसाणजुत्ते भविए सम्मदिट्ठी तित्थकरनामसहिआओ णामस्स णियमा एगूणतीसं उत्तरपगडीओ निबंधित्ता वेमाणिएसु देवेसु देवत्ताए उववज्जइ, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं एगूणतीसं पलिओवमाइं ठिई प०, अहे सत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं एगूणतीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं एगूणतीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं एगूणतीसं पलिओवमाइं ठिई प०, उवरिममज्झिमगेवेज्जयाणं देवाणं जहण्णेणं एगूणतीसं सागरोवमाइं ठिई प०, जे देवा उवरिमहेट्ठिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं एगूणतीसं सागरोवमाइं ठिई प०, ते णं देवा एगूणतीसाए अद्धमासेहिं आणमंति वा पाणमंति वा ऊससंति वा नीससंति वा तेसि णं देवाणं एगूणतीसं वाससहस्सेहिं आहारट्ठे

समुप्पन्नइ, मतेगइया भवसिद्धिया जीवा जे एगूणतीसभवग्गहणेहिं सिज्झिस्सति बुज्झिस्सति मुच्चिस्सति परिनिव्वाइस्सति सव्वदुक्खाणमत करिस्सति ॥ सूत्र २९ ॥

एकोनत्रिंशत्तमस्थानकमपि व्यक्तमेव, नवरं नवेह सूत्राणि स्थितेः माह' तत्र पापोपादानानि श्रुतानि पापश्रुतानि तेषां प्रसङ्ग –तथाऽऽसेवनारूप' पापश्रुतप्रसङ्गः, स च पापश्रुतानामेकोनत्रिंशद्विधत्वात् तद्विध उक्तः, पापश्रुतविषयतया पापश्रुतान्येवो च्यन्ते, अत एवाह–'भोमे' त्यादि, तत्र भौम भूमिविकारफलाभिधानप्रधान निमित्तशास्त्र तथा 'उत्पातं' सहजरुधिरवृष्ट्यादिलक्षणो त्पातफलनिरूपक निमित्तशास्त्रं, एवं स्वप्न–स्वप्नफलाविर्भावकं, 'अन्तरिक्षम्' आकाशप्रभवग्रहयुद्धभेदादिभावफलनिवेदकं अङ्गम्शरी रावयवप्रमाणस्पन्दितादिविकारफलोद्भावक 'स्वर' जीवाजीवादिकाभितस्वस्वरूपफलाभिधायकं व्यञ्जन–मषादिव्यञ्जनफलोपदर्शक लक्षण–लाञ्छनाद्यनेकविधलक्षणव्युत्पादकमित्यष्टौ, एतान्येव सूत्रवृत्तिवार्त्तिकभेदाच्चतुर्विंशतिः, तत्राङ्गवर्जितानामन्येषां सूत्र सहस्र प्रमाणं वृत्तिर्लक्षप्रमाणा वार्त्तिक–वृत्तेर्व्याख्यानरूप कोटिप्रमाण, अङ्गस्य तु सूत्र लक्षं वृत्तिः कोटी वार्त्तिकमपरिमितमिति, तथा विकथानुयोग –अर्थकामोपायप्रतिपादनपराणि कामन्दकवात्स्यायनादीनि भारतादीनि वा शास्त्राणि २५ तथा विद्यानुयोगो–रोहिणी प्रभृतिविद्यासाधनाभिधायकानि शास्त्राणि २६ मन्त्रानुयोगश्चेटकादिमन्त्रसाधनोपायशास्त्राणि २७ योगानुयोगो–वशीकरणादियोगा भिधायकानि हरमेखलादिशास्त्राणि २८ अन्यतीर्थिकेभ्यः—कपिलादिभ्य सकाशाद्यः प्रवृत्तः स्वकीयाचारवस्तुतत्त्वानामनुयोगो– विचार' तत्पुरस्करणार्थः शास्त्रसन्दर्भ इत्यर्थ' सोऽन्यतीर्थिकप्रवृत्तानुयोग इति २९। तथाऽऽषाढादय एकान्तरिता षण्मासा एकोनत्रिं शद्दिवा इति–रात्रिदिवपरिमाणेन भवन्ति स्थूलन्यायेन, कृष्णे पक्षे प्रत्येक रात्रिन्दिवस्यैकस्य क्षयात्, आह च–"आसाढबहुलपक्खे

भद्दवए कत्तिए य पोसे य । फग्गुणवइसाहेसु य बोद्धव्वा ओमरत्ताओ" ॥ १ ॥ त्ति [ आपाढकृष्णपक्षे भाद्रपदे कार्तिके च पौषे च । फाल्गुने वैशाखे च बोद्धव्या अवमरात्रयः ॥ १ ॥ ] इयमत्र भावना–चन्द्रमासो हि एकोनत्रिंशद्दिनानि दिनस्य च द्विपष्टिभागानां द्वात्रिंशत्, ऋतुमासश्च त्रिंशदेव दिनानि भवन्तीति चन्द्रमासापेक्षया ऋतुमासोऽहोरात्राद्विपाष्टिभागानां त्रिंशता साधिको भवति, ततश्च प्रत्यहोरात्रं चन्द्रदिनमेकैकेन द्विषष्टिभागेन हीयते इत्यवसीयते, एवं द्विषष्ट्या चन्द्रदिवसानामेकपष्टचहोरात्राणां भवतीत्येवं सातिरेके मासद्वये एकमवमरात्रं भवतीति, विशेषस्त्विह चन्द्रप्रज्ञप्तेरवसेय इति, तथा 'चंददिणे णं' ति चन्द्रदिनं–प्रतिपदादिका तिथिः तच्चैकोनत्रिंशत् मुहूर्त्ताः सातिरेकमुहूर्त्तपरिमाणेनेति, कथं ?, यतः किल चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशच्च दिनद्विपष्टिभागा भवन्ति, ततश्चन्द्रदिनं चन्द्रमासस्य त्रिंशता गुणनेन मुहूर्त्तराशीकृतस्य त्रिंशता भागहारे एकोनत्रिंशन्मुहूर्त्ता द्वात्रिंशच्च मुहूर्त्तस्य द्विपष्टिर्भागा लभ्यन्त इति, तथा जीवः प्रशस्ताध्यवसानादिविशेषणो वैमानिकेष्वुत्पत्तुकामो नामकर्मण एकोनत्रिंशदुत्तरप्रकृतीर्बध्नाति, ताश्चेमाः–देवगतिः १ पञ्चेन्द्रियजातिः २ वैक्रियद्वयं ४ तैजसकार्मणशरीरे ६ समचतुरस्र संस्थानं ७ वर्णादिचतुष्कं ११ देवानुपूर्वी १२ अगुरुलघु १३ उपघातं १४ पराघातं १५ उच्छ्वासं १६ प्रशस्तविहायोगतिः १७ त्रसं १८ बादरं १९ पर्याप्तं २० प्रत्येकं २१ स्थिरास्थिरयोरन्यतरत् २२ शुभाशुभयोरन्यतरत् २३ सुभगं २४ सुस्वरं २५ आदेयानादेययोरन्यतरत् २६ यशःकीर्त्त्ययशकीर्त्त्योरेकतरं २७ निर्माणं २८ तीर्थकरश्चेति ॥ २९ ॥

**तीसं मोहणीयठाणा प० तं–जे यावि तसे पाणे, वारिमज्झे विगाहिआ । उदएण कम्मा मारेई, महामोहं पकुव्वइ ॥१॥ सीसावेढेण जे केई, आवेढेइ अभिक्खणं । तिव्वासुभसमायारे, महामोहं पकुव्वइ ॥ २ ॥**

पाणिणा सपिहित्ताण, सोयमावरिय पाणिण। अतोनदंत मारेई, महामोह पकुव्वइ ॥३॥ जायतेयं समारम्भ, बहु ओरुंभिया जण। अतोधूमेण मारेई [ज्जा], महामोह पकुव्वइ ॥४॥ सिस्सम्मि जे पहणइ, उत्तमगम्मि चेयसा। विभज्ज मत्थय फाले, महामोह पकुव्वइ ॥५॥ पुणो पुणो पणिधिए, हरित्ता उवहसे जण। फलेण अदुवा दण्डेण, महामोह पकुव्वइ ॥ ६ ॥ गूढायारी निगूहिज्जा, माय मायाए छायए। असच्चवाई णिण्हाई, महामोह पकुव्वइ ॥ ७ ॥ धसेइ जो अभूएण, अकम्म अत्तकम्मुणा। अदुवा तुम कासित्ति, महामोह पकुव्वइ ॥ ८ ॥ जाणमाणो परिसओ, सच्चामोसाणि भासइ। अक्खीणझंझे पुरिसे, महामोहं पकुव्वइ ॥ ९ ॥ अणायगस्स नयव, दारे तस्सेव धंसिया। विउल विक्खोभइत्ताण, किच्चा ण पडिबाहिर ॥१०॥ उवगसतपि झपित्ता, पडिलोमाहिं वग्गुहिं। भोगभोगे वियारेई, महामोह पकुव्वइ ॥ ११ ॥ अकुमारभूए जे केई, कुमारभूएत्तिह वए। इत्थीहिं गिद्धे वसए, महामोह पकुव्वइ ॥ १२ ॥ अबम्भयारी जे केई, बम्भयारीत्तिह वए। गद्दहेव्व गवां मज्झे, विस्सरं नयई नद ॥ १३ ॥ अप्पणो अहिए बाले, मायामोस बहु भसे। इत्थीविसयगेहीए, महामोह पकुव्वइ ॥ १४ ॥ १२ ॥ ज निस्सिए उव्वहइ, जससाहिगमेण वा। तस्स लुब्भइ वित्तम्मि, महामोह पकुव्वइ ॥ १५ ॥ १३ ॥ ईसरेण अदुवा गामेण, अणिसरे ईसरीकए। तस्स सपयहीणस्स, सिरी अतुलमागया ॥ १६ ॥ ईसादोसेण आविट्ठे, कलुसाविलचेयसे। जे अतराय चेएइ, महामोह पकुव्वइ ॥ १७ ॥ १४ ॥ सप्पी जहा अडउड, भत्तार जो विहिंसइ। सेणावइं पसत्थार, महामोह

पकुव्वइ ॥ १८ ॥ १५ ॥ जे नायगं च रट्ठस्स, नेयारं निगमस्स वा । सेट्ठिं बहुरवं हंता, महामोहं पकुव्वइ ॥ १९ ॥ १६ ॥ बहुजणस्स णेयारं, दीवं ताणं च पाणिणं । एयारिसं नरं हंता, महामोहं पकुव्वइ ॥ २० ॥ १७ ॥ उवट्ठियं पडिविरयं, संजयं सुतवस्सियं । वुक्कम्म धम्माओ भंसेइ, महामोहं पकुव्वइ ॥ २१ ॥ १८ ॥ तहेवाणंतणाणीणं, जिणाणं वरदंसिणं । तेसिं अवण्णवं बाले, महामोहं पकुव्वइ ॥ २२ ॥ १९ ॥ नेयाइअस्स मग्गस्स, दुट्ठे अवयरई बहुं । तं तिप्पयंतो भावेइ, महामोहं पकुव्वइ ॥ २३ ॥ २० ॥ आयरियउवज्झाएहिं सुयं विणयं च गाहिए । ते चेव खिंसई बाले, महामोहं पकुव्वई ॥ २४ ॥ २१ ॥ आयरियउवज्झायाणं, सम्मं नो पडितप्पइ । अप्पडिपूय थद्धे, महामोहंपकुव्वइ ॥ २५ ॥ २२ ॥ अबहुस्सुए य जे केई. सुएणं पविकत्थई । सज्झायवायं वयइ, महामोहं पकुव्वइ ॥ २६ ॥ २३ ॥ अतवस्सीए य जे केई, तवेण पविकत्थइ । सव्वलोयपरे तेणे, महामोहं पकुव्वइ ॥ २७ ॥ २४ ॥ साहारणट्ठा जे केई, गिलाणम्मि उवट्ठिए । पभू ण कुणई किच्चं, मज्झंपि से न कुव्वइ ॥ २८ ॥ सढे नियडीपण्णाणे, कलुसाउलचेयसे । अप्पणो य अबोहीय, महामोहं पकुव्वइ ॥ २९ ॥ २५ ॥ जे कहाहिगरणाइं, संपउंजे पुणो पुणो । सव्वतित्थाण भेयाणं, महामोहं पकुव्वइ ॥ ३० ॥ २६ ॥ जे अ आहम्मिए जोए, संपओजे पुणो पुणो । सहाहेउं सहीहेउं, महामोहं पकुव्वइ ॥ ३१ ॥ २७ ॥ जे अ माणुस्सए भोए, अदुवा पारलोइए । तेऽतिप्पयंतो आसयइ, महामोहं पकुव्वइ ॥ ३२ ॥ २८ ॥ इड्ढी जुई जसो वण्णो, देवाणं बलवीरियं । तेसिं अवण्णवं बाले, महामोहं पकुव्वइ ॥ ३३ ॥ २९ ॥ अपस्समाणो पस्सामि,

दये जयस्से य गुज्झगे। अण्णाणी जिणपूयट्ठी, महामोहं पकुव्वइ ॥ ३४॥ ३०॥ थेरे णं मंडियपुत्ते तीसं वासाइं सामण्णपरियायं पाउणित्ता सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे, एगमेगे णं अहोरत्ते तीसमुहुत्ते मुहुत्तग्गेणं प०, एएसि णं तीसाए मुहुत्ताणं तीसं नामधेज्जा प० तं०–रोद्दे सत्ते मित्ते वाऊ सुपीए ५ अभिचंदे माहिंदे पलंबे बंभे सच्चे १० आणंदे विजए विस्ससेणे पायावच्चे उवसमे १५ ईसाणे तट्ठे भावियप्पा वेसमणे वरुणे २० सतरिसभे गंधव्वे अग्गिवेसायणे आतवे आवत्ते २५ तट्ठवे भूमहे रिसभे सव्वट्ठसिद्धे रक्खसे ३०, अरे णं अरहा तीसं धणुइं उड्ढं उच्चत्तेणं होत्था, सहस्सारस्स णं देविंदस्स देवरण्णो तीसं सामाणियसाहस्सीओ प०, पासे णं अरहा तीसं वासाइं अगारवासमज्झे वसित्ता अगाराओ अणगारियं पव्वइए, समणे भगवं महावीरे तीसं वासाइं अगारवासमज्झे वसित्ता अगाराओ अणगारियं पव्वइए, रयणप्पभाए णं पुढवीए तीसं निरयावाससयसहस्सा प० इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं तीसं पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं तीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं तीसं पलिओवमाइं ठिई प०, उवरिमउवरिमगेवेज्जयाणं देवाणं जहण्णेणं तीसं सागरोवमाइं ठिई प० जे देवा उवरिममज्झिमगेवेज्जएसु विमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं उक्कोसेणं तीसं सागरोवमाइं ठिई प०, ते णं देवा तीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं तीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया

**जीवा जे तीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्रं ३० ॥**

त्रिंशत्तमं स्थानकं सुगमम्, नवरं स्थितेरर्वागष्टौ सूत्राणि, तत्र मोहनीयं सामान्येनाष्टप्रकारं कर्म विशेषतश्चतुर्थी प्रकृतिः तस्य स्थानानि-निमित्तानि मोहनीयस्थानानि, तथा "जे आवि तसे" इत्यादि श्लोकः, यश्चाऽपि त्रसान् प्राणान्-स्त्र्यादीन् वारिमध्ये विगाह्य-प्रविश्योदकेन शस्त्रभूतेन मारयति कथं ?, आक्रम्य पादादिना स इति गम्यते मार्यमाणस्य महामोहोत्पादकत्वात्सङ्क्लिष्टचित्तत्वाच्च भवशतदुःखवेदनीयमात्मनो महामोहं प्रकरोति-जनयति १ तदेवंभूतं त्रसमारणेनैकं मोहनीयस्थानमेवं सर्वत्रेति। 'सीसा' श्लोकः, शीर्षावेष्टेन-आर्द्रचर्मादिमयेन यः कश्चिद्वेष्टयति स्त्र्यादित्रसानिति गम्यते अभीक्ष्णं-भृशं तीव्राशुभसमाचारः स इत्यस्य गम्यमानत्वात्स मार्यमाणस्य महामोहोत्पादकत्वेन आत्मनो महामोहं प्रकुरुत इति २, यावत्करणात् केषुचित्सूत्रपुस्तकेषु शेषमोहनीयस्थानाभिधानपराः श्लोकाः, सूचिताः, केषुचित् दृश्यन्त एवेति ते व्याख्यायन्ते-पाणिना-हस्तेन संपिधाय-स्थगयित्वा, किं तत् ?-'श्रोतो रन्ध्रं मुखमित्यर्थः तथा आवृत्य-अवरुध्य प्राणिनं ततः अन्तर्नदन्तं-गलमध्ये रवं कुर्वन्तं घुरघुरायमाणमित्यर्थः, मारयति स इति गम्यते, महामोहं प्रकरोतीति तृतीयं ३, 'जाततेजसं' वैश्वानरं 'समारभ्य' प्रज्वाल्य 'बहुं' प्रभूतं 'अवरुध्य' महामण्डपवाटादिषु प्रक्षिप्य 'जनं' लोकं अन्तःमध्ये धूमेन-वह्निलिङ्गेन अथवा अन्तर्धूमो यस्यासावन्तर्धूमस्तेन जाततेजसा विभक्तिपरिणामात् मारयति योऽसौ महामोहं प्रकरोति चतुर्थं ४, शीर्षे शिरसि यः प्रहन्ति-खड्गमुद्गरादिना प्रहरति प्राणिनमिति गम्यते, किंभूते स्वभावतः शिरसि ?-'उत्तमाङ्गे' सर्वावयवानां प्रधानावयवे तद्विघातेऽवश्यं मरणात् चेतसा-सङ्क्लिष्टेन मनसा न यथाकथञ्चिद-

स्यर्थ' तथा विभज्य मस्तकं मकृष्टप्रहारदानेन स्फोटयति-विदारयति ग्रीवादिकं कायमपीति गम्यते, स इत्यस्य गम्यमानत्वात् महा मोह प्रकरोतीति पञ्चम ५ । पौन पुन्येन प्रणिधिना-मायया यथा वाणिजकादिवेष विधाय गलकर्त्तका पथि गच्छता सह गत्वा विजन मारयति तथा हत्वा-विनाश्य इति गम्यते उपहसेत् आनन्दातिरेकात् 'जनं' मूर्खलोकं हन्यमान, कन हत्वा ?-'फलेन' योगभाविनेन मातुलिङ्गादिना 'अदुवा' अथवा दण्डेन प्रसिद्धेन स इति गम्यते, महामोह प्रकरोतीति षष्ठम् ६ । 'गूढाचारी' मच्छन्नाचारवान् निगूहयेत-गोपयेत्, स्वकीय मच्छन्न दुष्टमाचार तथा मायां परकीयां मायया स्वकीयया छादयेत्-जयेत्, तथा शकुनिमारकाच्छदैरात्मानमावृत्य शकुनीन् गृह्णन्त स्वकीयमायया शकुनिमायां छादयन्ति, यथा असत्यवादी 'निह्नवी' अपलापकः स्वकीयाया मूलगुणोत्तरगुणप्रतिसेवायाः सूत्रार्थयोर्वा महामोहं मकरोतीति सप्तम ७ । ध्वंसयति-छायया नाशयति इति य' पुरुषोऽभूतेन-असद्भूतेन, कं ?-अकर्मकं-अविद्यमानदुश्चेष्टित आत्मकर्मणा-आत्मकृतऋषिघातादिना दुष्टव्यापारेण 'अदुवा' अथवा यद न्येन कृतं तदाश्रित्य परस्य समक्षमेव त्वमकार्षीरेतन्महापापमिति वदति, वदिक्रियायाः गम्यमानत्वात्स इत्यस्यापि गम्यमानत्वात् महामोह प्रकरोतीत्यष्टमं ८ । जानानः यथा अनुसमेतत्परिषद सभायां बहुजनमध्ये इत्यर्थ , सत्यामृषाणि-किञ्चित्सत्यानि बहुसत्यानि वस्तूनि वाक्यानि वा भाषते 'अक्षीणझञ्झ' अनुपरतकलहः य स इति गम्यते, महामोह प्रकरोतीति नवम ९। अनायक -अविद्यमाननायको राज्ञा तस्य नयवान्-नीतिमानमात्यः स तस्यैव राज्ञो 'दारान्' कलत्र द्वारं वा-अर्थागमस्योपाय ध्वंसयित्वा भोगभोगान् विदारयतीति सम्बन्धः, किं कृत्वा ?-'विपुल' प्रचुरमित्यर्थ', 'विक्षोभ्य' सामन्तादिपरिकरभेदेन सक्षोभ्य नायकं तस्य क्षोभ जन यित्वेत्यर्थः, 'कृत्वा' विधाय प्रमिस्पलद्वारे प्रतिषाय-अनधिकारिणं दारेभ्योऽर्थागमद्वारेभ्यो वा, द्वारान् राज्य वा स्वयमधिष्ठायेत्यर्थः

१० । तथा 'उपकसन्तमपि' समीपमागच्छन्तमपि, सर्वस्वापहारे कृते प्राभृतेनानुलोमैः करुणैश्च वचनैरनुकूलयितुमुपस्थितमित्यर्थः, झम्पयित्वा—अनिष्टवचनावकाशं कृत्वा प्रतिलोमाभिः—तस्य प्रतिकूलाभिर्वाग्भिः-वचनैरेतादृशस्तादृशस्त्वमित्यादिभिरित्यर्थः, 'भोगभोगान्' विशिष्टान् शब्दादीन् विदारयति योऽसौ महामोहं प्रकरोतीति दशमं १०। अकुमारभूतः अकुमारब्रह्मचारी सन् यः कश्चित् कुमारभूतोऽहं कुमारब्रह्मचारी अहमिति वदति, अथ च स्त्रीषु गृद्धो—वशकश्च स्त्रीणामेवायत्त इत्यर्थः, अथवा 'वसति' आस्ते स महामोहं प्रकरोतीत्येकादशं ११ । अब्रह्मचारी मैथुनादनिवृत्तो यः कश्चित्तत्काल एवासेव्याब्रह्मचर्यं ब्रह्मचारी साम्प्रतमहमित्यतिधूर्त्ततया परप्रवञ्चनाय वदति, तथा य एवमशोभावहं सतामनादेयं भणन् गर्दभ इव गवां मध्ये विस्वरं न वृषभवन्मनोज्ञं नदति—मुञ्चति नदंनादं शब्दमित्यर्थः, तथा य एवं भणन्नात्मनोऽहितो—न हितकारी बालो मूढो मायामृषा बहुश—अनृतं प्रभूतं भाषते, यश्चैवं निन्दितं भाषते, कया ?—स्त्रीविषयगृद्ध्या हेतुभूतया स इत्थंभूतो महामोहं प्रकरोतीति द्वादशम् १२ । यं राजानं राजामात्यादिकं वा निश्रितं—आश्रितं उद्वहते—जीश्रिकालाभेनात्मानं धारयति, कथं ?—यशसा तस्य राजादेः सत्कोऽयमिति प्रसिद्ध्या अभिगमनेन वा—सेवया आश्रितराजादेस्तस्य निर्वाहकारणस्य राजादेर्लुभ्यति 'वित्ते' द्रव्ये य स महामोहं प्रकरोतीति त्रयोदशं १३ । 'ईश्वरेण' प्रभुणा 'अदुवा' अथवा 'ग्रामेण' जनसमूहेन अनीश्वर ईश्वरीकृतः तस्य पूर्वावस्थायामनीश्वरस्य सम्प्रगृहीतस्य पुरस्कृतस्य प्रभ्वादिना श्रीः—लक्ष्मीरतुला—असाधारणा आगता—प्राप्ता अतुलं वा यथा भवतीत्येवं श्रीः समागता आगतश्रीकश्च प्रभ्वाद्युपकारकविषये ईर्ष्यादोषेणाविष्टो—युक्तः कलुषेण—द्वेषलोभादिलक्षणपापेनाविलं—गडुलमाकुलं वा चेतो यस्य स तथा योऽन्तरायं—व्यवच्छेदं जीवितश्रीभोगानां 'चेतयते' करोति प्रभुत्वादेरसौ महामोहं प्रकरोतीति चतुर्दशं १४ । 'सप्पी' नागी यथा 'अण्डउडं' अण्डककूटं स्वकीयमण्डकसमूह-

भित्यर्थः, अम्भस्य वा पुट—सम्य फलत्रयरूप हिनस्ति, एवं भर्तारं—पोषयितार यो विहिनस्ति सेनापतिं—राजान प्रशास्तारं—अमात्यं धर्मपाठक वा स महामोह प्रकरोतीति, तन्मरणे मण्डुजनदु'स्यता भवतीति पञ्चदश १५ । यो नायकं वा—प्रभु राष्ट्रस्य राष्ट्रमहत्तरादिकमिति भावः, तथा 'नेतार' प्रवर्तयितारं प्रयोजनेषु निगमस्य—वाणिजकसमूहस्य, कं ?—श्रेष्ठिनं श्रीदेवताङ्कितपट्टबद्धं, किंभूत ?—'मडुरव' भूरियश्च मयुरपक्षसमित्यर्थः हत्वा महामोहं प्रकुरुत इति षोडशं १६ । 'बहुजनस्य' प्रजापादीनां लोकानां 'नेतार' नायकं द्वीप इव द्वीप'—संसारसागरभवानामाश्वासस्थानं अथवा दीप इव दीपोऽज्ञानान्धकारावृतबुद्धिदृष्टिप्रसराणां शरीरिणां हेयोपादेयवस्तुस्तोमप्रकाशकत्वात् तं, अत एव त्राणं—आपद्रक्षणं प्राणिनामेतादृशं यादृशा गणधरादयो भवन्ति, 'नथर' प्रावचनिकादिपुरुषं हत्वा महामोहं प्रकरोतीति सप्तदश १७ । उपस्थित प्रव्रज्यायां—प्रविव्रजिषुमित्यर्थः, प्रतिविरतं' सावद्ययोगेभ्यो निवृत्तं प्रव्राजितमेवेत्यर्थः 'संयत' साधु 'सुतपस्विन' तपांसि कृतवन्त शोभन वा तपः श्रित—आश्रितं क्वचित् 'जे भिक्खु जगजीवणं'ति पाठः, तत्र जगन्ति—जंगमानि अहिंसकत्वेन जीवयतीति जगजीवनस्त विविधैः प्रकारैरुपक्रम्याक्रम्य व्यपक्रम्य बलादित्यर्थ, धर्मात्—श्रुतचारित्रलक्षणाद् भ्रंशयति यः स महामोह प्रकरोतीति अष्टादशं १८ । यथैव प्राक्तनं मोहनीयस्थानं तथैवेदमपि, अनन्तज्ञानिनां ज्ञानस्यानन्तविषयत्वेन अक्षयित्वेन वा जिनानां अर्हतां सर्वदर्शिनां क्षायिकदर्शनत्वात् तेषां ये ज्ञानादयनेकातिशयसम्पदुपेतत्वेन भुवनत्रये प्रसिद्धाः 'अवर्ण' अवर्णवादो मत्कर्त्तव्यत्वेन यस्यास्ति सोऽवर्णवान्, यथा नास्ति कश्चित् सर्वज्ञो ज्ञेयस्यानन्तत्वात्, उक्त च—"अज्जवि धावइ नाणं अज्जवि य अणंतओ अलोगोवि । अज्जवि न कोइ पुरिसो पावन्ति सव्वन्नुयं जीवो ॥१॥ जइ पावति तो संतो होइ अलोओ न येयमिहेति" त्ति [ अद्यापि धावति ज्ञानं अद्याप्यनन्तोऽलोकोऽपि । अद्यापि न कोऽपि न्यूनं प्राप्नोति सर्वज्ञतां जीवः ॥ १ ॥ अथ

प्राप्नोति तदा सान्तोऽलोको भवेत् न चेदमिष्टमिति ] अदूषणं चैतद्, उत्पत्तिसमय एव केवलज्ञानं युगपल्लोकालोकौ प्रकाशयदुपजायते, यथाऽपवरकान्तर्वर्त्तिदीपकलिका अपवरकमध्यप्रकाशस्वरूपेत्यभ्युपगमादिति, बालः—अज्ञो महामोहं प्रकरोतीति एकोनविंशतितमं १९। 'नैयायिकस्य' न्यायमनतिक्रान्तस्य 'मार्गस्य' सम्यग्दर्शनादेः मोक्षपथस्य दुष्टो द्विष्टो वा 'अपकरोति' अपकारं करोतीति 'बहु' अत्यर्थं पाठान्तरेणापहरति बहुजनं विपरिणमयतीति भावः, तं मार्गं 'तिप्पयंतो'ति निन्दयन् भावयति—निन्दया द्वेषेण वा वासयति आत्मानं पर च यः स महामोहं प्रकरोतीति विंशतितमं २०। आचार्योपाध्यायैर्यैः श्रुतं—स्वाध्यायं विनयं च—चारित्रं 'ग्राहितः' शिक्षितः तानेव 'खिंसति' निन्दति—अल्पश्रुता एते इत्यादि ज्ञानतः अन्यतीर्थिकसंसर्गकारिण इत्यादि दर्शनतः मन्दधर्माणः पार्श्वस्थादिस्थानवर्त्तिन इत्यादि चारित्रतः, य स एवंभूतो बालो महामोहं प्रकरोतीत्येकविंशतितमं २१। आचार्यादीन् श्रुतदानग्लानावस्थाप्रतिचरणादिभिस्तर्प्पितवतः—उपकृतवतः सम्यक् न तान् प्रति 'तर्प्पयति' विनयाहारोपध्यादिभिर्न प्रत्युपकरोतीति, तथा अप्रतिपूजको—न पूजाकारी तथा 'स्तब्धो' मानवान् स महामोहं प्रकरोतीति द्वाविंशतितमं २२। अबहुश्रुतश्च यः कश्चित् श्रुतेन 'प्रविकत्थते' आत्मानं श्लाघते श्रुतवानहमनुयोगधरोऽहमित्येवं, अथवा कस्मिंश्चित्त्वमनुयोगाचार्यो वाचको वेति पृच्छति प्रतिभणति आमं, स्वाध्यायवादं वदति विशुद्धपाठकोऽहमित्यादिकं यः स महामोहं—श्रुतालाभहेतुं प्रकरोतीति त्रयोविंशतितमं २३। 'अतवस्सीए' सुगमं, पूर्वार्द्धं पूर्ववत्, नवरं 'सर्वलोकात्' सर्वजनात् सकाशात्परः—प्रकृष्टः स्तेनः—चौरो भावचौरत्वात् महामोहं अतपस्विताहेतुं प्रकरोतीति चतुर्विंशतितमं २४। साधारणार्थमुपकारार्थं यः कश्चिदाचार्यादिर्ग्लाने—रोगवति 'उपस्थिते' प्रत्यासन्नीभूते 'प्रभुः' समर्थ उपदेशेनौषधादिदानेन च स्वतोऽन्यतश्चोपकारं न करोति, कृत्यमुपेक्षते इत्यर्थः, केनाभिप्रायेणेत्याह—ममाप्येष न करोति किंचनापि

ठस्य समर्थोऽपि मन्निर्देशेन, असमर्थो वाऽय बालत्वादिना किं कृतेनास्य ?, पुनरुपकर्तुमशक्तत्वादिति लोभेनेति, 'शठ' कैतवयुक्तः शक्तिलोपनात् निकृति –माया तद्विषये प्रज्ञानं यस्य स तथा, ग्लानं प्रतिचरणीयो मा भवत्विति ग्लानवेषमहं करोमीति विकल्पवा-नित्यर्थः, अत एव च कलुषाकुलचेताः आत्मनश्चाबोधिको–भवान्तराप्राप्यजिनधर्मको ग्लानाप्रतिजागरेणाज्ञाविराधनात्, चशब्दा त्परेषां चाबोधिकः अविद्यमाना बोधिरस्मादिति व्युत्पादनात्, ये हि तदीय ग्लानाप्रतिजागरेणाज्ञाविराधनात् चशब्दात्परेषां चाबो धिकः अविद्यमाना बोधिरस्मादिति व्युत्पादनात्, ये हि तदीय ग्लानाप्रतिजागरमुपलभ्य जिनधर्मपराङ्मुखा भवन्ति तेषामबोधि-स्तत्कृतेति स एवम्भूतो महामोहं प्रकरोतीति पञ्चविंशतितम २५ । कथा–वाक्यप्रबन्धः शास्त्रमित्यर्थस्तद्रूपाण्यधिकरणानि कथाधि करणानि–कौटिल्यशास्त्रादीनि प्राण्युपमर्दनप्रवर्तकत्वेन तेषामात्मनो दुर्गतावधिकारित्वकरणात्, कथया वा क्षेत्रापि कृपत गामस्य तत्यादिकया अधिकरणानि तथाविधभवृत्तिरूपाणि, अथवा कथा–राजकथादिका अधिकरणानि च–यन्त्रादीनि कलहा वा कथाधिक रणानि यानि सम्प्रयुक्ते पुनः पुन एवं 'सर्वतीर्थभेदाय' संसारसागरतरणकारणत्वात् तीर्थानि–ज्ञानादीनि तेषां सर्वथा नाशाय भवर्त मानं महामोहं प्रकरोतीति षड्विंशतितमं २६ । 'जे य आहम्मिए' कण्ठ्यम्, नवरं अधार्मिकयोगा निमित्तवशीकरणादिप्रयोगाः किमर्थं ?–श्लाघाहेतोः सखिहेतो–मित्रनिमित्तमित्यर्थः इति सप्तविंशतितमं २७ । यश्च मानुष्यकान् भोगान् अथवा पारलौकिकान् 'तें' ति विभक्तिपरिणामात्तैस्तेषु वा अतृप्यन्–तृप्तिमगच्छन् 'आस्वादते' अभिलषति आश्रयति वा स महामोहं प्रकरोतीति अष्टावि शतितमं २८ । ऋद्धि–विमानादिसम्पत् द्युतिः–शरीराभरणदीप्तिः यशः–कीर्तिः वर्णः–शुक्लादिः शरीरसम्बन्धी देवानां वैमानिकादीनां बल शारीरं वीर्यं जीवप्रभवं अस्तीत्यध्याहारः, तेषामिह अपेक्षम्यमानत्वात् तेषामपि देवानामनेकातिशायिगुणवतामवर्णवान्–अश्ला-

घाकारी अथवा 'अवर्णवान्' केनोल्लापेन देवानामृद्धिर्देवानां द्युतिरित्यादि काका व्याख्येयं, न किञ्चिद्देवानामृद्ध्यादिकमस्तीत्यवर्णवादवाक्यभावार्थः, य एवम्भूतः स महामोहं प्रकरोतीति एकोनत्रिंशत्तमं । २९ । अपश्यन्नपि यो ब्रूते पश्यामि देवानित्यादिस्वरूपेण, अज्ञानी जिनस्येव पूजामर्थयते यः स जिनपूजार्थी, गोशालकवत्, स महामोहं प्रकरोतीति त्रिंशत्तमम् ३० । रौद्रादयो मुहूर्त्ताश्चादित्योदयादारभ्य क्रमेण भवन्ति, एतेषां च मध्ये मध्यमाः षट् कदाचिद्दिनेऽन्तर्भवन्ति कदाचिद्रात्राविति ॥३०॥

एक्कतीसं सिद्धाइगुणा प० तंजहा—खीणे आभिणिबोहियणाणावरणे खीणे सुयणाणावरणे खीणे ओहिणाणावरणे खीणे मणपज्जवणाणावरणे खीणे केवलणाणावरणे खीणे चक्खुदंसणावरणे खीणे अचक्खुदंसणावरणे खीणे ओहिदंसणावरणे खीणे केवलदंसणावरणे खीणे निद्दा खीणे णिद्दाणिद्दा खीणे पयला खीणे पयलापयला खीणे थीणद्धी खीणे सायावेयणिज्जे खीणे असायावेयणिज्जे खीणे दंसणमोहणिज्जे खीणे चरित्तमोहणिज्ज खीणे नेरइआउए खीणे तिरिआउए खीणे मणुस्साउए खीणे देवाउए खीणे उच्चागोए खीणे निच्चागोए खीणे सुभणामे खीणे असुभणामे खीणे दाणंतराए खीणे लाभंतराए खीणे भोगांतराए खीणे उवभोगंतराए खीणे वीरिअंतराए ३१, मंदरे णं पव्वए धरणितले एक्कतीसं जोयणसहस्साइं छच्चेव तेवीसे जोयणसए किंचिदेसूणा परिक्खेवेणं प०, जया णं सूरिए सव्वबाहिरियं मंडलं उवसंकमित्ता चारं चरइ तया णं इहगयस्स मणुस्सस्स एक्कतीसाए जोयणसहस्सेहिं अट्ठहि अ एक्कतीसेहिं जोयणसएहिं तीसाए सट्ठिभागे जोयणस्स सूरिए चक्खुप्फासं हव्वमागच्छइ, अभिवड्ढिए णं मासे एक्कतीसं सातिरेगाइ राइंदियाइं राइंदियग्गेणं प०,

आइचे ण मासे एकतीस राइंदियाइ किंचि विसेसूणाइ राइंदियग्गेणं प०, इमीसे ण रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाण एकतीस पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाण नेरइयाणं एकतीस सागरोवमाइ ठिई प०, असुरकुमाराण देवाणं अत्थेगइयाण एकतीसं पलिओवमाइ ठिई प०, सोहम्मीसाणेसु कप्पेसु अत्थेगइयाण देवाण एकतीस पलिओवमाइ ठिई प०, विजयवेजयंतजयंतअपराजिआण देवाण जहण्णेण एकतीस सागरोवमाइ ठिई प०, जे देवा उवरिमउवरिमगेवेज्जयविमाणेसु देवत्ताए उववण्णा तेसि णं देवाण उक्कोसेण एकतीसं सागरोवमाइ ठिई प०, ते ण देवा एकतीसाए अद्धमासेहिं आणमति वा पाणमति वा उस्ससति वा निस्ससति वा, तेसि ण देवाण एकतीस वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, सतेगइया भवसिद्धिया जीवा जे एकतीसेहिं भवग्गहणेहिं सिज्झिस्संति मुच्चिस्सति मुच्चिस्सति परिनिव्वाइस्सति सव्वदुक्खाणमत करिस्सति ॥ सूत्रं ३१ ॥

एकत्रिंशत्तम स्थानकं सुगमं, नवरं सिद्धानामादौ–सिद्धत्वप्रथमसमय एव गुणाः सिद्धादिगुणाः, ते चाभिनिबोधिकावरणादिक्षयस्वरूपा इति । मन्दरो–मेरुः, स च धरणीतले दशसाहस्रविष्कम्भ इतिकृत्वा यथोक्तपरिधिप्रमाणो भवतीति । "जया ण सूरिए" इत्यादि, किल सूर्यस्य चतुरशीत्यधिकं मण्डलशतं भवति, मण्डलं च ज्योतिष्कमार्गोऽभिधीयते, तत्र जम्बूद्वीपस्यान्तः अशीत्यधिके योजनशते पञ्चषष्टिः सूर्यमण्डलानि भवन्ति, तथा लवणसमुद्रे त्रीणि त्रिंशदधिकानि योजनशतान्यवगाह्यैकोनविंशत्यधिकं सूर्यमण्डलशतं भवति, तत्र सर्वबाह्य–समुद्रान्तर्गतमण्डलानां पर्यन्तिम, तस्य चायामविष्कम्भो लक्ष षट् शतानि च योजनानां षष्ट्यधिकानि,

परिधिस्तु वृत्तक्षेत्रगणितन्यायेन त्रीणि लक्षाणि अष्टादश सहस्राणि त्रीणि शतानि पञ्चदशोत्तराणि ३१८३१५, एतावत्क्षेत्रमादित्योऽहोरात्रद्वयेन गच्छति, तत्र च षष्टिर्मुहूर्त्ता भवन्तीति षठ्या भागापहारे यल्लब्धं तन्मुहूर्त्तगम्यक्षेत्रप्रमाणं भवति, तच्च पञ्च सहास्राणि त्रीणि च पञ्चोत्तराणि शतानि पञ्चदश योजनषष्टिभागाः ५३०५।$\frac{१५}{६०}$, एतच्च दिवसार्द्धेन गुण्यते, यदा च सर्वबाह्ये मण्डले सूर्यश्चरति तदा दिनप्रमाणं द्वादश मुहूर्त्ताः तदर्द्धं च षट् अतः षड्भिर्मुहूर्त्तैर्गुणितं मुहूर्त्तगतिप्रमाणं चक्षुःस्पर्शगतिप्रमाणं भवति, तत्र एकत्रिंशत्सहस्राणि अष्टौ च शतान्येकत्रिंशदधिकानि त्रिंशच्च योजनषष्टिभागाः ३१८३१।$\frac{३०}{६०}$ अभिवर्द्धितमासः—अभिवर्द्धितसंवत्सरस्य चतुश्चत्वारिंशदहोरात्रद्विषष्टिभागाधिकत्र्यशीत्यधिकशतत्रयरूपस्य ३८३।$\frac{४४}{६२}$ द्वादशो भागः अभिवर्द्धितसंवत्सरश्चासौ यत्राधिकमासको भवति, तत्र त्रयोदशचन्द्रमासात्मकत्वाच्चन्द्रमासश्च एकोनत्रिंशता दिनानां द्वात्रिंशता च दिनद्विषष्टिभागानां भवतीति, 'साइरेगाइं' ति अहोरात्रस्य चतुर्विंशत्युत्तरशतभागानामेकविंशत्युत्तरशतेनाधिकानीति, आदित्यमासो येन कालेनादित्यो राशिं भुङ्क्ते किंचिविसेसूणाइं' ति अहोरात्रार्द्धेन न्यूनानीति ॥ ३१ ॥

**बत्तीसं जोगसंगहा प०, तं जहा—आलोयण १ निरवलावे २, आवईसु दढधम्मया ३। अणिस्सिओवहाणे ४ य, सिक्खा ५ निप्पडिकम्मया ६ ॥ १ ॥ अण्णायया अलोभे ८ य, तितिक्खा ९ अज्जवे १० सुई ११। सम्मदिट्ठी १२ समाही १३ य, आयारे १४ विणओवए १५ ॥ २ ॥ धिईमई १६ य संवेगे १७, पणिही १८ सुविहि १९ संवरे २०। अत्तदोसोवसंहारे २१, सव्वकामविरत्तया २२ ॥३॥ पच्चक्खाणे २३–२४ विउस्सग्गे २५, अप्पमादे २६ लवालवे २७। झाणसंवरजोगे २८ य, उदए मारणंतिए २९ ॥ ४ ॥ संगाणं च परिण्णाया**

३०, पायच्छित्तकरणेऽवि य ३१ । आराहणा य मरणंते ३२, बत्तीसं जोगसंगहा ॥५॥ 'बत्तीसं देविंदा प० तं०—चमरे बली धरणे भूआणंदे जाव घोसे महाघोसे चंदे सूरे सक्के ईसाणे सणकुमारे जाव पाणए अच्चुए, कुंथुस्स णं अरहओ बत्तीसहिया बत्तीसं जिणसया होत्था, सोहम्मे कप्पे बत्तीसं विमाणावाससयसहस्सा प०, रेवइणक्खत्ते बत्तीसइतारे प०, बत्तीसतिविहे णट्टे प०, इमीसे णं रयणप्पभाए पुढवीए अत्थेगइयाणं नेरइयाणं बत्तीसं पलिओवमाइं ठिई प०, अहेसत्तमाए पुढवीए अत्थेगइयाणं नेरइयाणं बत्तीसं सागरोवमाइं ठिई प०, असुरकुमाराणं देवाणं अत्थेगइयाणं बत्तीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु कप्पेसु देवाणं अत्थेगइयाणं बत्तीसं पलिओवमाइं ठिई प०, जे देवा विजयवेजयन्तजयन्तअपराजियविमाणेसु देवत्ताए उववण्णा तेसि णं देवाणं अत्थेगइयाणं बत्तीसं सागरोवमाइं ठिई प०, ते णं देवा बत्तीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा नीससंति वा, तेसि णं देवाणं बत्तीसवाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे बत्तीसाए भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति परिनिव्वाइस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र ३२ ॥

द्वात्रिंशत् स्थानकमपि व्यक्तं, नवरं युज्यन्ते इति योगाः मनोवाक्कायव्यापारास्ते चेह प्रशस्ता एव विवक्षितास्तेषां शिष्याचार्यगतानामालोचनानिरपलापादिना प्रकारेण सङ्ग्रहणानि सङ्ग्रहाः प्रशस्तयोगसङ्ग्रहाः प्रशस्तयोगसङ्ग्रहनिमित्तत्वादालोचनादय एव तथोच्यन्ते, ते च द्वात्रिंशद्भवन्ति, तदुपदर्शकं श्लोकपञ्चकं 'आलोयणे' त्यादि, अस्य गमनिका—तत्र 'आलोयण'त्ति मोक्षसाधनयोगसङ्ग्रहाय

शिष्येणाचार्यायालोचना दातव्या १ 'निरवलावे'त्ति आचार्योऽपि मोक्षसाधकयोगसङ्ग्रहायैव दत्तायामालोचनायां निरपलापः स्यात्, नान्यस्मै कथयेदित्यर्थः २, 'आवईसु दढधम्मय'त्ति प्रशस्तयोगसङ्ग्रहाय साधुनाऽऽपत्सु–द्रव्यादिभेदासु दृढधर्मता कार्या, सुतरां तासु दृढधर्मिणा भाव्यमित्यर्थः ३, 'अणिस्सिओवहाणे य'त्ति शुभयोगसङ्ग्रहायैवाऽनिश्रितं च–तदन्यनिरपेक्षमुपधानं च-तपोऽनिश्रितोपधानं परसाहाय्यानपेक्षं तपो विधेयमित्यर्थः ४, 'सिक्खा'त्ति योगसङ्ग्रहाय शिक्षाऽऽसेवितव्या, सा च सूत्रार्थग्रहणरूपा प्रत्युपेक्षाद्यासेवनात्मिका चेति द्विधा, ५, निप्पडिकम्मय'त्ति तथैव निष्प्रतिकर्मता शरीरस्य विधेया ६ ॥ १ ॥ 'अण्णायय'त्ति तपसोऽज्ञातता कार्या, यशःपूजाद्यार्थत्वेनाप्रकाशयद्भिस्तपः कार्यमित्यर्थः ७, 'अलोभे य'त्ति अलोभता विधेया ८, 'तितिक्खा'त्ति तितिक्षा परीषहादिजयः ९, 'अज्जवे'त्ति आर्जवः–ऋजुभावः १०, 'सुइ'त्ति शुचिः सत्यं संयम इत्यर्थः ११ 'सम्मदिट्ठि'त्ति सम्यग्दृष्टिः–सम्यग्दर्शनशुद्धिः १२, 'समाही य'त्ति समाधिश्च–चेतःस्वास्थ्यं १३, 'आयारे विणओवए'त्ति द्वारद्वयं तत्राचारोपगतः स्यात् न मायां कुर्यादित्यर्थः १४, विनयोपगतो भवेत् न मानं कुर्यादित्यर्थः १५ ॥ २ ॥ 'धिइमई य'त्ति धृतिप्रधाना मतिर्धृतिमतिः–अदैन्यं १६ 'संवेगो'त्ति संवेगः–संसाराद्भयं मोक्षाभिलाषो वा १७ 'पणिहि'त्ति प्रणिधिः–मायाशल्यं न कार्यमित्यर्थः १८ 'सुविहि' त्ति'सुविहि' सदनुष्ठानं १९ संवरश्च–आश्रवनिरोधः २० 'अत्तदोसोवसंहारे'त्ति स्वकीयदोपस्य निरोधः २१ 'सव्वकामविरत्तय'त्ति समस्तविपयवैमुख्यं २२ ॥ ३ ॥ 'पच्चक्खाणे'त्ति प्रत्याख्यानं मूलगुणविषयं २३ उत्तरगुणविषयं च २४ 'विउस्सग्गे'त्ति व्युत्सर्गो द्रव्यभावभेदभिन्नः २५ 'अप्पमाए'त्ति प्रमादवर्जनं २६ 'लवालवे'त्ति कालोपलक्षणं तेन क्षणे क्षणे सामाचार्य्यनुष्ठानं कार्यं २७ 'झाणसंवरजोगे'त्ति ध्यानमेव संवरयोगे ध्यानसंवरयोगः २८ 'उदए मारणंतिए'त्ति मारणान्तिकेऽपि वेदनोदये न क्षोभः कार्यः

२९॥४॥ 'सगाणं च परिण्णाय'त्ति सज्ञानां च ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाभेदभिन्ना परिज्ञा कार्या ३० 'पायच्छित्तकरणे' इति प्रायश्चित्तकरणं च कार्यं ३१ 'आराहणा य मरणंते'त्ति आराधना 'मरणान्ते' मरणरूपोऽन्तो मरणान्तस्तत्रेत्येते द्वात्रिंशद्योगसङ्ग्रहा इति ३२॥५॥ इन्द्रसूत्रे यावत्करणात् "वेणुदेवे वेणुदाली हरिकंते हरिस्सहे अग्गिसीहे अग्गिमाणवे पुण्णे वासिट्ठे जलकंते जलप्पहे अमियगई अमियवाहणे वेलंबे पभंजणे" इति दृश्यं, पुनः यावत्करणात् "माहिंदे बंभे लंतए सुक्के सहस्सारे"त्ति द्रष्टव्यं, इह च षोडशानां व्यन्तरेन्द्राणां षोडशानामेव चाणपण्णीकादीन्द्राणामल्पर्द्धिकत्वेनाऽविवक्षितत्वादसङ्ख्यातानामपि चन्द्रसूर्याणां जातिग्रहणेन द्वयोरेव विवक्षितत्वाद्द्वात्रिंशदुक्ता इति, कुन्थुनाथस्य द्वात्रिंशदधिकानि द्वात्रिंशत् केवलिशतान्यभूवन, द्वात्रिंशद्विध नाट्यमभिनयविषयवस्तुभेदाद्यथा राजप्रश्नकृताभिधानद्वितीयोपाङ्ग इति सम्भाव्यते, द्वात्रिंशत्पात्रप्रतिबद्धमिति केचित् ॥ ३२ ॥

तेत्तीस आसायणाओ प०, तं—सेहे राइणियस्स आसन्नं गंता भवइ आसायणा सेहस्स १ सेहे राइणियस्स पुरओ गंता भवइ आसायणा सेहस्स २ सेहे राइणियस्स सपक्खं गंता भवइ आसायणा सेहस्स ३ सेहे राइणियस्स आसन्नं ठिच्चा भवइ आसायणा सेहस्स ४ जाव सेहे राइणियस्स आलवमाणस्स तत्थगए चेव पडिसुणित्ता भवइ आसायणा सेहस्स ३३। चमरस्स णं असुरिंदस्स असुररण्णो चमरचंचाए रायहाणीए एक्कमेक्कवाराए तेत्तीसं तेत्तीसं भोमा प०, महाविदेहे णं वासे तेत्तीसं जोयणसहस्साइं साइरेगाइं विक्खंभेणं प०, जया णं सूरिए बाहिराणंतरं तच्चं मंडलं उवसंकमित्ता णं चारं चरइ तया णं इहगयस्स पुरिसस्स तेत्तीसाए जोयणसहस्सेहिं किंचिविसेसूणेहिं चक्खुप्फासं हव्वमागच्छइ, इमीसे णं रयणप्पभाए पुढवीए अत्थे-

गइयाणं नेरयाणं तेत्तीसं पलिओवमाइं ठिई (प०), अहेसत्तमाए पुढवीए कालमहाकालरोरुयमहारोरुएसु नेरइयाणं उक्कोसेणं तेत्तीसं सागरोवमाइं ठिई (प०), अप्पइट्ठाणनरए नेरइयाणं अजहण्णमणुक्कोसेणं तेत्तीसं सागरोवमाइं ठिई प०, असुरकुमाराणं अत्थेगइयाणं देवाणं तेत्तीसं पलिओवमाइं ठिई प०, सोहम्मीसाणेसु अत्थेगइयाणं देवाणं तेत्तीसं पलिओवमाइं ठिई प०, विजयवेजयन्तजयंतअपराजिएसु विमाणेसु उक्कोसेणं तेत्तीसं सागरोवमाइं ठिई प०, जे देवा सव्वट्ठसिद्धे महाविमाणे देवत्ताए उववण्णा तेसि णं देवाणं अजहण्णमणुक्कोसेणं तेत्तीसं सागरोवमाइं ठिई प०, ते णं देवा तेत्तीसाए अद्धमासेहिं आणमंति वा पाणमंति वा उस्ससंति वा निस्ससंति वा, तेसि णं देवाणं तेत्तीसाए वाससहस्सेहिं आहारट्ठे समुप्पज्जइ, संतेगइया भवसिद्धिया जीवा जे तेत्तीसं भवग्गहणेहिं सिज्झिस्संति बुज्झिस्संति मुच्चिस्संति सव्वदुक्खाणमंतं करिस्संति ॥ सूत्र ३३ ॥

अथ त्रयस्त्रिंशत्तमं स्थानकं, तत्र आयः—सम्यग्दर्शनाद्यवाप्तिलक्षणस्तस्य शातनाः—खण्डनं निरुक्तादाशातनाः, तत्र शैक्षः—अल्पपर्यायो रात्निकस्य—बहुपर्यायस्य आसन्नं—आसत्त्या यथा रजोऽञ्चलादिस्तस्य लगति तथा गन्ता भवतीत्येवमाशातना शैक्षस्येत्येवं सर्वत्र, 'पुरओ'त्ति अग्रतो गन्ता भवति, 'सपक्ख'न्ति समानपक्षं—समपार्श्वं यथा भवति समश्रेण्या गच्छतीत्यर्थः, 'ठिच्च'त्ति स्थाता—आसीनो भवति, यावत्करणाद्दशाश्रुतस्कन्धानुसारेणान्या इह द्रष्टव्याः, ताश्चैवमर्थतः—आसन्नं पुरः पार्श्वतः स्थानेन तिस्रोऽत्र निषीदनेन च तिस्रः तथा विचारभूमौ गतयोः पूर्वतरमाचमतः शैक्षस्याशातना १० एवं पूर्वं गमनागमनमालोचयतः १ तथा रात्रौ को जागर्तीति

पृष्टे रात्निकेन वदच्चनमप्रतिश्रृण्वत १२ रात्निकस्य पूर्वमालपनीय कचन अवमस्य पूर्वतरमालपतः १३ अशनादि लब्धमपरस्य पूर्व-मालोचयत १४ एवमन्यस्योपदर्शयतः १५ एव निमन्त्रयतः १६ रात्निकमनापृच्छयान्यस्मै भक्तादि ददत १७ स्वय प्रधानतरं भुञ्जानस्य १८ क्वचित् प्रयोजने व्याहरतो रात्निकस्य वचोऽप्रतिश्रृण्वतः १९ रात्निक प्रति तत्समक्ष वा बृहता शब्देन बहुधा भाष-माणस्य २० व्याहृतेन मस्तकेन वन्दे इति वक्तव्ये किं भणसीति ब्रुवाणस्य २१ प्रेरयति रात्निके कस्त्व प्रेरणायामिति वदत २२ आर्य ! ग्लान किं न प्रतिचरसीत्याद्युक्ते त्वं किं न त प्रतिचरसीत्यादि भणत २३ धर्मं कथयति गुरावन्यमनस्कतां भजतोऽननुमो-दयत इत्यर्थ २४ कथयति गुरौ न स्मरसीति वदत २५ धर्मकथामाच्छिन्दतः २६ भिक्षावेला वर्तते इत्यादिवचनतः पर्षद भिन्दा-नस्य २७ गुरुपर्षदोऽनुत्थितायास्तथैव व्यवस्थिताया धर्मं कथयतः २८ गुरोः सस्तारकं पादेन घट्टयत २९ गुरुसंस्तारके निषीदतः ३० उच्चासने निषीदत ३१ समासनेऽप्येव ३२ प्रथमिस्त्रचमा सूत्रोक्तैव, रात्निकस्यालपतस्तत्रगत एव—आसनादिस्थित एव प्रति-शृणोति, आगत्य हि प्रत्युत्तर देयमिति शैक्षस्याशातनेति ३३ । तेत्तीस तेत्तीस भोम'त्ति भौमानि—नगराकाराणि, विशिष्टस्थानानी त्यन्ये, यथा 'जया ण सूरिए' इत्यादि, इह सूर्यस्य मण्डलयोरन्तरे द्वे द्वे योजनेऽष्टचत्वारिंशच्चैकषष्टिभागा, एतद्द्विगुण पञ्च योज-नानि पञ्चत्रिंशच्चैकषष्टिभागा , एतावता हीनविष्कम्भं सर्वबाह्यमण्डलाद्द्वितीय मण्डल भवति, ततश्च वृत्तक्षेत्रपरिधिगणितन्यायेन परिधित मण्डलभिर्योजनैस्त्रिंशता चैकषष्टिभागैर्न्यूनं द्वितीयमण्डल सर्वबाह्यमण्डलाद्भवति, एव तृतीयमण्डले एतद्द्विगुणेन हीन भवति, तथाहि—तद्विष्कम्भस्तत एकादशभिर्योजनैर्नवभिश्चैकषष्टिभागै पर्यन्तिमाद्धीनं भवति, परिधिस्तु पञ्चत्रिंशता योजनै पञ्च दशभिश्चैकषष्टिभागैर्न्यूनं भवति, तच्च त्रीणि लक्षाणि अष्टादश सहस्राणि द्वे शते एकोनाशीत्युत्तरे षट्चत्वारिंशच्चैकषष्टिभागा इति,

तथा अन्तिममण्डलान्मण्डले मण्डले द्वाभ्यां मुहूर्त्तस्यैकषष्टिभागाभ्यां दिनवृद्धिर्भवति, तथा च तृतीये मण्डले यदा सूर्यश्चरति तदा द्वादश मुहूर्त्ताश्चत्वारश्चैकषष्टिभागा मुहूर्त्तस्य दिनप्रमाणं भवति, तदर्द्धे चैकषष्टिभागीकृतेनाष्टषष्टयधिकशतत्रयलक्षणेन, स्थूलगणितस्य विवक्षितत्वात् परित्यक्तांशाः ३१८२७९ । तृतीयमण्डलपरिधौ गुणिते सति एकषष्टया च षष्टिगुणितया भागे हृते यल्लभ्यते तत्तृतीयमण्डले चक्षुःस्पर्शप्रमाणं भवति, तच्च द्वात्रिंशत्सहस्राण्येकोत्तराणि ३२००१ अंशानामेकषष्टया भागे हृते लब्धाश्चैकोनपञ्चाशत्षष्टिभागा योजनस्य $\frac{६०}{४९}$ त्रयोविंशतिश्चैकषष्टिभागा योजनषष्टिभागस्य $\frac{२३}{६१}$ एतत्तृतीयमण्डले चक्षुःस्पर्शस्य प्रमाणं जम्बूद्वीपप्रज्ञप्त्यामुपलभ्यते, इह तु यदुक्तं त्रयस्त्रिंशत्किञ्चिन्न्यूना, तत्र सातिरेकयोजनस्याऽपि न्यूनसहस्रता विवक्षितेति सम्भाव्यते, पञ्चदश मण्डले पुनरिदं यथोक्तमेव प्रमाणं भवति, प्रतिमण्डलं योजनस्य चतुरशीत्याः साधिकायाः प्रथममण्डलमाने प्रक्षेपणादिति ॥३३॥

**चोत्तीसं बुद्धाइसेसा प०, तं०—अवट्ठिए केसमंसुरोमनहे १ निरामया निरुवलेवा गायलट्ठी १ गोक्खीरपंडुरे मंससोणिए ३ पउमुप्पलगंधिए उस्सासनिस्सासे ४ पच्छन्ने आहारनीहारे अदिस्से मंसचक्खुणा ५ आगासगयं चक्कं ६ आगासगयं छत्तं ७ आगासगयाओ सेयवरचामराओ ८ आगासफालिआमयं सपायपीढं सीहासणं ९ आगासगओ कुडभीसहस्सपरिमंडिआभिरामो इंदज्झओ पुरओ गच्छइ १० जत्थ जत्थवि य णं अरहंता भगवन्तो चिट्ठंति वा निसीयंति वा तत्थ तत्थवि य णं जक्खा देवा संछन्नपत्तपुप्फपल्लवसमाउलो सच्छत्तो सज्झओ सघंटो सपडागो असोगवरपायवो अभिसंजायइ ११ ईसिं पिट्ठओ मउडठाणंमि तेयमंडलं अभिसंजायइ अंधकारेवि य णं दस दिसाओ पभासेइ १२ बहुसमरमणिज्जे भूमिभागे १३ अहोसिरा**

कट्या आयति १४ उऊविवरीया सुहफासा भवति १५ सीयलेण सुहफासेण सुरभिणा मारुएण जोयणपरि-
मंडल सव्वओ समंता संपमज्जिज्जइ १६ जुत्तफुसिएण मेहेण य निहयरयरेणूय किज्जइ १७ जलथलयभासु-
रपभूतेणं बिंटट्ठाइणा दसद्धवण्णेण कुसुमेण जाणुस्सेहप्पमाणमित्ते पुप्फोवयारे किज्जइ १८ अमणुण्णाणं
सद्दफरिसरसरूवगंधाण अवकरिसो भवइ १९ मणुण्णाणं सद्दफरिसरसरूवगंधाण पाउब्भावो भवइ २०
पच्चाहरओवि य णं हिययगमणीओ जोयणनीहारी सरो २१ भगवं च णं अद्धमागहीए भासाए धम्ममाइ-
क्खइ २२ सावि य णं अद्धमागही भासा भासिज्जमाणी तेसिं सव्वेसिं आरियमणारियाण दुप्पयचउप्पय-
मियपसुपक्खिसरीसिवाणं अप्पणो हियसिवसुहयभासत्ताए परिणमइ २३ पुव्वबद्धवेरावि य णं देवासुर-
नागसुवण्णजक्खरक्खसकिंनरकिंपुरिसगरुलगंधव्वमहोरगा अरहओ पायमूले पसंतचित्तमाणसा
धम्मं निसामंति २४ अण्णउत्थियपावयणियावि य णमागया वंदंति २५ आगया समाणा अरहओ पायमूले
निप्पलिवयणा हवंति २६ जओ जओवि य णं अरहंतो भगवंतो विहरंति तओ तओवि य णं जोयणपणवी-
साएणं ईती न भवइ २७ मारी न भवइ २८ सचक्कं न भवइ २९ परचक्कं न भवइ ३० अइवुट्ठी न भवइ ३१
अणावुट्ठी न भवइ ३२ दुब्भिक्खं न भवइ ३३ पुव्वुप्पण्णावि य णं उप्पाइया वाही खिप्पमिव उवसमंति
३४ जंबुद्दीवे णं दीवे चउत्तीसं चक्कवट्टिविजया प० तं०—बत्तीसं महाविदेहे दो भरहे एरवए, जंबुद्दीवे णं दीवे
चोत्तीसं दीहवेयड्ढा प०, जंबुद्दीवे णं दीवे उक्कोसपए चोत्तीसं तित्थकरा समुप्पज्जंति, चमरस्स णं असुरिंदस्स

**असुररण्णो चोत्तीसं भवणावाससयसहस्सा प०, पढमपंचमछट्ठीसत्तमासु चउसु पुढवीसु चोत्तीसं निरयावाससयसहस्सा प० ॥ सूत्रं ३४ ॥**

अथ चतुस्त्रिंशत्तमस्थानके किमपि लिख्यते–'बुद्धाइसेस' त्ति बुद्धानां–तीर्थकृतामतिशेषाः–अतिशया बुद्धातिशेषाः, अवस्थितं–अवृद्धिस्वभावं केशाश्च–शिरोजाः श्मश्रूणि च कूर्चरोमाणि रोमाणि च–शेषशरीरलोमानि नखाश्च प्रतीता इति द्वन्द्वैकत्वमित्येकः १ निरामया–नीरोगा निरुपलेपा–निर्मला गात्रयष्टिः–तनुलतेति द्वितीयः २ गोक्षीरपाण्डुरं मांसशोणितमिति तृतीयः ३ तथा पद्मं च–कमलं [च] गन्धद्रव्यविशेषो वा यत्पद्मकमिति रूढं उत्पलं च–नीलोत्पलमुत्पलकुष्ठं वा गन्धद्रव्यविशेषस्तयोर्यो गन्धः स यत्राऽस्ति तत्तथोच्छ्वासनिश्वासमिति चतुर्थः ४ प्रच्छन्नमाहारनीहारं–अभ्यवहरणमूत्रपुरीषोत्सर्गौ, प्रच्छन्नत्वमेव स्फुटतरमाह–अदृश्यं मांसचक्षुषा न पुनरवध्यादिलोचनेन पुंसा इति पञ्चमं ५ एतच्च द्वितीयादिकमतिशयचतुष्कं जन्मप्रत्ययं । तथा 'आगासगयं'ति आकाशगतं–व्योमवर्त्ति आकाशगतं (कं) वा–प्रकाशमित्यर्थः, चक्रं–धर्मचक्रमिति षष्ठः ६ एवमाकाशगं छत्रं छत्रत्रयमित्यर्थ इति सप्तमः ७ आकाशके–प्रकाशे श्वेतवरचामरे प्रकीर्णके इत्यष्टमः ८ 'आगासफालिआमय'त्ति आकाशमिव यदत्यन्तमच्छं स्फटिकं तन्मयं सिंहासनं सह पादपीठेन सपादपीठमिति नवमः ९ 'आगासगओ'त्ति आकाशगतोऽत्यर्थं तुङ्ग इत्यर्थः 'कुडभि'त्ति लघुपताकाः संभाव्यन्ते ताभिः परिमण्डितश्चासावभिरामश्च–अभिरमणीय इति विग्रहः 'इंदज्झओ'त्ति शेषध्वजापेक्षयाऽतिमहत्त्वादिन्द्रश्चासौ ध्वजश्च इन्द्रध्वज इति विग्रहः इन्द्रत्वसूचको ध्वज इति वा 'पुरओ'त्ति जिनस्याग्रतो गच्छतीति दशमः १० 'चिट्ठन्ति वा निसीयन्ति व'त्ति तिष्ठन्ति गतिनिवृत्त्या निषीदन्ति–उपविशन्ति 'तक्खणादेव'त्ति तत्क्षणमेव अकालहीनमित्यर्थः, पत्रैः संछन्नः पत्रसंछन्नः पत्रसंछन्न इति वक्त-

म्ये माङ्गल्यात् सच्छन्नपत्र इत्युक्तं स चासौ पुष्पपल्लवसमाकुलश्चेति विग्रहः, पल्लवा'—अङ्कुराः, सच्छत्रः सध्वजः सघण्टः सपताकोऽशोकवरपादप इत्येकादश' ११ 'ईसिं'ति ईषत्—अल्पं 'पिट्ठओ'त्ति पृष्ठतः पश्चाद्भागे 'मउडठाणमि'त्ति मस्तकप्रदेशे तेजोमण्डल—प्रभापटलमिति द्वादश' १२ बहुसमरमणीयो भूमिभाग इति त्रयोदशः १३ 'अहोसिर'त्ति अधोमुखाः कण्टका भवन्तीति चतुर्दश' १४ ऋतवो विपरीताः कथमित्याह—सुखस्पर्शा भवन्तीति पञ्चदशः १५ योजनं यावत् क्षेत्रशुद्धिः संवर्तकवातेनेति षोडश' १६ 'जुत्तफुसिएण ति उचितबिन्दुपातेन 'निहयरयरेणुय'ति वातोत्खातमाकाशवर्ति रजो भूवर्ती तु रेणुरिति गन्धोदकवर्षाभिधानं सप्तदशः १७ जलस्थलजं यद्भास्वर प्रभूत च कुसुमं तेन वृन्तस्थायिना—ऊर्ध्वमुखेन दशार्द्धवर्णेन—पञ्चवर्णेन जानुनोरुत्सेधस्य उच्चत्वस्य यत्प्रमाणं तदेव प्रमाणं यस्य स जानूत्सेधप्रमाणमात्रः पुष्पोपचार'—पुष्पप्रकर इत्यष्टादश' १८ तथा 'कालागुरुपवरकुंदुरुक्कधूवमघमघंतगन्धुद्धुयाभिरामे भवइ' त्ति कालागुरुश्च—गन्धद्रव्यविशेषः प्रवरकुन्दुरुक्कं च—चीडाभिधानं गन्धद्रव्यं तुरुक्कं च—सिल्हकाभिधानं गन्धद्रव्यमिति द्वन्द्वस्तत एतल्लक्षणो यो धूपस्तस्य मघमघायमानो—बहुलसौरभ्यो यो गन्ध उद्धुतः-उद्भूतस्तेनाभिराम—अभिरमणीय यत्तत्तथा स्थान-निषीदनस्थानमिति प्रक्रम इत्येकोनविंशतितमः १९ तथा 'उभयो पासिं च णं अरहंताणं भगवंताणं दुवे जक्खा कडयतुडियथंभियभुया चामरुक्खेवणं करंति' त्ति कटकानि-प्रकोष्ठाभरणविशेषाः त्रुटितानि-बाह्वाभरणविशेषाः त्रुटितानि तैरतिबहुत्वेन स्तम्भिताविव स्तम्भितौ भुजौ ययोस्तौ तथा यक्षौ—देवाविति विंशतितम' २०, वृद्धवाचनायामनन्तरोक्तमतिशयद्वय नाधीयते, अतस्तस्थाने पूर्वेऽप्यष्टदशैव, अमनोज्ञानां शब्दादीनामपकर्ष —अभाव इत्येकोनविंशतितम' १९ मनोज्ञानां प्रादुर्भाव इति विंशतितमः २० 'पच्चाहरओ'त्ति प्रत्याहरतो—व्याकुर्वतो भगवतः 'हिययगमणीओ'त्ति हृदयङ्गमः 'जोयणनीहारी'त्ति योजनातिक्रमी स्वर इत्येकविंशः २१ 'अद्धमाग

हीए'त्ति प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा 'रसोर्लसौ मागध्या'मित्यादिलक्षणवती सा असमाश्रितस्वकीयसमग्रलक्षणाऽर्द्धमागधीत्युच्यते, तथा धर्ममाख्याति, तस्या एवातिकोमलत्वादिति द्वाविंशः २२ भासिज्जमाणी'ति भगवताऽभिधीयमाना 'आरियमणारियाणं'ति आर्यानार्यदेशोत्पन्नानां द्विपदा–मनुष्याश्चतुष्पदा–गवादयः 'मृगा' आटव्याः 'पशवो' ग्राम्याः पक्षिणः प्रतीताः सरीसृपा–उरःपरिसर्प्पा भुजपरिसर्प्पाश्चेति, तेषां किम् ?–आत्मन आत्मनः–आत्मीयया आत्मीययेत्यर्थः भाषातया–भाषाभावेन परीणमतीति सम्बन्धः, किम्भूताऽसौ भाषा ? इत्याह–हितम्–अभ्युदयः शिवं–मोक्षः सुखं–श्रवणकालोद्भवमानन्दं ददातीति हितशिवसुखदेति त्रयोविंशः २३ 'पूर्वबद्धवेरे'त्ति पूर्वं–भवान्तरेऽनादिकाले वा जातिप्रत्ययं बद्धं–निकाचितं वैरं–अमित्रभावो येषां ते तथा, तेऽपि चासतामन्ये देवा वैमानिका असुरा नागाश्च–भवनपतिविशेषाः सुवर्णाः–शोभनवर्णोपेतत्वाज्ज्योतिष्का यक्षराक्षसकिन्नराः किंपुरुषाः व्यन्तरभेदाः गरुडा–गरुडलाञ्छनत्वात् सुपर्णकुमारा भवनपतिविशेषाः, गन्धर्वा महोरगाश्च व्यन्तरविशेषा एव, एतेषां द्वन्द्वः, 'पसंतचित्तमाणसा' प्रशन्तानि–शमं गतानि चित्राणि–रागद्वेषाद्यनेकविधविकारयुक्ततया विविधानि मानसानि–अन्तःकरणानि येषां ते प्रशान्तचित्तमानसा धर्मं निशमयन्ति इति चतुर्विंशः २४ बृहद्वाचनायामिदमन्यदतिशयद्वयमधीयते, यदुत–अन्यतीर्थिकप्रावचनिका अपि च णं वन्दन्ते भगवन्तमिति गम्यते इति पञ्चविंशः २५ आगताः सन्तोऽर्हतः पादमूले निष्प्रतिवचना भवन्ति इति षड्विंशः २६ 'जओ जओऽवि य णं'ति यत्र यत्रापि च देशे 'तओ तओ'त्ति तत्र तत्रापि च पञ्चविंशतौ योजनेषु ईतिः–धान्याद्युपद्रवकारी प्रचुरमूषकादिप्राणिगण इति सप्तविंश २७ मारिः–जनमरक इत्यष्टाविंशः २८ स्वचक्रं–स्वकीयराजसैन्यं तदुपद्रवकारि न भवतीति एकोनत्रिंशः २९ एवं परचक्रं–परराजसैन्यमिति त्रिंशः ३० अतिवृष्टिः–अधिकवर्ष इत्येकत्रिंशः ३१ अना-

वृष्टि —वर्षणाभाव इति द्वात्रिंश ३२ दुर्भिक्ष–दुष्काल इति त्रयस्त्रिंशः ३३ 'उप्पाइया वाहि'त्ति उत्पाताः—अनिष्टसूचका रुधिरवृष्ट्यादयस्तद्धेतुका येऽनर्थास्ते औत्पातिकास्तथा व्याधयो—ज्वराद्यास्तदुपशमः—अभाव इति चतुस्त्रिंशत्तमः ३४ । अन्यत्र 'पच्चाहरओ' इत आरभ्य येऽभिहितास्ते प्रभामण्डलं च कर्मक्षयकृताः, शेषा भवप्रत्ययेभ्योऽन्ये देवकृता इति, एते च यदन्यथापि दृश्यन्ते तन्मतान्तरमवगन्तव्यमिति । 'चक्कवट्टिविजय'त्ति चक्रवर्तिविजेतव्यानि क्षेत्रखण्डानि 'उक्कोसपए चोत्तीसं तित्थगरा समुप्पज्जंति'त्ति समुत्पद्यन्ते सम्भवन्तीत्यर्थः न त्वेकसमये जायन्ते, चतुर्णामेवैकदा जन्मसम्भवात्, तथाहि—मेरौ पूर्वापरशिलातलयोर्द्वे द्वे सिंहासने भवतोऽतो द्वौ द्वावेवाभिषिच्येते अतो द्वयोर्द्वयोरेव जन्मेति, दक्षिणोत्तरयोस्तु क्षेत्रयोस्तदानीं दिवससद्भावात् न भरतैरावतयोर्जिनोत्पत्तिरर्द्धरात्र एव जिनोत्पत्तेरिति, 'पढमे' त्यादि प्रथमायां पृथिव्यां त्रिंशन्नरकावासानां लक्षाणि, पञ्चम्यां त्रीणि षष्ठ्यां पञ्चोनं लक्षं सप्तम्यां पञ्च नरकाः, एवं सर्वमीलने चतुस्त्रिंशल्लक्षाणि भवन्तीति ॥ ३४ ॥

पणतीसं सच्चवयणाइसेसा प०, कुंथू णं अरहा पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, दत्ते णं वासुदेवे पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, नंदणे णं बलदेवे पणतीसं धणूइं उड्ढं उच्चत्तेणं होत्था, सोहम्मे कप्पे सुहम्माए सभाए माणवए चेइयक्खंभे हेट्ठा उवरिं च अद्धतेरस अद्धतेरस जोयणाणि वज्जेत्ता मज्झे पणतीसं जोयणेसु वइरामएसु गोलवट्टसमुग्गएसु जिणसकहाओ प०, बितियचउत्थीसु दोसु पुढवीसु पणतीसं निरयावाससयसहस्सा प० ॥ सूत्रं ३५ ॥

पञ्चत्रिंशत्तमस्थानकं सुगमं, नवरं सत्यवचनातिशया आगमे न दृष्टाः, एते तु ग्रन्थान्तरदृष्टाः सम्भाविताः, वचनं हि गुणव

द्वक्तव्यं, तद्यथा–संस्कारवत् १ उदात्तं २ उपचारोपेतं ३ गम्भीरशब्दं ४ अनुनादि ५ दाक्षिणं ६ उपनीतरागं ७ महार्थं ८ अव्याहतपौर्वापर्यं ९ शिष्टं १० असान्दिग्ध ११ अपहृतान्योत्तरं १२ हृदयग्राहि १३ देशकालाव्यतीतं १४ तत्त्वानुरूपं १५ अप्रकीर्णप्रसृतं १६ अन्योऽन्यप्रगृहीतं १७ अभिजातं १८ अतिस्निग्धमधुरं १९ अपरमर्मविद्धं २० अर्थधर्माभ्यासानपेतं २१ उदारं २२ परनिन्दात्मोत्कर्षविप्रयुक्तं २३ उपगतश्लाघं २४ अनपनीतं २५ उत्पादिताच्छिन्नकौतूहलं २६ अद्भुतं २७ अनतिविलम्बितं २८ विभ्रमविक्षेपकिलिकिञ्चितादिविमुक्तं २९ अनेकजातिसंश्रयाद्विचित्रं ३० आहितविशेषं ३१ साकारं ३२ सत्त्वपरिग्रहं ३३ अपरिखेदितं ३४ अव्युच्छेदं ३५ चेति वचनं महानुभावैर्वक्तव्यमिति, [ तत्र संस्कारवत्त्वं–संस्कृतादिलक्षणयुक्तत्वं १ उदात्तत्वं–उच्चैर्वृत्तिता २ उपचारोपेतत्वं–अग्राम्यता ३ गम्भीरशब्दं मेघस्येव ४ अनुनादित्वं–प्रतिरवोपेतता ५ दक्षिणत्वं–सरलत्वं ६ उपनीतरागत्वं–मालकोशादि ग्रामरागयुक्तता ७ एते सप्त शब्दापेक्षा अतिशयाः, अन्ये त्वर्थाश्रया, तत्र महार्थत्वं–बृहदभिधेयता ८ अव्याहतपौर्वापर्यत्वं–पूर्वापरवाक्याविरोधः ९ शिष्टत्वं–अभिमतसिद्धान्तोक्तार्थता वक्तुः शिष्टतासूचकत्वं वा १० असन्दिग्धत्वं–असंशयकारिता ११ अपहृतान्योत्तरत्वं–परदूषणाविषयता १२ हृदयग्राहित्वं–श्रोतृमनोहरता १३ देशकालाव्यतीतत्वं–प्रस्तावोचितता १४ तत्त्वानुरूपत्वं–विवक्षितवस्तुस्वरूपानुसारिता १५ अप्रकीर्णप्रसृतत्वं–सुसम्बन्धस्य सतः प्रसरणं अथवाऽसम्बन्धानधिकारित्वातिविस्तरयोरभावः १६ अन्योऽन्यप्रगृहीतत्वं–परस्परेण पदानां वाक्यानां वा सापेक्षता १७ अभिजातत्वं वक्तुः प्रतिपाद्यस्य वा भूमिकानुसारिता १८ अतिस्निग्धमधुरत्वं–अमृतगुडादिवत् सुखकारित्वं १९ अपरमर्मवेधित्वं–परमर्मानुद्घट्टनस्वरूपत्वं २० अर्थधर्माभ्यासानपेतत्वं–अर्थधर्मप्रतिबद्धत्वं २१ उदारत्वं–अभिधेयार्थस्यातुच्छत्वं गुम्फगुणविशेषो वा २२ परानिन्दात्मोत्कर्षविप्रयुक्तत्वमिति प्रतीतमेव २३ उपगतश्लाघत्वं–उक्तगुण-

योगात्प्राप्तसाधता २४ अनपनीतत्वं—कारककालवचनलिङ्गादिव्यत्ययरूपवचनदोषापेतता २५ उत्पादिताच्छिन्नकौतूहलत्वं—स्वविषये श्रोतॄणां जनितमविच्छिन्नं कौतुकं येन तत्तथा तद्भावस्तत्त्वं २६ अद्भुतत्वं—अनतिविलम्बितत्वं च प्रतीतं २७—२८ विभ्रमविक्षेपकिलिकिञ्चितादिविमुक्तत्वं—विभ्रमो—वक्तृमनसो भ्रान्तता विक्षेपः—तस्यैवाभिधेयार्थं प्रत्यनासक्तता किलिकिञ्चित—रोषभयाभिलाषादिभावानां युगपत् सकृत्करणमादिशब्दान्मनोदोषान्तरपरिग्रहस्तैर्विमुक्तं यत्तत्तथा तद्भावस्तत्त्वं २९ अनेकजातिसंश्रयाद्विचित्रत्वं, इह जातयो वर्णनीयवस्तुरूपवर्णनानि ३० आहितविशेषत्वं—वचनान्तरापेक्षया ढौकितविशेषता ३१ साकारत्वं विच्छिन्नवर्णपदवाक्यत्वेनाकारप्राप्तत्वं ३२ सत्त्वपरिगृहीतत्वं—साहसोपेतता ३३ अपरिखेदितत्वं—अनायाससम्भवः ३४ अव्युच्छेदित्वं—विवक्षितार्थानां सम्यक्सिद्धिं यावदनवच्छिन्नवचनप्रमेयतेति ३५ । ] तथा दत्त—सप्तमवासुदेवः नन्दन —सप्तमबलदेवः एतयोश्चावश्यकाभिप्रायेण षड्विंशतिर्धनुषामुच्चत्वं भवति, सुबोधं च तत्, यतोऽरनाथमल्लिस्वामीनोरन्तरे तावभिहितौ, यतोऽवाचि—"अरमल्लिअंतरे दोण्णि केसवा पुरिसपुंडरीय दत्त"त्ति, अरनाथमल्लिनाथयोश्च क्रमेण त्रिंशत्पञ्चविंशतिश्च धनुषामुच्चत्वं, एतदन्तरालवर्त्तिनोश्च वासुदेवयोः षष्ठसप्तमयोरेकोनत्रिंशत्षड्विंशतिश्च धनुषां युज्यत इति, इहोक्ता तु पञ्चत्रिंशत् स्यात् यदि दत्तनन्दनौ कुन्थुनाथतीर्थकाले भवतो, न चैतदेवं जिनान्तरेऽपीयत इति दुरवबोधमिदमिति । सौधर्मकल्पे सौधर्मावतंसकादिषु विमानेषु सर्वेषु पञ्च पञ्च सभा भवन्ति—सुधर्मसभा १ उपपातसभा २ अभिषेकसभा ३ अलङ्कारसभा ४ व्यवसायसभा ५ तत्र सुधर्मसभामध्यभागे मणिपीठिकोपरि षष्टियोजनमानो माणवको नाम चैत्यस्तम्भोऽस्ति, तत्र 'वइरामएसु'त्ति वज्रमयेषु तथा गोलवृत्तका वर्तुला ये समुद्गका—भाजनविशेषास्तेषु 'जिणसकहाओ'त्ति जिनसक्थीनि तीर्थकराणां मनुजलोकनिर्वृतानां सक्थीनि अस्थीनि प्रशस्तानीति। 'बितियचउत्थी'त्यादि द्वितीयपृथिव्यां पञ्चविंशतिर्नि

रकलक्षाणि चतुर्थ्यां तु दशेति पञ्चत्रिंशत्तानीति ॥ ३५ ॥

छत्तीसं उत्तरज्झयणा प० तं०–विणयसुयं १ परीसहो २ चाउरंगिज्जं ३ असंखयं ४ अकाममरणिज्जं ५
पुरिसविज्जा ६ उरब्भिज्जं ७ काविलियं ८ नमिपव्वज्जा ९ दुमपत्तयं १० बहुसुयपूजा ११ हरिएसिज्जं १२
चित्तसंभूयं १३ उसुयारिज्जं १४ सभिक्खुगं १५ समाहिठाणाइं १६ पावसमणिज्जं १७ संजइज्जं १८ मिय-
चारिया १९ अणाहपव्वज्जा २० समुद्दपालिज्जं २१ रहनेमिज्जं २२ गोयमकेसिज्जं २३ समितीओ २४ जन्नतिज्जं
२५ सामायारी २६ खलुंकिज्जं २७ मोक्खमग्गगई २८ अप्पमाओ २९ तवोमग्गो ३० चरणविही ३१ पमाय-
ठाणाइं ३२ कम्मपयडी ३३ लेसज्झयणं ३४ अणगारमग्गे ३५ जीवाजीवविभत्ती य ३६, चमरस्स णं असु-
रिंदस्स असुररण्णो सभा सुहम्मा छत्तीसं जोयणाइं उड्ढं उच्चत्तेणं होत्था, समणस्स णं भगवओ महावीर-
स्स छत्तीसं अज्जाणं साहस्सीओ होत्था, चेत्तासोएसु णं मासेसु सइ छत्तीसंगुलियं सूरिए पोरिसीछायं
निव्वत्तइ ॥ सूत्रं ३६ ॥

षट्त्रिंशत्स्थानकं स्पष्टमेव, नवरं चैत्राश्वयुजोर्मासयोः सकृद्–एकदा पूर्णिमायामिति व्यवहारो निश्चयतस्तु मेषसङ्क्रान्तिदिने तुलासङ्क्रान्तिदिने चेत्यर्थः । षट्त्रिंशदङ्गुलिकां पदत्रयमानां, आह च—"चेत्तासोएसु मासेसु, तिपया होइ पोरिसी"ति [चैत्राश्वयुजोर्मासयोस्त्रिपदा पौरुषी भवति] ॥ ३६ ॥

कुंथुस्स णं अरहओ सत्ततीसं गणा सत्ततीसं गणहरा होत्था, हेमवयहेरण्णवयाओ णं जीवाओ सत्ततीसं

जोयणसहस्साइं छच्च चउसत्तरे जोयणसए सोलसयएगूणवीसइभाए जोयणस्स किंचिविसेसूणाओ आयामेणं प०, सव्वासु णं विजयवेजयंतजयंतअपराजियासु रायहाणीसु पागारा सत्ततीसं सत्ततीसं जोयणाइं उड्ढं उच्चत्तेणं प०, खुड्डियाए णं विमाणपविभत्तीए पढमे वग्गे सत्ततीसं उद्देसणकाला प०, कत्तियबहुलसत्तमीए णं सूरिए सत्ततीसंगुलियं पोरिसीछायं निव्वत्तइत्ता णं चारं चरइ ॥ सूत्रं ३७ ॥

सप्तत्रिंशत्स्थानकमपि व्यक्तं, नवरं कुन्थुनाथस्येह सप्तत्रिंशद्गणधरा उक्ता आवश्यके तु पञ्चत्रिंशत् श्रूयन्त इति मतान्तरं, तथा हैमवतादिजीवयोरुक्तप्रमाणसंवादगाथा—"सत्ततीस सहस्सा छच्च सया जोयणाण चउसयरा । हेमवयवासजीवा किंचूणा सोलस कला य ॥ १ ॥"त्ति, कला एकोनविंशतिभागो योजनस्येति । तथा विजयादीनि पूर्वादीनि जम्बूद्वीपद्वाराणि तन्नायकास्तन्नामानो देवास्तेषां राजधान्यस्तन्नामिका एव पूर्वादिदिक्षु इतोऽसङ्ख्येयतमे जम्बूद्वीप इति । क्षुद्रिकायां विमानप्रविभक्तौ कालिकश्रुतविशेषे, तत्र किल बहवो वर्गा–अध्ययनसमुदायात्मका भवन्ति, तत्र प्रथमे वर्गे प्रत्यध्ययनमुद्देशस्य ये कालास्त उद्देशनकाला इति । यदि चैत्रस्य पौर्णमास्यां षट्त्रिंशदङ्गुलिका पौरुषीच्छाया भवति तदा वैशाखस्य कृष्णसप्तम्यामङ्गुलस्य वृद्धिं गतत्वात्सप्तत्रिंशदङ्गुलिका भवतीति ॥ ३७ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठतीसं अज्जियासाहस्सीओ उक्कोसिया अज्जियासंपया होत्था, हेमवयएरण्णवइयाणं जीवाणं धणूपिट्ठे अट्ठतीसं जोयणसहस्साइं सत्त य चत्ताले जोयणसए दस एगूणवीसइभागे जोयणस्स किंचिविसेसूणा परिक्खेवेणं प०, अत्थस्स णं पव्वयरण्णो बितिए कंडे अट्ठतीसं

जोयणसहस्साइं उड्ढं उच्चत्तेणं होत्था, खुड्डियाए णं विमाणपविभत्तीए बितिए वग्गे अट्ठतीसं उद्देसणकाला प० ॥ सूत्रं ३८ ॥

अष्टत्रिंशत्स्थानकं व्यक्तमेव, नवरं 'धणुपिट्ठं'ति जम्बूद्वीपलक्षणवृत्तक्षेत्रस्य हैमवतैरण्यवताभ्यां द्वितीयषष्ठवर्षाभ्यामवच्छिन्नस्यारोपितज्याधनुःपृष्ठाकारे परिधिखण्डे धनुःपृष्ठे इव धनु पृष्ठे उच्येते तत्पर्यन्तभूते ऋजुप्रदेशपङ्क्ती तु जीवे इव जीवे इति, एतत्सूत्रसंवादिगाथार्द्धं "चत्ताली सत्त सया अडतीस सहस्स दस कला य धणु"त्ति । तथा 'अत्थस्स'त्ति अस्तो–मेरुर्यतस्तेनान्तरितो रविरस्तंगत इति व्यपदिश्यते तस्य पर्वतराजस्य–गिरिप्रधानस्य द्वितीयं काण्डं–विभागोऽष्टत्रिंशद्योजनसहस्राण्युच्चत्वेन भवतीति, मतान्तरेण तु त्रिषष्टिः सहस्राणि, यदाह–"मेरुस्स तिन्नि कंडा पुढवोवलवइरसक्करा पढमं । रयए य जायरूवे अंके फलिहे य बीयं तु ॥ १ ॥ एक्कागारं तइयं तं पुण जंबूणयमयं होइ । जोयणसहस्स पढमं बाहल्लेणं च बितीयं तु ॥ २ ॥ तेवट्ठिसहस्साइं तइयं छत्तीस जोयणसहस्सा । मेरुस्सुवरिं चूला उव्विद्धा जोयणदुवीसं ॥ ३ ॥ [ मेरोस्त्रीणि काण्डानि पृथ्व्युपलवज्रशर्करामयं प्रथमं । राजतं जातरूपमाङ्कं स्फाटिकं च द्वितीयं ॥ १ ॥ एकाकारं तृतीयं तत् पुनर्जाम्बूनदमयं भवति । योजनसहस्रं प्रथमं बाहल्येन द्वितीयं तु ॥२॥ त्रिषष्टिः सहस्राणि तृतीयं षट्त्रिंशत् सहस्राणि । मेरोरुपरि चूला उद्विद्धा योजनानि चत्वारिंशत् ॥ ३ ॥ ] ३८ ॥

नमिस्स णं अरहओ एगूणचत्तालीसं आहोहियसया होत्था, समयखेत्ते एगूणचत्तालीसं कुलपव्वया प० तं०–तीसं वासहरा पंच मंदरा चत्तारि उसुकारा, दोच्चचउत्थपंचमछट्ठसत्तमासु णं पंचसु पुढवीसु एगूणचत्तालीसं निरयावाससयसहस्सा प०. नाणावरणिज्जस्स मोहणिज्जस्स गोत्तस्स आउयस्स एयासि णं चउण्हं

जोयणसहस्साइं छच्च चउसत्तरे जोयणसए सोलसयएगूणवीसइभाए जोयणस्स किंचिविसेसूणाओ आयामेणं प०, सव्वासु णं विजयवेजयंतजयंतअपराजियासु रायहाणीसु पागारा सत्ततीसं सत्ततीसं जोयणाइं उड्ढं उच्चत्तेणं प०, खुड्डियाए णं विमाणपविभत्तीए पढमे वग्गे सत्ततीसं उद्देसणकाला प०, कत्तियबहुलसत्तमीए णं सूरिए सत्ततीसंगुलियं पोरिसीछायं निव्वत्तइत्ता णं चारं चरइ ॥ सूत्रं ३७ ॥

सप्तत्रिंशत्स्थानकमपि व्यक्तं, नवरं कुन्थुनाथस्येह सप्तत्रिंशद्गणधरा उक्ताः आवश्यके तु त्रयस्त्रिंशत् श्रूयन्त इति मतान्तरं, तथा हैमवतादिजीवयोक्तप्रमाणसंवादगाथा–"सत्ततीस सहस्सा छच्च सया जोयणाण चउसयरा। हेमवयवासजीवा किंचूणा सोलस कला य ॥ १ ॥"त्ति, कला एकोनविंशतिभागो योजनस्येति। तथा विजयादीनि पूर्वादीनि जम्बूद्वीपद्वाराणि तन्नायकास्तन्नामानो देवास्तेषां राजधान्यस्तन्नामिका एव पूर्वादिदिक्षु इतोऽसङ्ख्येयतमे जम्बूद्वीप इति। क्षुद्रिकायां विमानप्रविभक्तौ कालिकश्रुतविशेषे, तत्र किल पञ्च वर्गा–अध्ययनसमुदायात्मका भवन्ति, तत्र प्रथमे वर्गे प्रत्यध्ययनमुद्देशस्य ये कालास्ते उद्देशनकाला इति। यदि चैत्रस्य पौर्णमास्यां षट्त्रिंशदङ्गुलिका पौरुषीच्छाया भवति तदा वैशाखस्य कृष्णसप्तम्यामङ्गुलस्य वृद्धिं गतत्वात्सप्तत्रिंशदङ्गुलिका भवतीति ॥ ३७ ॥

पासस्स णं अरहओ पुरिसादाणीयस्स अट्ठतीसं अज्जिआसाहस्सीओ उक्कोसिया अज्जियासंपया होत्था, हेमवयएरण्णवईयाणं जीवाणं धणूपिट्ठे अट्ठतीसं जोयणसहस्साइं सत्त य चत्ताले जोयणसए दस एगूणवीसइभागे जोयणस्स किंचिविसेसूणा परिक्खेवेणं प०, अत्थस्स णं पव्वयरण्णो बितिए कंडे अट्ठतीसं

जोयणसहस्साइं उड्ढं उच्चत्तेणं होत्था, खुड्डियाए णं विमाणपविभत्तीए बितिए वग्गे अट्ठतीसं उद्देसणकाला प० ॥ सूत्रं ३८ ॥

अष्टत्रिंशत्स्थानकं व्यक्तमेव, नवरं 'धणुपिट्ठं'ति जम्बूद्वीपलक्षणवृत्तक्षेत्रस्य हैमवतैरण्यवताभ्यां द्वितीयपष्ठवर्षाभ्यामवच्छिन्नस्यारोपितज्याधनुःपृष्ठाकारे परिधिखण्डे धनुःपृष्ठे इव धनु पृष्ठ उच्येते तत्पर्यन्तभूते ऋजुप्रदेशपङ्क्ती तु जीवे इव जीवे इति, एतत्सूत्रसंवादिगाथार्द्धं "चत्ताली सत्त सया अडतीस सहस्स दस कला य धणु"त्ति । तथा 'अत्थस्स'त्ति अस्तो–मेरुर्यतस्तेनान्तरितो रविरस्तं गत इति व्यपदिश्यते तस्य पर्वतराजस्य–गिरिप्रधानस्य द्वितीयं काण्डं–विभागोऽष्टत्रिंशद्योजनसहस्राण्युच्चत्वेन भवतीति, मतान्तरेण तु त्रिषष्टिः सहस्राणि, यदाह–"मेरुस्स तिन्नि कंडा पुढवोवलवइरसक्करा पढमं । रयए य जायरूवे अंके फलिहे य बीयं तु ॥ १ ॥ एकागारं तइयं तं पुण जंबूणयमयं होइ । जोयणसहस्स पढमं बाहल्लेणं च बितीयं तु ॥ २ ॥ तेवट्ठिसहस्साइं तइयं छत्तीस जोयणसहस्सा । मेरुस्सुवरिं चूला उव्विद्धा जोयणदुवीसं ॥ ३ ॥ [ मेरोस्त्रीणि काण्डानि पृथ्व्युपलवज्रशर्करामयं प्रथमं । राजतं जातरूपं आङ्कं स्फाटिकं च द्वितीयं ॥ १ ॥ एकाकारं तृतीयं तत् पुनर्जाम्बूनदमयं भवति । योजनसहस्रं प्रथमं बाहल्येन द्वितीयं तु ॥२॥ त्रिषष्टिः सहस्राणि तृतीयं षट्त्रिंशत् सहस्राणि । मेरोरुपरि चूला उद्विद्धा योजनानि चत्वारिंशत् ॥ ३ ॥ ] ३८ ॥

नमिस्स णं अरहओ एगूणचत्तालीसं आहोहियसया होत्था, समयखेत्ते एगूणचत्तालीसं कुलपव्वया प० तं०–तीसं वासहरा पंच मंदरा चत्तारि उसुकारा, दोच्चचउत्थपंचमछट्ठसत्तमासु णं पंचसु पुढवीसु एगूणचत्तालीसं निरयावाससयसहस्सा प०. नाणावरणिज्जस्स मोहणिज्जस्स गोत्तस्स आउयस्स एयासि णं चउण्हं

रिए, सीयलस्स णं अरहओ तेसीई गणा तेसीई गणहरा होत्था, थेरे णं मंडियपुत्ते तेसीइं वासाइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, उसभे णं अरहा कोसलिए तेसीइं पुव्वसयसहस्साइं अगारमज्झे वसित्ता मुंडे भवित्ता णं जाव पव्वइए, भरहे णं राया चाउरंतचक्कवट्टी तेसीइं पुव्वसयसहस्साइं अगारमज्झे वसित्ता जिणे जाए केवली सव्वन्नू सव्वभावदरिसी ॥ सूत्रं ८३ ॥

अथ त्र्यशीतितमस्थानके किमपि लिख्यते—इह शीतलजिनस्य त्र्यशीतिर्गणाः त्र्यशीतिर्गणधरा उक्ता आवश्यके त्वेकाशीतिरिति मतान्तरमिदमिति, तथा स्थविरो मण्डितपुत्रो—महावीरस्य षष्ठो गणधरः तस्य च त्र्यशीतिर्वर्षाणि सर्वायुः, कथं ?, त्रिपञ्चाशद्गृहस्थपर्याये चतुर्दश छद्मस्थपर्याये षोडश केवलित्वे इत्येवं त्र्यशीतिरिति, तथा 'कोसलिए'त्ति कोशलदेशे भवः कौशलिकः 'तेसीइं'ति विंशतिः पूर्वलक्षाणि कुमारत्वे त्रिषष्टिः राज्ये इत्येवं त्र्यशीतिः, तथा भरतश्चक्रवर्त्ती सप्तसप्ततिः पूर्वलक्षाणि कुमारत्वे षट् चक्रवर्त्तित्वे इत्येवं त्र्यशीतिमगारवासमध्युष्य जिनो जातः—राज्यावस्थस्यैव रागादिक्षयात्केवली—संपूर्णासहायविशुद्धज्ञानादित्रययोगात् सर्वज्ञो विशेषबोधात् सर्वभावदर्शी सामान्यबोधात्ततः पूर्वलक्षं प्रव्रज्याग्रहणपूर्वकं केवलित्वेन विहृत्य सिद्ध इति ॥ ८३ ॥

चउरासीइ निरयावाससयसहस्सा प०, उसभे णं अरहा कोसलिए चउरासीइं पुव्वसयसहस्साइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जावप्पहीणे, एवं भरहो बाहुबली बंभी सुंदरी, सिज्जंसे णं अरहा चउरासीइं वाससयसहस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, तिविट्ठे णं वासुदेवे चउरासीइं वाससयसहस्साइं सव्वाउयं पालइत्ता अप्पइठाणे नरए नेरइयत्ताए उववन्नो, सक्कस्स णं देविंदस्स देवरन्नो चउरासीई सामा-

णियसाहस्सीओ प०, सव्वेवि णं बाहिरया मंदरा चउरासीइं २ जोयणसहस्साइं उड्ढं उच्चत्तेणं प०, सव्वेवि णं अंजणगपव्वया चउरासीइं २ जोयणसहस्साइं उड्ढं उच्चत्तेणं पन्नत्ता, हरिवासरम्मयवासियाणं जीवाणं धणुपिट्ठा चउरासीइं जोयणसहस्साइं सोलस जोयणाइं चत्तारि य भागा जोयणस्स परिक्खेवेणं प०, पंकबहुलस्स णं कंडस्स उवरिल्लाओ चरमंताओ हेट्ठिल्ले चरमंते एस णं चोरासीइं जोयणसयसहस्साइं अबाहाए अंतरे प०, वियाहपन्नत्तीए णं भगवतीए चउरासीइं पयसहस्सा पदग्गेणं प०, चोरासीइं नागकुमारावाससयसहस्सा प०, चोरासीइं पइन्नगसहस्साइं प०, चोरासीइं जोणिप्पमुहसयसहस्सा प०, पुव्वाइयाणं सीसपहेलियापज्जवसाणाणं सट्ठाणट्ठाणंतराणं चोरासीए गुणकारे प०, उसभस्स णं अरहओ चउरासीइं समणसाहस्सीओ होत्था, सव्वेवि चउरासीइं विमाणावाससयसहस्सा सत्ताणउइं च सहस्सा तेवीसं च विमाणा भवंतीति मक्खायं ॥ सूत्रं ८४ ॥

चतुरशीतिस्थानके किमपि लिख्यते, चतुरशीतिर्नरकलक्षाण्यमुना विभागेन—'तीसा य ३० पण्णवीसा २० पन्नरस १५ दसेव ९ तिन्नि य ३ हवंति । पञ्चूणसयसहस्सं १ पंचेव ५ अणुत्तरा निरया ॥ १ ॥' इति, श्रेयांस—एकादशस्तीर्थंकरः एकविंशतिर्वर्षलक्षाणि कुमारत्वे तावन्त्येव प्रव्रज्यायां द्विचत्वारिंशद्राज्ये इत्येवं चतुरशीतिमायुः पालयित्वा सिद्धः, तथा 'तिविट्ठु'त्ति प्रथमवासुदेवः श्रेयांसजिनकालभावीति अप्रतिष्ठानो नरकः—सप्तमपृथिव्यां पञ्चानां मध्यम इति, तथा 'सामाणिय'त्ति समानर्द्धय, तथा 'बाहिरय'त्ति जम्बूद्वीपकमेरुव्यतिरिक्ताश्चत्वारो मन्दराश्चतुरशीतिं सहस्राणि प्रमताः 'अंजणगपव्वय'त्ति जम्बूद्वीपादष्टमे नन्दीश्वराभिधाने द्वीपे

चक्रवालविष्कम्भमध्यभागे पूर्वादिषु दिक्षु चत्वारोऽञ्जनरत्नमया अञ्जनकपर्वताः, 'हरिवासे'त्यादि 'चत्तारि य भागा जोयणस्स'त्ति एकोनविंशतिर्भागाः, इहार्थे गाथार्द्धं–'धणुपिट्ठकलचउक्कं चुलसीइसहस्स सोलसहिय'त्ति [ ८४०१६।$\frac{४}{१९}$] तथा पङ्कबहुलं काण्डं द्वितीयं तस्य च बाहल्यं चतुरशीतिः सहस्राणीति यथोक्तः–सूत्रार्थ इति, तथा व्याख्याप्रज्ञप्त्यां–भगवत्यां चतुरशीतिः पदसहस्राणि पदाग्रेण–पदपरिमाणेन, इह च यत्रार्थोपलब्धिस्तत्पदं, मतान्तरेण तु अष्टादशपदसहस्रपरिमाणत्वादाचारस्य एतद्द्विगुणत्वाच्च शेषाङ्गानां व्याख्याप्रज्ञप्तेर्द्वे लक्षे अष्टाशीतिः सहस्राणि पदानां भवन्तीति, तथा चतुरशीतिर्नागकुमारावासलक्षाणि–चतुश्चत्वारिंशतो दक्षिणायां चत्वारिंशतश्चोत्तरायां भावादिति, चतुरशीतिर्योनयो–जीवोत्पत्तिस्थानानि ता एव प्रमुखानि–द्वाराणि योनिप्रमुखानि तेषां शतसहस्राणि–लक्षाणि योनिप्रमुखशतसहस्राणि प्रज्ञप्तानि, कथं ?–"पुढविदगअगणिमारुय एक्केक्के सत्त जोणिलक्खाओ । वण पत्तेय अणंते दस चउदस जोणिलक्खाओ ॥ १ ॥ विगलिंदिएसु दो दो चउरो चउरो य नारयसुरेसु तिरिएसु । होंति चउरो चोद्दसलक्खा उ मणुएसु ॥ २ ॥" त्ति, [ पृथ्व्युदकाग्निमरुतामेकैकस्मिन् सप्त योनिलक्षाः । वने प्रत्येकानन्तयोर्दश चतुर्दश योनिलक्षाः ॥ १ ॥ विकलेन्द्रियेषु द्वे द्वे चतस्रः चतस्रश्च नारकसुरयोः । तिर्यक्षु भवन्ति चतस्रः चतुर्दश लक्षास्तु मनुजेषु ॥ २ ॥ ] इह च जीवोत्पत्तिस्थानानामसंख्येयत्वेऽपि समानवर्णगन्धरसस्पर्शानां तेषामेकत्वविवक्षणान्न यथोक्तयोनिसंख्याव्यभिचारो मन्तव्य इति, 'पुव्वाइया-ण'मित्यादि, पूर्वमादिर्येषां तानि पूर्वादिकानि तेषां शीर्षप्रहेलिका पर्यवसाने येषां तानि शीर्षप्रहेलिकापर्यवसानानि तेषां स्वस्थानात्–पूर्वपूर्वस्थानादुत्तरोत्तरस्य संख्यास्थानस्योत्पत्तिस्थानात् संख्याविशेषलक्षणात् गुणनीयादित्यर्थः, 'स्थानान्तराणि' स्थानान्तराण्यपि अनन्तरस्थानान्यव्यवाहितसङ्ख्याविशेषा गुणकारनिष्पन्ना येषु तानि स्वस्थानस्थानान्तराणि क्रमव्यवस्थितसङ्ख्यानविशेषा इत्यर्थः

यथा स्वस्थानानि च—पूर्वस्थानानि स्थानान्तराणि च—अनन्तरस्थानानि स्वस्थानस्थानान्तराणि अथवा स्वस्थानात्—प्रथमस्थानात् पूर्वाङ्गलक्षणात् स्थानान्तराणि—विवक्षितस्थानानि स्वस्थानस्थानान्तराणि तेषां चतुरशीत्या लक्षैरिति शेषः, गुणकारः—अभ्यासराशिः प्रज्ञप्तः, तथाहि—किल चतुरशीत्या वर्षलक्षैः पूर्वाङ्गं भवतीति स्वस्थानं, तदेव चतुरशीत्या लक्षैर्गुणितं पूर्वमुच्यते, तच्च स्थानान्तरमिति, एवं पूर्वं स्वस्थानं तदेव चतुरशीत्या लक्षैर्गुणितमनन्तरस्थानं त्रुटिताङ्गाभिधानं भवतीति, इह संग्रहगाथा—'पुव्वतुडियाडडाववं-हुहुय तह उप्पले य पउमे य । नलिणच्छिनिउर अउए नउए पउए य नायव्वो ॥ १ ॥ चूलियसीसपहेलिय चोद्दस नामा उ अणु-सजुया। अट्ठावीसं ठाणा गउणउयं होइ ठाणसयं॥२॥त्ति, अभिलापश्चैषां-पूर्वाङ्ग पूर्वं त्रुटिताङ्ग त्रुटितमित्यादिरिति, 'चउरासीति'मित्यादि, चतुरशीतिविमानावासशतसहस्राणि इह विभागोऽयं—"[1]बत्तीस ३२ अट्ठावीसा २८ बार १२ अट्ठ ८ चउर ४ सयसहस्साइं । आरेण बंभलोगा विमाणसंखा भवे एसा ॥ १ ॥ पन्नास ५० चत्त ४ छच्चेव ६ सहस्सा लंत सुक्क सहसारे । सय चउरो आणयपाणएसु तिण्णारणच्चुयओ ॥ २ ॥ एक्कारसुत्तर हेट्ठिमेसु १११ सत्तुत्तरं च मज्झिमए १०७। सयमेगं उवरिमए १०० पंचेव अणुत्तरविमाणा ॥ ३ ॥" [ द्वात्रिंशदष्टाविंशतिर्द्वादशाष्ट च चतस्रो लक्षाः । अर्वाक् ब्रह्मलोकात् विमानसंख्या भवेदेषा ॥१॥ पञ्चाशच्चत्वारिंशत् षट् चैव सहस्राणि लान्तके शुक्रे सहस्रारे चतुःशतानि आनतप्राणतयोस्त्रीण्यारणाच्युतयोः ॥२॥ एकादशोत्तरमधस्तनेषु सप्तोत्तरं च मध्यमेषु । शतमेकमुपरितनेषु पञ्चैवानुत्तरविमानानि ॥ ३ ॥ ] इति 'भवंतीति मक्खायं'ति एतानि विमानान्येव भवन्ति इति—हेतो राख्यातानि भगवता सर्वज्ञत्वात् सत्यवादित्वाच्चेति ॥ ८४ ॥

आयारस्स णं भगवओ सचूलियागस्स पंचासीइं उद्देसणकाला प०, धायइसंडस्स णं मंदरा पंचासीइं

जोयणसहस्साइं सव्वग्गेणं प०, रुयए णं मंडलियपव्वए पंचासीइ जोयणसहस्साइं सव्वग्गेणं प० नंदणवणस्स णं हेट्ठिल्लाओ चरमंताओ सोगंधियस्स कंडस्स हेट्ठिल्ले चरमंते एस णं पंचासीइ जोयणसयाइं अबाहाए अंतरे प० ॥ सूत्रं ८५ ॥

अथ पञ्चाशीतिस्थानके किञ्चिल्लिख्यते, तत्राचारस्य–प्रथमाङ्गस्य नवाध्ययनात्मकप्रथमश्रुतस्कन्धरूपस्य 'सचूलियागस्स' इति द्वितीये हि तस्य श्रुतस्कन्धे पञ्च चूलिकाः तासु च पञ्चमी निशीथाख्येह न गृह्यते भिन्नस्थानरूपत्वात्तस्याः, तासु च प्रथमाद्वितीये सप्तसप्ताध्ययनात्मिके तृतीयचतुर्थ्यावेकैकाध्ययनात्मिके तदेवं सह चूलिकाभिर्वर्त्तत इति सचूलिकाकस्तस्य पञ्चाशीतिरुद्देशनकाला भवन्तीति, प्रत्यध्ययनं उद्देशनकालानामेतावत्संख्यत्वात्, तथाहि–प्रथमश्रुतस्कन्धे नवस्वध्ययनेषु क्रमेण सप्त ७ षट् १३ चत्वार १७ श्चत्वारः २१ षट् २७ पञ्च ३२ अष्ट ४० च्चत्वारः ४४ सप्त ५१ चेति, द्वितीयश्रुतस्कन्धे तु प्रथमचूलिकायां सप्तस्वध्ययनेषु क्रमेण एकादश ६२ त्रय ६५ स्त्रयः ६८ चतुर्षु द्वौ द्वौ ७६ द्वितीयायां सप्तैकसराणि ८३ अध्ययनान्येवं तृतीयैकाध्ययनात्मिका ८४ एवं चतुर्थ्यपीति ८५ सर्वमीलने पञ्चाशीतिरिति । तथा धातकीखण्डमन्दरौ सहस्रमवगाढौ चतुरशीतिसहस्राण्युच्छ्रिताविति पञ्चाशीति–र्योजनसहस्राणि सर्वाग्रेण भवतः, पुष्कराद्धमन्दरावप्येवं, नवरं सूत्रे नाभिहितौ विचित्रत्वात्सूत्रगतेरिति, तथा रुचको–रुचकाभिधानस्त्रयोदशद्वीपान्तर्गतः प्राकाराकृती रुचकद्वीपविभागकारितया स्थितः, अत एव मण्डालिकपर्वतो, मण्डलेन व्यवस्थितत्वात्, स च सहस्रमवगाढश्चतुरशीतिरुच्छ्रित इति पञ्चाशीतिः सहस्राणि सर्वाग्रेणेति, तथा 'नन्दनवनस्य' मेरोः पञ्चयोजनशतोच्छ्रितायां प्रथममेखलायां व्यवस्थितस्याधस्त्याच्चरमान्तात् 'सौगन्धिककाण्डस्य' रत्नप्रभापृथिव्याः खरकाण्डाभिधानप्रथमकाण्डस्यावान्तरका-

ण्डभूतस्याष्टमस्य सौगन्धिकाभिधानरत्नमयस्य सौगन्धिककाण्डस्याधस्त्यचरमान्त' पञ्चाशीतिर्योजनशतान्यन्तरमाभित्य भवति, कथम् ?, पञ्च शतानि मेरोः सम्बन्धीनि प्रत्येकं च सहस्रप्रमाणत्वाद्वान्तरकाण्डानामष्टमकाण्डमशीतिशतानीति ॥ ८५ ॥

सुविहिस्स णं पुप्फदन्तस्स अरहओ छलसीइं गणा छलसीइं गणहरा होत्था, सुपासस्स णं अरहओ छलसीइं वाइसया होत्था, दोचाए णं पुढवीए बहुमज्झदेसभागाओ दोचस्स घणोदहिस्स हेट्ठिल्ले चरमंते एस णं छल्सीइं जोयणसहस्साइं अबाहाए अंतरे प० ॥ सूत्र ८६ ॥

अथ षडशीतिस्थानके किमपि लिख्यते, तत्र सुविधे'-नवमजिनस्येह षडशीतिर्गणा गणधराश्चोक्ता आवश्यके तु अष्टाशीति रिति मतान्तरमिदं, तथा द्वितीया पृथिवी-शर्करप्रभा, सा च बाहल्यतो द्वात्रिंशत्सहस्राधिकलक्षमाना तदर्द्धं षट्षष्टिः सहस्राणि घनोदधिश्च तदधोवर्ती द्वितीयापृथिवीसम्बन्धित्वात् द्वितीयो विंशतिं सहस्राणि बाहल्यत इति षडशीतिर्यथोक्तमन्तरं भवतीति ॥८६॥

मंदरस्स णं पव्वयस्स पुरच्छिमिल्लाओ चरमंताओ गोथुभस्स आवासपव्वयस्स पच्चच्छिमिल्ले चरमंते एस णं सत्तासीइं जोयणसहस्साइं अबाहाए अंतरे प०, मंदरस्स णं पव्वयस्स दक्खिणिल्लाओ चरमंताओ दगभासस्स आवासपव्वयस्स उत्तरिल्ले चरमंते एस णं सत्तासीइं जोयणसहस्साइं अबाहाए अंतरे प०, एवं मंदरस्स पच्चच्छिमिल्लाओ चरमंताओ संखस्सावा० पुरच्छिमिल्ले चरमंते, एवं चेव मंदरस्स उत्तरिल्लाओ चरमंताओ दगसीमस्स आवासपव्वयस्स दाहिणिल्ले चरमंते एस णं सत्तासीइं जोयणसहस्साइं अबाहाए अंतरे प०, छण्हं कम्मपगडीणं आइमउवरिल्लवज्जाणं सत्तासीइं उत्तरपगडीओ प०, महाहिमवतकूडस्स णं

उवरिमंताओ सोगन्धियस्स कंडस्स हेट्ठिले चरमंते एस णं सत्तासीइ जोयणसयाइं अबाहाए अंतरे प०, एवं रुप्पिकूडस्सवि ॥ सूत्रं ८७ ॥

अथ सप्ताशीतिस्थानके किञ्चिल्लिख्यते, 'मन्दरे'त्यादि, मेरोः पौरस्त्यान्तात् जम्बूद्वीपान्तः पञ्चचत्वारिंशत्सहस्राणि द्विचत्वारिंशच्च सहस्राणि लवणजलधिमवगाह्य गोस्तुभो वेलन्धरनागराजावासपर्वतः प्राच्यां दिशि भवति, एवं सूत्रोक्तमन्तरं भवतीति, एवमन्येषां त्रयाणामन्तरमवसेयमिति । तथा षण्णां कर्म्मप्रकृतीनामादिमोपरिमवर्जानां—ज्ञानावरणान्तरायरहितानां दर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रसंज्ञितानामित्यर्थः सप्ताशीतिरुत्तरप्रकृतयः प्रज्ञप्ताः, कथं ?, दर्शनावरणादीनां षण्णां क्रमेण नव द्वे अष्टाविंशतिः चतस्रो द्विच वारिंशद्द्वे चेत्यतस्तासां मीलने सूत्रोक्तसंख्या स्यादिति । 'महाहिमवन्ते'त्यादि, महाहिमवति द्वितीयवर्षधरपर्वते अष्टौ सिद्धायतनकूटमहाहिमवत्कूटादीनि कूटानि भवन्ति, तानि पञ्चशतोच्छ्रितानि, तत्र महाहिमवत्कूटस्य पञ्च शतानि द्वे शते महाहिमवद्वर्षधरोच्छ्रयस्य अशीतिश्च शतानि प्रत्येकं सहस्रमानानामष्टानां सौगन्धिककाण्डावसानानां रत्नप्रभाखरकाण्डावान्तरकाण्डानामित्येवं मीलिते सप्ताशीतिरन्तरं भवतीति, एवं 'रुप्पिकूडस्सवि'त्ति रुक्मिणि पञ्चमवर्षधरे यद्द्वितीयं रुक्मिकूटाभिधानं कूटं तस्याप्यन्तरं महाहिमवत्कूटस्येव वाच्यं, समानप्रमाणत्वाद्द्वयोरपीति ॥ ८७ ॥

एगमेगस्स णं चंदिमसूरियस्स अट्ठासीइ अट्ठासीइ महग्गहा परिवारो प०, दिट्ठिवायस्स णं अट्ठासीइ सुत्ताइं प०, तं०—उज्जुसुयं परिणयापरिणयं एवं अट्ठासीइ सुत्ताणि भाणियव्वाणि जहा नंदीए, मंदरस्स णं पव्वयस्स पुरच्छिमिल्लाओ चरमंताओ गोथुभस्स आवासपव्वयस्स पुरच्छिमिल्ले चरमंते एस णं अट्ठासीइं

जोयणसहस्साइं अयाहाए अतरे प० एव चउसुवि विसासु नेयव्व, चाहिराओ उत्तराओ ण कट्ठाओ सूरिए पढम छम्मास अयमाणे चोयालीसइमे मडलगते अट्ठासीति इगसट्ठिमागे मुहुत्तस्स दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढेत्ता सूरिए चारं चरइ, दक्खिणकट्ठाओ ण सूरिए दोच्च छम्मास अयमाणे चोयालीसतिमे मडलगते अट्ठासीई इगसट्ठिमागे मुहुत्तस्स रयणिखेत्तस्स निवुड्ढेत्ता दिवसखेत्तस्स अभिनिवुड्ढित्ता ण सूरिए चारं चरइ ॥ सूत्र ८८ ॥

अष्टाशीतिस्थानके किञ्चिल्लिख्यते, एकैकस्यासंख्यातानामपि प्रत्येकमित्यर्थः, चन्द्रमाश्च सूर्यश्च चन्द्रमःसूर्यं तस्य, चन्द्रसूर्ययुगलस्य इत्यर्थः, अष्टाशीतिर्महाग्रहाः, एते च यद्यपि चन्द्रस्यैव परिवारोऽन्यत्र श्रूयते तथापि सूर्यस्यापीन्द्रत्वादेत एव परिवारतयाऽवसेया इति 'दिट्ठिवाए'त्यादि, दृष्टिवादस्य-द्वादशाङ्गस्य परिकर्मसूत्रपूर्वगतप्रथमानुयोगचूलिकाभेदेन पञ्चप्रकारस्य 'सुत्ताइं'ति द्वितीयप्रकारभूतानि अष्टाशीतिर्भवन्ति 'जहा नदीए'त्ति अतिदेशतः यत्रापि दर्शितानि तानि चाग्रे व्याख्यास्याम', 'मंदरस्से'त्यादि, मेरोः पूर्वान्तात् जम्बूद्वीपस्य पञ्चचत्वारिंशद्योजनसहस्रमानात् जम्बूद्वीपान्ताच्च द्विचत्वारिंशद्योजनसहस्रेषु गोस्तुभस्य व्यवस्थितत्वात् तस्य च सहस्रविष्कम्भत्वात् यथोक्तः सूत्रार्थो भवतीति, अनेनैव क्रमेण दक्षिणादिदिग्व्यवस्थितान् दकाभासशङ्खदकसीमाख्यान् वेलन्धरनागराजनिवासपर्वतानाश्रित्य शान्यमत एवाह-'एवं चउसुवि दिसासु नेयव्व'मिति । 'बाहिराओ ण'मित्यादि, बाह्यायाः सर्वाभ्यन्तरमण्डलरूपाया उत्तरस्याः काष्ठायाः क्वचित् 'बाहिराओ'त्ति न दृश्यते सूर्यः प्रथम षण्मास दक्षिणायनलक्षणं दक्षिणायनादित्वात् संवत्सरस्य 'अयमाणे'त्ति आयान्-आगच्छन् चतुश्चत्वारिंशत्तममण्डलगतोऽष्टाशीतिमेकषष्टिभागान् दिवसक्षेत्रस्ये'ति दिवसस्यैव

'निवुड्ढेत्त'त्ति निवर्द्धय हापयित्वा 'रयणिखेत्तस्स'त्ति रजन्यास्तु अभिवर्द्धयं 'सूरिए चारं चरइ'त्ति भ्राम्यतीति, इह च भावनव- ितम- ण्डलं दिनस्य मुहूर्तैकषष्टिभागद्वयहानेर्दक्षिणायनापेक्षया चतुश्चत्वारिंशत्तमे अष्टाशीतिभागा हीयन्ते, रात्रेस्तु त एव वर्द्धन्त इति, द्विः सूर्यग्रहणं चेह दिनरात्र्याश्रितवाक्यद्वयभेदकल्पनया ततो न पुनरुक्तमवसेयं, इदं च सूत्रमष्टसप्ततिस्थानकसूत्रवद्भावनीयमिति, 'दक्खि- णकट्ठाओ' इति आदिसूत्रं पूर्वसूत्रवदवगन्तव्यं नवरमिह दिनवृद्धिः रात्रिहानिश्च भावनीयेति ॥ ८८ ॥

उसभे णं अरहा कोसलिए इमीसे ओसप्पिणीए ततियाए सुसमदूसमाए पच्छिमे भागे एगूणणउए अद्ध- मासेहिं कालगए जाव सव्वदुक्खप्पहीणे, समणे भगवं महावीरे इमीसे ओसप्पिणीए चउत्थाए दूसमसुस- माए समाए पच्छिमे भागे एगूणनउइए अद्धमासेहिं सेसेहिं कालगए जाव सव्वदुक्खप्पहीणे, हरिसेणे णं राया चाउरंतचक्कवट्टी एगूणनउइं वाससयाइं महाराया होत्था, संतिस्स णं अरहओ एगूणनउई अज्जासाह- स्सीओ उक्कोसिया अज्जियासंपया होत्था ॥ सूत्रं ८९ ॥

अथैकोननवतिस्थानके किञ्चिद्विचार्यते–'तईयाए समाए'त्ति सुषमदुष्षमाभिधानाया एकोननवत्यामर्द्धमासेषु–त्रिषु वर्षेषु अर्द्धनवसु च मासेषु सत्स्विति गम्यते, 'जाव'त्ति करणात् 'अन्तगडे सिद्धे बुद्धे मुत्ते'त्ति दृश्यं, हरिषेणचक्रवर्त्ती दशमस्तस्य च दश वर्षसहस्राणि सर्वायुस्तत्र च शतोनानि नव सहस्राणि राज्यं शेषाण्येकादश शतानि कुमारत्वमाण्डलिकत्वानगारत्वेषु अवसेयानि, इह शान्तिजिनस्यैकोननवतिरार्यिकासहस्राण्युक्तान्यावश्यके त्वेकषष्टिः सहस्राणि शतानि च षडभिधीयन्त इति मतान्तरमेतदिति॥८९॥

सीयले णं अरहा नउइं धणूइं उड्ढं उच्चत्तेणं होत्था, अजियस्स णं अरहओ नउई गणा नउई गणहरा

जोयणसहस्साइं अबाहाए अंतरे प० एवं चउसुवि दिसासु नेयव्वं, बाहिराओ उत्तराओ णं कट्ठाओ सूरिए पढमं छम्मासं अयमाणे चोयालीसइमे मंडलगते अट्ठासीति इगसट्ठिभागे मुहुत्तस्स दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढेत्ता सूरिए चारं चरइ, दक्खिणकट्ठाओ णं सूरिए दोच्चं छम्मासं अयमाणे चोयालीसतिमे मंडलगते अट्ठासीई इगसट्ठिभागे मुहुत्तस्स रयणिखेत्तस्स निवुड्ढेत्ता दिवसखेत्तस्स अभिनिवुड्ढित्ता णं सूरिए चारं चरइ ॥ सूत्र ८८ ॥

अष्टाशीतिस्थानके किञ्चिद्विवियते, एकैकस्यासस्यावानामपि प्रत्येकमित्यर्थः, चन्द्रमाश्च सूर्यश्च चन्द्रसूर्यं तस्य, चन्द्रसूर्ययुगलस्य इत्यर्थः, अष्टाशीतिर्महाग्रहाः, एते च यद्यपि चन्द्रस्यैव परिवारोऽन्यत्र श्रूयते तथापि सूर्यस्यापीन्द्रत्वात्त एव परिवारतयाऽवसेयाः इति 'दिट्ठिवाए'त्यादि, दृष्टिवादस्य द्वादशाङ्गस्य परिकर्म्मसूत्रपूर्वगतप्रथमानुयोगचूलिकाभेदेन पञ्चप्रकारस्य 'सुत्ताइं'ति द्वितीयप्रकारभूतानि अष्टाशीतिर्भवन्ति 'जहा नदीए'त्ति अतिदेशतः तत्रापि दर्शितानि तानि चाग्रे व्याख्यास्याम', 'मंदरस्से'त्यादि, मेरोः पूर्वान्तात् जम्बूद्वीपस्य पञ्चचत्वारिंशद्योजनसहस्रमानात् जम्बूद्वीपान्ताच्च द्विचत्वारिंशद्योजनसहस्रेषु गोस्तुभस्य व्यवस्थितत्वात् तस्य च सहस्रविष्कम्भत्वात् यथोक्तः सूत्रार्थो भवतीति, अनेनैव क्रमेण दक्षिणादिदिग्व्यवस्थितान् दकावभासशङ्खदकसीमाख्यान् वेलन्धरनागराजनिवासपर्वतानाश्रित्य वाच्यमत एवाह–'एवं चउसुवि दिसासु नेयव्व'मिति । 'बाहिराओ ण'मित्यादि, बाह्याया' सर्वाभ्यन्तरमण्डलरूपाया उत्तरस्याः काष्ठायाः कचित् 'बाहिराओ'त्ति न दृश्यते सूर्यः प्रथमं षण्मासं दक्षिणायनलक्षणं दक्षिणायनादित्वात् संवत्सरस्य 'अयमाणे'त्ति आयान्–आगच्छन् चतुश्चत्वारिंशत्तममण्डलगतोऽष्टाशीतिमेकषष्टिभागान्, दिवसखेत्तस्स'त्ति दिवसस्यैव

भणिया ९। गच्छंताणुव्वयणं १० एसो सुस्सूसणाविणओ ॥ २ ॥ [सत्कारोऽभ्युत्थानं सन्मानं आसनाभिग्रहः तथा च। आसनानुप्रदानं कृतिकर्म अञ्जलिप्रग्रहः ॥ १ ॥] त्ति [आयतोऽनुगमनं स्थितस्य तथा पर्युपासना भणिता। गच्छतोऽनुव्रजनं एष शुश्रूषाविनयः ॥ २ ॥] तत्र सत्कारो–वन्दनस्तवनादिः १ अभ्युत्थानं–आसनत्यागः २ सन्मानो–वस्त्रादिपूजनं ३ आसनाभिग्रहः तिष्ठत एवासनानयनपूर्वकमुपविशताऽत्रेति भणनमिति ४ आसनानुप्रदानं–आसनस्य स्थानात् स्थानान्तरसञ्चारणं ५ कृतिकर्म्मादीनि प्रकटानि, तथा तीर्थङ्करादीनां पञ्चदशानां पदानामनाशातनादिपदचतुष्टयगुणितत्वे षष्टिविधोऽनाशतनाविनयो भवति, तथाहि–तित्थयर १ धम्म २ आयरिय ३ वायग ४ थेरे ५ [य]कुल ६ गणे ७ सङ्घे ८। सम्भोइय ९ किरियाए १० मइनाणाई[ण] १५ य तहेव ॥ १ ॥ [तीर्थंकरधर्माचार्यवाचकस्थविरकुलगणसंघेषु। साम्भोगिकक्रियायोः मतिज्ञानादीनां तथैव ॥ १ ॥] अत्र भावना–तीर्थंकराणामनाशातना तीर्थकरानाशातना, तीर्थङ्करप्रज्ञप्तस्य धर्म्मस्य अनाशातनाविनयः, एवं सर्वत्र भावना कर्तव्या, "अणसायणा य भत्ती बहुमाणो तहय वण्णवाओ य। अरहंतमाइयाणं केवलणाणावसाणाणं ॥ १ ॥" इति [अनाशातना च भक्तिर्बहुमानस्तथैव वर्णवादश्च। अर्हदादीनां केवलज्ञानावसानानां ॥ १ ॥] तथौपचारिकविनयः सप्तधा, यदाह–"अब्भासासणं १ छंदाणुवत्तणं २ कयपडिकिई तहय ३। कारियनिमित्तकरणं ४ दुक्खत्तगवेसणा तहय ॥ १ ॥ तह देसकालजाणण सव्वत्थे[सु]तहय अणुमई भणिया ७। उवयारिओ उ विणओ एसो भणिओ समासेणं ॥ २ ॥ [अभ्यासासनं छन्दोऽनुवर्त्तनं कृतप्रतिकृतिस्तथा च। कारितनिमित्त करणं दुःखार्तगवेषणं तथैव ॥ १ ॥ तथा देशकालज्ञानं सर्वार्थेषु तथा चानुमतिर्भणिता औपचारिकस्तु विनय एष भणितः समासेन ॥२॥] इति, अभ्यासासनं–उपचरणीयस्यान्तिकेऽवस्थानं छन्दोऽनुवर्त्तनं–अभिप्रायानुवृत्तिः कृतप्रतिकृतिर्नाम–प्रसन्ना आचार्याः सूत्रादि

होत्था, एय सतिरसयि, सयम्भुस्स णं वासुदेवस्स णउइवासाइं विजए होत्था, सव्वेसि णं वट्टवेयड्डपव्वयाणं उवरिल्लाओ सिहरतलाओ सोगंधियकण्डस्स हेट्ठिल्ले चरमंते एस णं नउइजोयणसयाइं अबाहाए अंतरे प०, ॥ सूत्र ९० ॥

अथ नवतिस्थानके किञ्चिद् व्याख्यायते, तत्राजितनाथस्य शान्तिनाथस्य चेह नवतिर्गणा गणधराश्चोक्ता आवश्यके तु पञ्चनवतिरजितस्य षट्त्रिंशत्तु शान्तेरुक्तास्तदिदमपि मतान्तरमिति, तथा स्वयम्भूः-तृतीयवासुदेवस्तस्य नवतिवर्षाणि विजयः-पृथिवीसाधनव्यापारः, 'सव्वेसि णं'मित्यादि, सर्वेषां विंशतेरपि वर्तुलवैताढ्यानां-शब्दापातिप्रभृतीनां योजनसहस्रोच्छ्रितत्वात् सौगन्धिककाण्डचरमान्तस्य चाष्टसु सहस्रेषु व्यवस्थितत्वात् नवसु सहस्रेषु नवतेः शतानां भावात् यथोक्तमन्तरमनवद्यमिति ॥ ९० ॥

एक्काणउइं परवेयावच्चकम्मपडिमाओ प०, कालोए णं समुद्दे एकाणउइं जोयणसयसहस्साइं साहियाइं परिक्खेवेण प०, कुंथुस्स णं अरहओ एक्काणउइं आहोत्तियसया होत्था, आउयगोयवज्जाणं छण्हं कम्मपगडीण एक्काणउइं उत्तरपगडीओ प० ॥ सूत्र ९१ ॥

अथैकनवतिस्थानके किञ्चिल्लिख्यते, तत्र परेषां-आत्मव्यतिरिक्तानां वैयावृत्त्यकर्माणि-भक्तपानादिभिरुपष्टम्भक्रियास्तद्विषयाः प्रतिमा-अभिग्रहविशेषाः परवैयावृत्त्यकर्मप्रतिमाः, एतानि च प्रतिमात्वेनाभिहितानि क्वचिदपि नोपलब्धानि, केवलं विनयवैयावृत्त्यभेदा एते स[म्भव]न्ति, तथाहि-दर्शनगुणाधिकेषु सत्कारादिर्दशधा विनयः, आह च—"सक्कार १ ब्भुट्ठाणे २ सम्माणे ३ आसण [अ]भिग्गहे ४ तह य । आसणअणुप्पयाणं ५ किइकम्म ६ अंजलिग्गहो य ७ ॥१॥ इंतस्सणुगच्छणया ८ ठियस्स तह पज्जुवासणा

भणिया ९ । गच्छंताणुव्वयणं १० एसो सुस्सूसणाविणओ ॥ २ ॥ [ सत्कारोऽभ्युत्थानं सन्मानं आसनाभिग्रहः तथा च । आसनानुप्रदानं कृतिकर्म अञ्जलिप्रग्रहः ॥ १ ॥ ] त्ति [ आयतोऽनुगमनं स्थितस्य तथा पर्युपासना भणिता । गच्छतोऽनुव्रजनं एप शुश्रूपाविनयः ॥ २ ॥ ] तत्र सत्कारो–वन्दनस्तवनादिः १ अभ्युत्थानं–आसनत्यागः २ सन्मानो–वस्त्रादिपूजनं ३ आसनाभिग्रहः तिष्ठत एवासनानयनपूर्वकमुपविशताऽत्रेति भणनमिति ४ आसनानुप्रदानं–आमनस्य स्थानात् स्थानान्तरसञ्चारणं ५ कृतिकर्म्मादीनि प्रकटानि, तथा तीर्थङ्करादीनां पञ्चदशानां पदानामनाशातनादिपदचतुष्टयगुणितत्वे षष्टिविधोऽनाशतनाविनयो भवति, तथाहि–तित्थयर १ धम्म २ आयरिय ३ वायग ४ थेरे ५ [य]कुल ६ गणे ७ सङ्घे ८ । सम्भोइय ९ किरियाए १० मइनाणाई[ण] १५ य तहेव ॥ १ ॥ [ तीर्थकरधर्माचार्यवाचकस्थविरकुलगणसंघेषु । साम्भोगिकक्रिययोः मतिज्ञानादीनां तथैव ॥ १ ॥ ] अत्र भावना–तीर्थकराणामनाशातना तीर्थकरानाशातना, तीर्थङ्करप्रज्ञप्तस्य धर्म्मस्य अनाशातनाविनयः, एवं सर्वत्र भावना कर्तव्या, "अणसायणा य भत्ती बहुमाणो तहय वण्णवाओ य । अरहंतमाइयाणं केवलणाणावसाणाणं ॥ १ ॥" इति [ अनाशातना च भक्तिर्बहुमानस्तथैव वर्णवादश्च । अर्हदादीनां केवलज्ञानावसानानां ॥ १ ॥ ] तथौपचारिकविनयः सप्तधा, यदाह–"अब्भासासण १ छंदाणुवत्तणं २ कयपडिकिई तहय ३ । कारियनिमित्तकरणं ४ दुक्खत्तगवेसणा तहय ॥ १ ॥ तह देसकालजाणण सव्वत्थे[सु]तहय अणुमई भणिया ७। उवयारिओ उ विणओ एसो भाणिओ समासेणं ॥ २ ॥ [ अभ्यासासनं छन्दोऽनुवर्त्तनं कृतप्रातिकृतिस्तथा च । कारितनिमित्त करणं दुःखार्तगवेषणं तथैव ॥ १ ॥ तथा देशकालज्ञानं सर्वार्थेपु तथा चानुमतिर्भणिता औपचारिकस्तु विनय एष भणितः समासेन ॥२॥] इति, अभ्यासासनं–उपचरणीयस्यान्तिकेऽवस्थानं छन्दोऽनुवर्त्तनं–अभिप्रायानुवृत्तिः कृतप्रतिकृतिर्नाम–प्रसन्ना आचार्याः सूत्रादि

दास्यन्ति न नाम निर्ज्जरेति मन्यमानस्याहारादिदानं कारितनिमित्तकरम—सम्यक्शास्त्रपदमभ्यापितस्य विशेषण विनये वर्त्तनं तदर्थानुष्ठानं च, शेषाणि प्रसिद्धानि, तथा वैयावृत्त्यं दशधा, यदाह—'आयरिय उवज्झाए थेरतवस्सी गिलाणसेहाणं । साहम्मिय कुलगणसंघसङ्गय तमिह कायव्वं ॥ १ ॥' [आचार्योपाध्यायस्थविरतपस्विग्लानशैक्षाणां । साधर्मिके कुलगणसंघानां सगत तदिह कर्त्तव्यं ॥ १ ॥] इति, तत्र प्रमार्जना १ विगु २ देश ३ समुद्देश ४ साधना ५ चार्यविनयो भवति, तथौपचारिकविनयोऽभ्यासवृत्त्यादि सप्तधा, तथा वैयावृत्त्यं दशमेदादाचार्यस्य च पञ्चविधत्वादेव चतुर्दशधेत्येकनवतिर्विनयमेदा एते एव अभिग्रहविषयीभूताः प्रतिमा उच्यन्त इति । दर्श० १० अना० ६० औप० ७ वैया० १४ । तथा 'कालोए णं'ति कालोदः समुद्रः, स चैकनवतिर्लक्षाणि साधिकानि परिक्षेपेण, आधिक्यं च सप्तत्या सहस्रैः षड्भिः शतैः पञ्चोत्तरैः सप्तदशभिर्धनुःशतैः पञ्चदशोत्तरैः सप्ताशीत्या चाङ्गुलैः साधिकैरिति 'आहोहिय'त्ति नियतक्षेत्रविषयावधयः । आयुर्गोत्रवर्ज्जानां 'पण्णा'मिति ज्ञानावरणदर्शनावरणवेदनीयमोहनीयनामान्तरायाणां क्रमेण पञ्चनवद्व्यष्टाविंशतिद्विचत्वारिंशत्पञ्चमेदानामिति ॥ ९१ ॥

चाणउई पडिमाओ पं०, थेरे णं इंदभूती बाणउइं वासाइं सव्वाउयं पालइत्ता सिद्धे बुद्धे, मंदरस्स णं पव्वयस्स बहुमज्झदेसभागाओ गोथुभस्स आवासपव्वयस्स पच्चच्छिमिल्ले चरमंते एस णं बाणउइं जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउण्हपि आवासपव्वयाणं ॥ सूत्र ९२ ॥

अथ द्विनवतिस्थानकं किमप्यभिधीयते, द्विनवतिः प्रतिमाः—अभिग्रहविशेषाः, ताश्च दशाश्रुतस्कन्धनिर्युक्त्यनुसारेण दर्श्यन्ते, तत्र किल पञ्च प्रतिमा उक्ताः, तद्यथा—समाधिप्रतिमा द्विविधा १ उपधानप्रतिमा २ विवेकप्रतिमा ३ प्रतिसंलीनताप्रतिमा ४ एक-

विहारप्रतिमा चेति ५, तत्र समाधिप्रतिमा द्विविधा श्रुतसमाधिप्रतिमा चारित्रसमाधिप्रतिमा च, दर्शनं ज्ञानान्तर्गतमिति न भिन्ना दर्शनप्रतिमा विवक्षिता, तत्र श्रुतसमाधिप्रतिमा द्विषष्टिभेदा, कथं?, आचारे प्रथमे श्रुतस्कन्धे पञ्च द्वितीये सप्तत्रिंशत् स्थानाङ्गे षोडश व्यवहारे चतस्र इत्येता द्विषष्टिः, एताश्च चारित्रस्वभावा अपि विशिष्टश्रुतवतां भवन्तीति श्रुतप्रधानतया श्रुतसमाधिप्रतिमात्वेनोपदिष्टा इति सम्भावयामः, पञ्च सामायिकच्छेदोपस्थापनीयाद्याश्चारित्रसमाधिप्रतिमाः, उपधानप्रतिमा द्विविधा भिक्षुश्रावकभेदात्, तत्र भिक्षुप्रतिमा 'मासाइसत्तंता' इत्यादिनाऽभिहितस्वरूपा द्वादश उपासप्रतिमास्तु 'दंसणवय' इत्यादिनाऽभिहितस्वरूपा एकादशेति सर्वास्त्रयोविंशतिर्विवेकप्रतिमा त्वेका क्रोधादेरारभ्यन्तरस्य गणशरीरोपधिभक्तपानादेर्बाह्यस्य च विवेचनीयस्यानेकत्वेऽप्येकत्वविवक्षणादिति, प्रतिसंलीनताप्रतिमाऽप्येकैव इन्द्रियस्वरूपस्य पञ्चविधस्य नोइन्द्रियस्वभावस्य च योगकषायविविक्तशयनासनभेदतस्त्रिविधस्य प्रतिसंलीनताविषयस्य भेदेनाविवक्षणादिति, पञ्चम्येकविहारप्रतिमैकैव, न चेह सा भेदेन विवक्षिता, भिक्षुप्रतिमास्वन्तर्भावितत्वादित्येवं द्विषष्टिः पञ्च त्रयोविंशतिरेका एका च द्विनवतिस्ता भवन्तीति । स्थविरइन्द्रभूतिर्महावीरस्य प्रथमगणनायकः, स च गृहस्थपर्याये पञ्चाशतं वर्षाणि त्रिंशतं छद्मस्थपर्यायं द्वादश च केवलित्वं पालयित्वा सिद्ध इति सर्वाणि द्विनवतिरिति । 'मंदरस्से'त्यादि, भावार्थः, मेरुमध्यभागात् जम्बूद्वीपस्य पञ्चाशत्सहस्राणि ततो द्विचत्वारिंशत् सहस्राण्यतिक्रम्य गोस्तुभपर्वत इति सूत्रोक्तमन्तरं भवतीति, एवं शेषाणामपि ॥ ९२ ॥

**चंदप्पहस्स णं अरहओ तेणउई गणा तेणउई गणहरा होत्था, संतिस्स णं अरहओ तेणउई चउद्दसपुव्विसया होत्था, तेणउईमंडलगते णं सूरिए अतिवट्टमाणे निवट्टमाणे वा समं अहोरत्तं विसमं करेइ । सूत्रं ९३**

अथ त्रिनवतिस्थानकं किमपि वितन्यते, 'तेणउईमंडले'त्यादि, तत्र प्रविवर्त्तमानो वा—सर्वबाह्यात् सर्वाभ्यन्तरं प्रति गच्छन् निवर्त्तमानो वा—सर्वाभ्यन्तरात् सर्वबाह्यं प्रतिगच्छन् व्यत्ययो वा व्याख्येयः, सममहोरात्रं विषमं करोतीत्यर्थः अहश्च रात्रिश्च अहोरात्रं तयोः समता तदा भवति यदा पञ्चदश पञ्चदश मुहूर्त्ता उभयोरपि भवन्ति तत्र सर्वाभ्यन्तरमण्डले अष्टादशमुहूर्त्तमहर्भवति रात्रिश्च द्वादशमुहूर्त्ता, सर्वबाह्ये तु व्यत्ययः, तथा त्र्यशीत्यधिकमण्डलशते द्वौ द्वावेकषष्टिभागौ वर्द्धेते हीयेते च, यदा च दिनवृद्धि-स्तदा रात्रिहानिः रात्रिवृद्धौ च दिनहानिरिति, तत्र त्रिनवतितमे मण्डले प्रतिमण्डलं मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या त्रयो मुहूर्त्ता एकैकेन षष्टिभागेनाधिकाः वर्द्धन्ते वा हीयन्ते वा, तेषु च द्वादशमुहूर्त्तेषु मध्ये क्षिप्तेषु अष्टादशभ्योऽपसारितेषु वा पञ्चदश मुहूर्त्ता उभयत्रैकेनै-कषष्टिभागेनाधिका हीना वा भवन्तो त्रिनवतितममण्डलस्यार्द्धे समाहोरात्रता तस्यैव चान्ते विषमाहोरात्रता भवति, त्रिनवतितम मण्डलं चादित आरभ्य त्रिनवतितम तत्र च मण्डले यथोक्तः सूत्रार्थ इति ॥ ९३ ॥

निसहनीलवंतियाओ णं जीवाओ चउणउइ जोयणसहस्साइं एक्कं छप्पन्नं जोयणसयं दोन्नि य एगूणवीसइ-भागे जोयणस्स आयामेणं प०, अजियस्स णं अरहओ चउणउइं ओहिनाणिसया होत्था ॥ सूत्र ९४ ॥

अथ चतुर्नवतिस्थानके किञ्चिद्विविच्यते, 'निसहे'त्यादि इह पादोना संवादगाथा "चउणउइसहस्साइं छप्पन्नाहिय सयं कला दो य । जीवा निसहस्सेस" [ चतुर्नवतिः सहस्राणि षट्पञ्चाशदधिकं शतं कले द्वे च । जीवा निषधस्यैषा ] त्ति ॥ ९४ ॥

सुपासस्स णं अरहओ पचाणउइ गणा पचाणउइ गणहरा होत्था, जम्बुद्दीवस्स णं दीवस्स चरमंताओ चउदिसिं लवणसमुद्दं पचाणउइ पचाणउइ जोयणसहस्साइं ओगाहित्ता चत्तारि महापायालकलसा प०

तं०-वलयामुहे केऊए जूयए ईसरे, लवणसमुद्दस्स उभओपासंपि पंचाणउयं पंचाणउयं पदेसाओ उव्वेहुस्सेहपरिहाणीए प०, कुंथू णं अरहा पंचाणउइ वाससहस्साइं परमाउयं पालइत्ता सिद्धे बुद्धे जाव पहीणे, थेरे णं मोरियपुत्ते पंचाणउइवासाइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जावप्पहीणे ॥ सूत्रं ९५ ॥

अथ पञ्चनवतिस्थानके किञ्चिल्लिख्यते, लवणसमुद्रस्योभयपार्श्वतोऽपि पञ्चनवतिःप्रदेशा उद्वेधोत्सेधपरिहान्या विषये प्रज्ञप्ताः, अयमत्र भावार्थः—लवणसमुद्रमध्ये दशसाहस्रिक्षेकत्रस्य समधरणीतलापेक्षया सहस्रमुद्वेधः, उण्डत्वमित्यर्थः, तदनन्तरं पञ्चनवतिं प्रदेशानतिक्रम्योद्वेधस्य प्रदेशो हीयते, ततोऽपि पञ्चनवतिं प्रदेशान् गत्वा उद्वेधस्य प्रदेशः परिहीयते, एवं पञ्चनवति२प्रदेशातिक्रमे प्रदेशमात्रस्योद्वेधस्य हान्या पञ्चनवत्यां योजनसहस्रेष्वतिक्रान्तेषु समुद्रतटप्रदेशेषु उद्वेधसहस्रस्यापि परिहानिर्भवतीत्यर्थः, समभूतलत्वं भवतीति, तथा समुद्रमध्यभागापेक्षया तत्तटस्य साहस्रिक उत्सेधो भवति, उत्सेधश्चोच्चत्वं, तत्र समधरणीतलरूपात्तत्तटात्पञ्चनवतिं प्रदेशानतिक्रम्य एकप्रदेशिका उत्सेधस्य परिहानिर्भवति, ततोऽपि पञ्चनवतिं प्रदेशान् गत्वा प्रादेशिक्येवोत्सेधहानिर्भवति, एवं पञ्चनवतिपञ्चनवतिप्रदेशातिक्रमेण प्रादेशिक्यां प्रादेशिक्यां उत्सेधहान्यां पञ्चनवत्यां योजनसहस्रेष्वतिक्रान्तेषु समुद्रमध्यभागे सहस्रमपि उत्सेधस्य परिहीयते, एवं साहस्रिकोत्सेधपरिहानौ साहस्रिकोद्वेधता भवति 'लवणस्से'ति, अयमोद्वेधार्थे योत्सेधपरिहानिस्तस्यां च पञ्चनवतिः प्रदेशाः—प्रज्ञप्तास्तेष्वतिलङ्घितेषु उत्सेधतः प्रदेशपरिहान्यामुद्वेधः प्रादेशिको भवतीति, तथा कुन्थुनाथस्य—सप्तदशतीर्थकरस्य कुमारत्वमाण्डलिकत्वचक्रवर्त्तित्वानगारत्वेषु प्रत्येकं त्रयोविंशतेर्वर्षसहस्राणामर्द्धाष्टवर्षशतानां च भावात्सर्वायुः पञ्चनवतिर्वर्षसहस्राणि भवन्तीति, तथा मौर्यपुत्रो-महावीरस्य सप्तमगणधरस्तस्य पञ्चनवतिर्वर्षाणि सर्वायुः, कथं ?, गृहस्थत्वछद्मस्थत्वकेवलित्वेषु क्रमेण पञ्चषष्टिचतुर्दशषो-

ध्यानां वर्णानां भावादिति ॥ ९५ ॥

एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स छण्णउइ छण्णउई गामकोडीओ होत्था, वायुकुमाराणं छण्णउइ भवणावाससयसहस्सा प०, ववहारिए णं दंडे छण्णउइ अंगुलाइं अंगुलमाणेणं, एवं धणू नालिया जुगे अक्खे मुसलेवि हु, अब्भिंतरओ आइमुहुत्ते छण्णउइअंगुलछाए प० ॥ सूत्र ९६ ॥

अथ षण्णवतिस्थानके किमपि व्याख्यायते, वायुकुमाराणां षण्णवतिर्भवनलक्षाणि दक्षिणस्यां पञ्चाशत उत्तरस्यां च षट्चत्वारिंशतो भावादिति 'ववहारिए'त्ति व्यावहारिको येन गव्यूतादि प्रमाणं चिन्त्यते, अव्यावहारिकस्तु लघुः दीर्घो वा भवत्युक्तप्रमाणात्, दण्डो हि चतुः कर उक्त करश्चतुर्विंशत्यङ्गुलः एवं चतुर्विंशतौ चतुर्गुणितायां षण्णवतिः स्यादेवेति। 'अब्भंतराओ' इत्यादि अभ्यन्तरमण्डलमाश्रित्येत्यर्थः, आदिमुहूर्त्तः षण्णवत्यङ्गुलच्छायः प्रज्ञप्तः, अयमत्र भावार्थः—सर्वाभ्यन्तरमण्डले यत्र दिने सूर्यश्चरति तस्य दिनस्य प्रथमो मुहूर्त्तो द्वादशाङ्गुलमानं शङ्कुमाश्रित्य षण्णवत्यङ्गुलच्छायो भवति, तथाहि—तद्दिनमष्टादशमुहूर्त्तप्रमाणं भवतीति मुहूर्त्तोऽष्टादशभागो दिनस्य भवति, ततश्च छायागणितप्रक्रियया छेदेनाष्टादशलक्षणेन द्वादशाङ्गुलः शङ्कुर्गुण्यत इति, ततो द्वे शते षोडशोत्तरे " २ १६, तयोरर्द्धीकृतयोरष्टोत्तरं शतं भवति १०८, ततश्च शङ्कुप्रमाणे १२ ऽपनीते षण्णवतिरङ्गुलानि लभ्यन्ते इति ॥९६॥

मंदरस्स णं पव्वयस्स पच्चच्छिमिल्लाओ चरमंताओ गोथुभस्स णं आवासपव्वयस्स पच्चच्छिमिल्ले चरमंते एस णं सत्ताणउइ जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउदिसिंपि, अट्ठण्हं कम्मपगडीणं सत्ताणउइ

उत्तरपगडीओ प०, हरिसेणे णं राया चाउरंतचक्कवट्टी देसूणाइं सत्ताणउइ वाससयाइं अगारमज्झे वसित्ता मुंडे भवित्ता णं जाव पव्वइए ॥ सूत्रं ९७ ॥

अथ सप्तनवतिस्थानके किञ्चिदभिधीयते, 'मंदरे' त्यादि, भावार्थोऽयं–मेरोः पश्चिमान्तात् जम्बूद्वीपान्तः पञ्चपञ्चाशत् सहस्राणि ततो द्विचत्वारिंशतो गोस्तुभ इसि यथोक्तमेवान्तरामिति, हरिषेणो दशमचक्रवर्त्ती देशोनानि सप्तनवतिं वर्षशतानि गृहमध्युषितस्त्रीणि चाधिकानि प्रव्रज्यां पालितवान् दशवर्षसहस्रत्वात्तदायुष्कस्येति ॥ ९७ ॥

नंदणवणस्स णं उवरिल्लाओ चरमंताओ पंडुयवणस्स हेट्ठिल्ले चरमंते एस णं अट्ठाणउइ जोयणसहस्साइं अबाहाए अंतरे प०, मंदरस्स णं पव्वयस्स पच्चच्छिमिल्लाओ चरमंताओ गोथुभस्स आवासपव्वयस्स पुरच्छिमिल्ले चरमंते एस णं अट्ठाणउइ जोयणसहस्साइं अबाहाए अंतरे प०, एवं चउदिसिंपि, दाहिणभरहस्स णं धणुप्पिट्ठे अट्ठाणउइ जोयणसयाइं किंचूणाइं आयामेणं प०, उत्तराओ कट्ठाओ सूरिये पढमं छम्मासं अयमाणे एगूणपन्नासतिमे मण्डलगते अट्ठाणउइ एकसट्ठिभागे मुहुत्तस्स दिवसखेत्तस्स निवुड्ढेत्ता रयणिखेत्तस्स अभिनिवुड्ढित्ता णं सूरिए चारं चरइ, दक्खिणाओ णं कट्ठाओ सूरिए दोच्चं छम्मासं अयमाणे एगूणपन्नासइमे मंडलगते अट्ठाणउइ एकसट्ठिभाए मुहुत्तस्स रयणिखित्तस्स निवुड्ढेत्ता दिवसखेत्तस्स अभिनिवुड्ढेत्ता णं सूरिए चार चरइ, रेवईपढमजेट्ठापज्जवसाणाणं एगूणवीसाए नक्खत्ताणं अट्ठाणउइ ताराओ तारग्गेणं प० ॥ सूत्रं ९८ ॥

अथाष्टनवतिस्थानके किञ्चिदभिधीयते—'नंदनवणे'त्यादि, भावार्थोऽयं—नंदनवनं मेरोः पञ्चयोजनशतोच्छ्रितप्रथममेखलाभावि पञ्चयोजनशतोच्छ्रित तत्रत्यपञ्चयोजनशतोच्छ्रितकूटाष्टकस्य तद्ग्रहणेन ग्रहणात् तथा पण्डकवनं च मेरुशिखरव्यवस्थितं अतो नंदनवनस्य मेरोरुच्चैस्त्वस्य भावे सहस्रे अपकृष्टे यथोक्तमन्तरं भवतीति । गोस्तुभस्यात्र भावार्थः पूर्ववन्नवरं गोस्तुभविष्कम्भसहस्रे क्षिप्ते यथोक्तमन्तरं भवतीति । 'वेयड्ढस्स य'मित्यादि यः केषुचित्पुस्तकेषु दृश्यते सोऽपपाठः, सम्यक्पाठश्चायं—'दाहिणभरहड्ढस्स णं धणुपिट्ठे अट्ठाणउइं जोयणसयाइं किंचूणाइं आयामेणं पण्णत्ते' इति, यतोऽन्यत्रोक्तं—'नव चेव सहस्साइं छावट्ठाइं सयाइं सत्त भवे । सविसेस कला चेगा दाहिणभरहे धणुप्पिट्ठं ॥ १ ॥ ( ९७६६ $\frac{1}{19}$) त्ति वैताढ्यधनुःपृष्ठं त्वेवमुक्तमन्यत्र—"दस चेव सहस्साइं सत्तेव सया हवंति तेयाला । धणुपिट्ठं वेयड्ढे कला य पण्णारस हवंति ॥१॥(१०७४३ $\frac{15}{19}$) 'उत्तराओ ण'मित्यादि, भावार्थः पूर्वोक्तभावनानुसारेणावसेयः, नवरमिह 'एकतालीसइमे' इति केषुचित्पुस्तकेषु दृश्यते सोऽपपाठः, 'एगूणपन्नासइमे'त्ति एकोनपञ्चाशत्तो द्विगुणत्वे अष्टनवतिर्भवति, द्व्यगुणनं च मतिमण्डलं मुहूर्तैकषष्टिभागद्वयस्य वृद्धेर्दिनस्य रात्रेर्वेति । 'रेवई'त्यादि,रेवतिः प्रथमा येषां तानि रेवतिप्रथमानि तथा ज्येष्ठा पर्यवसाने येषां तानि ज्येष्ठापर्यवसानानि तानि च तानि चेति कर्म्मधारयः तेषामेकोनविंशतेर्नक्षत्राणामष्टनवतिस्तारास्तारापरिमाणेन प्रज्ञप्ताः, तथाहि—रेवतिनक्षत्रं द्वात्रिंशत्तारं ३२ अश्विनी त्रितारं ३५ भरणी ( त्रितारं ) ३८ कृत्तिका षट्तारं ४४ रोहिणी पञ्चतारं मृगशिरस्त्रितारं ५२ आर्द्रा एकतारं ५३ पुनर्वसुः पञ्चतारं ५८ पुष्यस्त्रितारं ६१ अश्लेषा षट्तारं ६७ मघा सप्ततारं ७४ पूर्वाफाल्गुनी द्वितारं ७६ उत्तराफाल्गुनी द्वितारं ७८ हस्तः पञ्चतारं ८३ चित्रा एकतारं ८४ स्वातिरेकतारं ८५ विशाखा पञ्चतारं ९० अनुराधा चतुस्तारं ९४ ज्येष्ठा त्रितारमित्येवं ९७ सर्वताराभीलने यथोक्तं ताराप्रमेकोनं च ग्रन्थान्तराभिप्रायेण भवति, अधिकृतग्रन्थाभि-

प्रायेण त्वेषामेकतरस्य एकताराधिकत्वं सम्भाव्यते ततो यथोक्ता तत्संख्या भवतीति ॥ ९८ ॥

**मंदरे णं पव्वए णवणउइ जोयणसहस्साइं उड्ढं उच्चत्तेणं प०, नंदणवणस्स णं पुरच्छिमिल्लाओ चरमंताओ पच्चच्छिमिल्ले चरमंते एस णं नवनउइ जोयणसयाइं अबाहाए अंतरे प०, एवं दक्खिणिल्लाओ चरमंताओ उत्तरिल्ले चरमंते एस णं णवणउइ जोयणसयाइं अबाहाए अंतरे प०, उत्तरे पढमे सूरियमंडले नवनउइ-जोयणसहस्साइं साइरेगाइं आयामविक्खंभेणं प०, दोच्चे सूरियमंडले नवनउइ जोयणसहस्साइं साहियाइं आयामविक्खंभेणं प०, तइए सूरियमंडले नवनउइ जोयणसहस्साइं साहियाइं आयामविक्खंभेणं प०, इमीसे णं रयणप्पभाए पुढवीए अंजणस्स कंडस्स हेट्ठिल्लाओ चरमंताओ वाणमंतरभोमेज्जविहाराणं उवरिमंते एस णं नवनउइ जोयणसयाइं अबाहाए अंतरे प० ॥ सूत्रं ९९ ॥**

अथ नवनवतिस्थानके किमपि लिख्यते—'नंदणवणे'त्यादि, अस्य भावार्थः—मेरुविष्कम्भो मूले दश सहस्राणि, नन्दनवनस्थाने तु नवनवतिर्योजनशतानि चतुःपञ्चाशच्च योजनानि षट् योजनैकादशभागा बाह्यो गिरिविष्कम्भो नन्दनवनाभ्यन्तरस्तु मेरुविष्कम्भ एकोननवतिः शतानि चतुःपञ्चाशदधिकानि षट् चैकादशभागास्तथा पञ्च शतानि नन्दनवनविष्कम्भः, तदेवमभ्यन्तरगिरिविष्कम्भो द्विगुणनन्दनवनविष्कम्भश्च मिलितो यथोक्तमन्तरं प्रायो भवति, 'पढमसूरियमंडले'त्ति, इह जम्बूद्वीपप्रमाणस्याशीत्युत्तरशते द्विगुणिते अपहृते यो राशिः स प्रथममण्डलस्यायामविष्कम्भः, स च नवनवतिः सहस्राणि षट् च शतानि चत्वारिंशदधिकानि, द्वितीयं तु नवनवतिः सहस्राणि षट् शतानि पञ्चचत्वरिंशच्च योजनानि योजनस्य च पञ्चत्रिंशदेकषष्टिभागाः, कथं ?, मण्डलस्य चान्तरं द्वे द्वे

योजने, सूर्यविमानविष्कम्भचाष्टचत्वारिंशदेकषष्टिभागा', एवमुभिगुणित पञ्च योजनानि पञ्चत्रिंशदेकषष्टिभागाश्चेति जातमेतच्च पूर्व-मण्डलविष्कम्भे क्षिप्त जातमुक्तप्रमाणमिति, तृतीयमण्डलविष्कम्भोऽप्येवमेवावसेयः, स च नवनवतिः सहस्राणि षट् शतानि एक-पञ्चाशत् योजनानि नवैकषष्टिभागाश्चेति । 'इमीसे ण'मित्यादि, भावार्थोऽयं अञ्जनकाण्डं दशमं, तत्र रत्नप्रभोपरिमान्ताच्छतं शतानां भवति, प्रथमकाण्डे प्रथमशते च व्यन्तरनगराणि सन्तीति तस्मिन्नपसारिते नवनवतिशतान्यन्तरं यत्रोक्तं भवतीति ॥ ९९ ॥

दसदसमिया णं भिक्खुपडिमा एगेण राइंदियसतेण अद्धछट्ठेहिं भिक्खासतेहिं अहासुत्त जाव आराहियावि भवइ सयभिसया नक्खत्ते एक्कसयतारे प०, सुविही पुप्फदंते णं अरहा एगं धणूसय उड्ढं उच्चत्तेणं होत्था, पासे णं अरहा पुरिसादाणीए एगं वाससयं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, एवं थेरेवि अज्जसुहम्मे, सव्वेवि णं दीहवेयड्ढपव्वया एगमेगं गाउयसयं उड्ढं उच्चत्तेणं प०, सव्वेवि णं चुल्लहिमवंतसिहरीवासहर-पव्वया एगमेगं जोयणसयं उड्ढं उच्चत्तेणं प० एगमेगं गाउयसयं उव्वेहेणं प० सव्वेऽवि णं कंचणगपव्वया एगमेगं जोयणसयं उड्ढं उच्चत्तेणं प० एगमेगं गाउयसयं उव्वेहेणं प० एगमेगं जोयणसयं मूले विक्खंभेणं प० ॥ सूत्र १०० ॥

अथ शतस्थानके किञ्चिल्लिख्यते, तत्र दश दशमानि दिनानि यस्यां सा दशदशमिका, या हि दिनानां दश दशकानि भवन्ति, दश दशमदिनानि स्युः च दिनानामत उच्यते एकेन रात्रिंदिवशतेनेति, यस्यां च प्रथमे दशके प्रतिदिनमेकैका भिक्षा द्वितीये द्वे द्वे एवं यावद्दशमे दश दशेत्येवं सर्वभिक्षासङ्कलने यत्रोक्तसंख्या भवत्येव इति, पार्श्वनाथस्त्रिंशद्वर्षाणि कुमारत्वं सप्ततिं चानगारत्वमित्येवं

शतमायुः पालयित्वा सिद्धः, एवं 'थेरेवि अज्जसुहमे'त्ति आर्यसुधर्म्मो-महावीरस्य पञ्चमो गणधरः सोऽपि वर्षशतं सर्वायुः पालयित्वा सिद्धस्तथा च तस्यागारवासः पञ्चाशद्वर्षाणि छद्मस्थपर्यायो द्विचत्वारिंशत्केवलिपर्यायोऽष्टौ, भवति चैतद्राशित्रयमिलने वर्षशतमिति। वैताढ्यादिपूच्चत्वचतुर्थांशः उद्वेधः, कञ्चनका उत्तरकुरुषु देवकुरुषु क्रमव्यवस्थितानां पञ्चानां महाहृदानामुभयतो दश दश व्यवस्थितास्ते च जम्बूद्वीपे शतद्वयसंख्याः समवसेया इति ॥ १०० ॥

चंदप्पभे णं अरहा दिवड्ढं धणुसयं उड्ढं उच्चत्तेणं होत्था, आरणे कप्पे दिवड्ढं विमाणावाससयं प०, एवं अच्चुएवि १५० सूत्रं १०१ ॥ सुपासे णं अरहा दो धणुसया उड्ढं उच्चत्तेणं होत्था सव्वेवि णं महाहिमवंत-रुप्पीवासहरपव्वया दो दो जोयणसयाइं उड्ढं उच्चत्तेणं प० दो दो गाउयसयाइं उव्वेहेण प०, जम्बुद्दीवे णं दीवे दो कंचणपव्वयसया प० ॥ २०० सूत्रं १०२ ॥

अथैकोत्तरस्थानवृद्ध्या सूत्ररचनां परित्यज्य पञ्चाशच्छतादिवृद्ध्या तां कुर्वन्नाह-'चंदप्पहे'त्यादि, सुगमं सर्वमाद्वादशाङ्गगणि-पिटकसूत्रात् ॥ २०० ॥

पउमप्पभे णं अरहा अड्ढाइज्जाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था, असुरकुमाराणं देवाणं पासायवडिंसगा अड्ढाइज्जाइं जोयणसयाइं उड्ढं उच्चत्तेणं प० ॥ २५० सूत्रं ॥ १०३ ॥

नवरं 'पासायवडिंसय'त्ति अवतंसकाः-शेखरकाः कर्णपूराणि वा अवतंसका इव अवतंसका प्रधाना इत्यर्थः प्रासादाश्च ते अवतंसकाः प्रासादानां वा मध्ये अवतंसकाः प्रासादावतंसकाः ॥ २५० ॥

सुमई णं अरहा तिण्णि धणुसयाइं उड्ढं उच्चत्तेणं होत्था, अरिट्ठनेमी णं अरहा तिण्णि वाससयाइं कुमारवासमज्झे वसित्ता मुंडे भवित्ता पव्वइए, वेमाणियाणं देवाणं विमाणपागारा तिण्णि तिण्णि जोयणसयाइं उड्ढं उच्चत्तेणं प०, समणस्स भगवओ महावीरस्स तिन्नि सयाणि चोद्दसपुव्वीणं होत्था, पंचधणुसइयस्स णं अंतिमसारीरियस्स सिद्धिगयस्स सातिरेगाणि तिण्णि धणुसयाणि जीवप्पदेसोगाहणा प० ॥ ३०० ॥ सूत्र ॥ १०४ ॥ पासस्स णं अरहओ पुरिसादाणीयस्स अद्धुट्ठसयाइं चोद्दसपुव्वीणं संपया होत्था, अभिनंदणे णं अरहा अद्धुट्ठाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था ॥ ३५० ॥ सूत्र १०५ ॥

तथा 'पंचधणुस्सइयस्स णं'मित्यादि, पञ्चधनुःशतप्रमाणस्य 'अंतिमसारीरियस्स'त्ति चरमशरीरस्य सिद्धिगतस्य सातिरेकाणि त्रीणि शतानि धनुषां जीवप्रदेशावगाहना प्रज्ञप्ता, यतोऽसौ शैलेशीकरणसमये शरीररन्ध्रपूरणेन देहत्रिभाग विमुच्य घनप्रदेशो भूत्वा देहत्रिभागद्वयावगाहनः सिद्धिमुपगच्छति सातिरेकत्वं चैव 'तिन्नि सया तेत्तीसा धणुत्तिभागो य होइ बोद्धव्वो । एसा खलु सिद्धाण उक्कोसोगाहणा भणिया ॥ १ ॥' त्ति [ त्रीणि शतानि त्रयस्त्रिंशद् धनूंषि त्रिभागश्च भवति बोद्धव्य । एषा खलु सिद्धानामुत्कृष्टावगाहना भणिता ॥ १ ॥ ] ॥ ३०० ॥ ३५० ॥

संभवे णं अरहा चत्तारि धणुसयाइं उड्ढं उच्चत्तेणं होत्था, सव्वेवि णं णिसढनीलवंता वासहरपव्वया चत्तारि चत्तारि जोयणसयाइं उड्ढं उच्चत्तेणं चत्तारि चत्तारि गाउयसयाइं उव्वेहेणं प०, सव्वेवि णं वक्खारपव्वया णिसढनीलवंतवासहरपव्वयए णं चत्तारि चत्तारि जोयणसयाइं उड्ढं उच्चत्तेणं चत्तारि चत्तारि

गाउयसयाइं उव्वेहेणं प०, आणयपाणएसु दोसु कप्पेसु चत्तारि विमाणसया प०, समणस्स णं भगवओ महावीरस्स चत्तारि सया वाईणं सदेवमणुयासुरंमि लोगंमि वाए अपराजियाणं उक्कोसिया वाइसंपया होत्था ॥ ४०० ॥ सूत्रं १०६ ॥

'सव्वेऽवि णं वक्खारपव्वए'त्यादि, वक्षस्कारपर्वता एकक्षेत्रप्रतिबद्धा विंशतिस्ते च वर्षधराः ते च चतुःचतुःशतोच्चाः ॥

अजिते णं अरहा अद्धपंचमाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था, सगरे णं राया चाउरंतचक्कवट्टी अद्धपंचमाइं धणुसयाइं उड्ढं उच्चत्तेणं होत्था ॥४५०॥ सूत्रं १०७ ॥ सव्वेवि णं वक्खारपव्वय सीआ सीओआओ महानईओ मंदरपव्वयंतेणं पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं पंच पंच गाउयसयाइं उव्वेहेणं प०, सव्वेवि णं वासहरकूडा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं होत्था मूले पंच पंच जोयणसयाइं विक्खंभेणं प०, उसभे णं अरहा कोसलिए पंच धणुसयाइं उड्ढं उच्चत्तेणं होत्था, भरहे णं राया चाउरंतचक्कवट्टी पंचधणुसयाइं उड्ढं उच्चत्तेणं होत्था, सोमणसगंधमादणविज्जुप्पभमालवंताणं वक्खारपव्वयाण मंदरपव्वयंतेणं पंच २ जोयणसयाइं उड्ढं उच्चत्तेणं पंच पंच गाउयसयाइं उव्वेहेणं प०, सव्वेवि णं वक्खारपव्वयकूडा हरिहरिस्सहकूडवज्जा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं मूले पंच पंच जोयणसयाइं आयामविक्खंभेणं प०, सव्वेवि णं नंदणकूडा बलकूडवज्जा पंच पंच जोयणसयाइं उड्ढं उच्चत्तेणं मूले पंच पंच जोयणसयाइं आयाममविक्खंभेणं प०, सोहम्मीसाणेसु कप्पेसु विमाणा पंच २ जोयणसयाइं उड्ढं उच्चत्तेणं प० ॥ ५०० ॥ सूत्रं १०८ ॥

सव्वेविण वक्खारेत्यादि शीतादिनदीप्रत्यासत्तौ मेरुप्रत्यासत्तौ च पञ्चशतोच्चा इति, तथा 'सव्वेवि णं वासे'त्यादि, तत्र वर्षधर कूटानि शतद्वयमशीत्यधिकं, कथं ?, 'लहुहिमव हिमवं निसढे एक्कारस अट्ठ नव य कूडाइं। नीलाइसु तिसु नवगं अट्ठेक्कारस जहासंख ॥१॥ [क्षुद्रहिमवति हिमवती निषधे एकादशाष्टौ नव च कूटानि। हिमवती नीलादिषु त्रिषु नवकमष्टैकादश च यथासंख्यम् ॥१॥] एतेषां च पञ्चगुणत्वात्, वक्षस्कारकूटानि त्वशीत्यधिकशतु'शतीसंख्यानि, कथं ?, "विज्जुप्पहमालवंते नव नव सेसेसु सत्त सत्तेव। सोलस वक्खारेसुं चउरो चउरो य कूडाइं" ॥ १ ॥ [विद्युत्प्रभमाल्यवतोर्नव नव शेषेषु सप्त सप्तैव। षोडश वक्षस्कारेषु चत्वारि चत्वारि च कूटानि ॥ १ ॥] एतेषां पञ्चगुणत्वात्, पञ्चगुणत्वं च जम्बूद्वीपादिमेरूपलक्षितक्षेत्राणां पञ्चत्वात्, सर्वाण्येतानि पञ्चशतोच्छ्रितानि, एवं मानुषोत्तरादिष्वपि, वैताढ्यकूटानि तु सक्रोशषड्योजनोच्छ्रयाणि, वर्षकूटानि तु ऋषभकूटादीन्यष्टयोजनो-च्छ्रितानीति, हरिकूटहरिसहकूटवर्जनं स्विह तयो' सहस्रोच्छ्रयत्वात्, आह च—'विज्जुप्पभहरिकूडो हरिस्सहो मालवंतवक्खारे। नंदणवणबलकूडो उव्विद्धा जोयणसहस्सं' ॥ १ ॥ [विद्युत्प्रभहरिकूटे हरिसहो माल्यवद्वक्षस्कारः। नन्दनवने बलकूट उद्विद्धा योजनसहस्रं ॥ १ ॥] ५०० ॥ १०८ ॥

सणकुमारमाहिंदेसु कप्पेसु विमाणा छजोयणसयाइं उड्ढं उच्चत्तेण प०, चुल्लहिमवतकूडस्स उवरिल्लाओ चर-मताओ चुल्लहिमवतस्स वासहरपव्वयस्स समधरणितले एस णं छ जोयणसयाइं अबाहाए अंतरे प०, एवं सिहरीकूडस्सवि, पासस्स णं अरहओ छ सया वाईणं सदेवमणुयासुरे लोए वाए अपराजिआणं उक्कोसिया वाईसंपया होत्या, अभिचंदे णं कुलगरे छ धणुसयाइं उड्ढं उच्चत्तेण होत्था, वासुपुज्जे णं अरहा छहिं पुरिस

सएहिं सद्धिं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए ॥ ६०० ॥ सूत्रं १०९ ॥

'चुल्लहिमवंतकूडस्से'त्यादि, इह भावार्थो–हिमवान् योजनशतोच्छ्रितस्तत्कूटं च पञ्चशतोच्छ्रितं इति सूत्रोक्तमन्तरं भवतीति, अभिचंदे णं कुलकरे'त्ति अभिचन्द्रः कुलकरोऽस्यामवसर्पिण्यां सप्तानां कुलकराणां चतुर्थः, तस्योच्छ्रयः षट् धनुःशतानि पञ्चाशदधिकानि ॥ ६०० ॥

बंभलंतएसु कप्पेसु विमाणा सत्त सत्त जोयणसयाइं उड्ढं उच्चत्तेणं प०, समणस्स णं भगवओ महावीरस्स सत्त जिणसया होत्था, समणस्स भगवओ महावीरस्स सत्त वेउव्वियसया होत्था, अरिट्ठनेमी णं अरहा सत्त वाससयाइं देसूणाइं केवलपरियागं पाउणित्ता सिद्धे बुद्धे जावप्पहीणे, महाहिमवंतकूडस्स णं उवरिल्लाओ चरमंताओ महाहिमवंतस्स वासहरपव्वयस्स समधरणितले एस णं सत्त जोयणसयाइं अबाहाए अंतरे प०, एवं रुप्पिकूडस्सवि ॥ ७०० सूत्रं ११० ॥

श्रमणस्य भगवतो महावीरस्य सप्त जिनशतानि केवलिशतानीत्यर्थः, तथा श्रमणस्य भगवतो महावीरस्य सप्त वैक्रियशतानि वैक्रियलब्धिमत्साधुशतानीत्यर्थः, 'अरिट्ठे'त्यादि, 'देसूणाइं'ति चतुःपञ्चाशतो दिनानामूनानि, तत्प्रमाणत्वात् छद्मस्थकालस्येति, 'महाहिमवंते'त्यादौ भावार्थोऽयं–महाहिमवान् योजनशतद्वयोच्छ्रितस्तत्कूटं च पञ्चशतोच्छ्रितमिति सूत्रोक्तमन्तरं भवतीति ॥ ७०० ॥

महासुक्कसहस्सारेसु दोसु कप्पेसु विमाणा अट्ठ जोयणसयाइं उड्ढं उच्चत्तेणं प०, इमीसे णं रयणप्पभाए

रयणप्पभाए बहुसमरमणिज्जाओ भूमिभागाओ नवहिं जोयणसएहिं सव्वुवरिमे ताराख्वे चार चरइ, निसढस्स णं वासहरपव्वयस्स उवरिल्लाओ सिहरतलाओ इमीसे णं रयणप्पभाए पुढवीए पढमस्स कंडस्स बहुमज्झदेसभाए एस णं नव जोयणसयाइं अबाहाए अंतरे प० एवं नीलवंतस्सवि ॥ ९०० ॥ सूत्रं ११२ ॥

निसहकूडस्स ण'मित्यादि, इहायं भावः-निषधकूटं पञ्चशतोच्छ्रितं निषधश्च चतुःशतोच्छ्रित इति यथोक्तमन्तरं भवतीति ॥ ९०० ॥

सव्वेवि णं गेवेज्जविमाणे दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प०, सव्वेवि णं जमगपव्वया दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प० दस दस गाउयसयाइं उव्वेहेणं प० मूले दस दस जोयणसयाइं आयामविक्खंभेणं प०, एवं चित्तविचित्तकूडावि भाणियव्वा, सव्वेवि णं वट्टवेयड्ढपव्वया दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प० दस दस गाउयसयाइं उव्वेहेणं प० मूले दस दस जोयणसयाइं विक्खंभेणं प०, सव्वत्थ समा पल्लगसंठाणसंठिया प०, सव्वेवि णं हरिहरिस्सहकूडा वक्खारकूडवज्जा दस दस जोयणसयाइं उड्ढं उच्चत्तेणं प, मूले दस जोयणसयाइं विक्खंभेणं, एवं बलकूडावि नंदणकूडवज्जा, अरहावि अरिट्ठनेमी दस वाससयाइं सव्वाउयं पालइत्ता सिद्धे बुद्धे जाव सव्वदुक्खप्पहीणे, पासस्स णं अरहओ दस सयाइं जिणाणं होत्था, पासस्स णं अरहओ दस अन्तेवासीसयाइं कालगयाइं जाव सव्वदुक्खपहीणाइं पउमद्दहपुंडरीयद्दहा य दस दस जोयणसयाइं आयामेणं प०. ॥ १००० सूत्रं ११३ ॥

अणुत्तरोववाइयाणं देवाण विमाणा एक्कारस जोयणसयाइं उड्ढं उच्चत्तेण प०, पासस्स णं अरहओ इक्कारस सयाइं वेउव्वियाण होत्था ॥ ११०० सूत्र ११४ ॥ महापउममहा पुण्डरीयदहाण दो दो जोयणसहस्साइं आयामेण प० ॥ २००० सूत्र ११५ ॥ इमीसे ण रयणप्पभाए पुढवीए वइरकंडस्स उवरिल्लाओ चरमंताओ लोहियक्खकंडस्स हेट्ठिल्ले चरमंते एस ण तिन्नि जोयणसयसहस्साइं अबाहाए अंतरे प० ॥ ३००० सूत्रं ११६ ॥ तिगिञ्छकेसरिदहाण चत्तारि चत्तारि जोयणसहस्साइं आयामेण प० ॥ ४००० सूत्र ११७ ॥ धरणितले मंदरस्स ण पव्वयस्स बहुमज्झदेसभाए रुयगनाभीओ चउदिसिं पञ्च २ जोयणसहस्साइं अबाहाए अंतरे मंदरपव्वए प० ॥ ५००० सूत्र ११८ ॥ सहस्सारे ण कप्पे छ विमाणावाससहस्सा प० ॥ ६००० सूत्र ११९ ॥ इमीसे ण रयणप्पभाए पुढवीए रयणस्स कंडस्स उवरिल्लाओ चरमंताओ पुलगस्स कंडस्स हेट्ठिले चरमंते एस ण सत्त जोयणसहस्साइं अबाहाए अंतरे प० ॥ ७००० सूत्र १२० ॥ हरिवासरम्मयाणं वासा अट्ठ जोयणसहस्साइं साइरेगाइं वित्थरेण प० ॥ ८००० सूत्र १२१ ॥ दाहिणड्ढभरहस्स णं जीवा पाईणपडीणायया दुहओ समुद्द पुट्ठा नव जोयणसहस्साइं आयामेण प० ॥ ९००० सूत्र १२२ ॥ मंदरे ण पव्वए धरणितले दस जोयणसहस्साइं विक्खंभेण प ॥ १०००० सूत्र १२३ ॥ जम्बूदीवेणं दीवे एग जोयणसयसहस्स आयामविक्खंभेण प० ॥ १००००० सूत्र १२४ ॥ लवणे ण समुद्दे दो जोयणसयसहस्साइं चक्कवालविक्खंभेण प० ॥ २००००० सूत्र १२५ ॥ पासस्स ण अरहओ तिन्नि सयसाहस्सीओ सत्तावीस च

सहस्साइं उक्कोसिया सावया स. होत्था ॥ २००००० सूत्रं १२६ ॥ धायइखंडे णं दीवे चत्तारि जोयणसय- सहस्साइं चक्कवालविक्खंभेणं प० ॥ ४००००० सूत्रं १२७ ॥ लवणस्स णं समुद्दस्स पुरच्छिमिल्लाओ चरमंताओ पच्चच्छिमिल्ले चरमंते एस णं पंच जोयणसयसहस्साइं अबाहाए अंतरे प० ॥ ५००००० सूत्रं १२८ ॥ भरहे णं राया चाउरंतचक्कवट्टी छ पुव्वसयसहस्साइं रायमज्झे वसित्ता मुंडे भवित्ता अगाराओ अणगारियं पव्व- इए॥ ६००००० सूत्रं १२९॥ जम्बूदीवस्स णं दीवस्स पुरच्छिमिल्लाओ वेइयंताओ धायइखंडचक्कवालस्स पच्च- च्छिमिल्ले चरमंते सत्त जोयणसयसहस्साइं अबाहाए अंतरे प० ॥ ७००००० सूत्रं १३० ॥ माहिंदे णं कप्पे अट्ठ विमाणावाससयसहस्साइं प० ८००००० ॥ सूत्रं १३१ ॥ अजियस्स णं अरहओ साइरेगाइं नव ओहिनाणि- सहस्साइं होत्था ॥ ९००० सूत्रं १३२ ॥ पुरिससीहे णं वासुदेवे दस वाससयसहस्साइं सव्वाउयं पालइत्ता पञ्चमाए पुढवीए नेरइएसु नेरइयत्ताए उववन्ने ॥ १०००००० सूत्रं १३३ समणे भगवं महावीरे तित्थगरभवग्ग- हणाओ छट्ठे पोट्टिलभवग्गहणे एगं वासकोडिं सामन्नपरियागं पाउणित्ता सहस्सारे कप्पे सव्वट्ठविमाणे देवत्ताए उववन्ने ॥ १०००००० सूत्रं १३४ ॥ उसभसिरिस्स भगवओ चरिमस्स य महावीरवद्धमाणस्स एगा सागरोवमकोडाकोडी अबाहाए अंतरे प० ॥ १००००००००००००००० सूत्रं १३५ ॥

'सव्वेवि णं जगमे'त्यादि, उत्तरकुरुषु नीलवद्वर्षधरस्य—उत्तरतः शीताया महानद्या उभयोः कूलयोर्द्वौ यमकाभिधानौ पर्वतौ स्तः ते च पञ्चस्वप्युत्तरकुरुषु द्वयोर्द्वयोर्भावाद्दश, एवं 'चित्तविचित्तकूडावि'त्ति पञ्चसु देवकुरुषु यमकवत्तत्सद्भावात् पञ्च

मिथहृत्रा पञ्च विभिन्नहृत्रा इति, सन्नेवि ण'मित्यादि, सर्वेऽपि पृथा पैताढ्या विंशतिः शब्दापात्यादयः, 'सब्बेवि च हरी'त्यादि, हरिहृत्र विद्युत्प्रभाभिधाने गजदन्ताकारवक्षस्कारपर्वते हरिसहकूट तु माल्यवद्वक्षस्कारे, तानि च पञ्चस्वपि मन्दरेषु भावात् पञ्च पञ्च भवन्ति सहस्रोच्छ्रितानि च, 'वक्खारकूडवज्ज'त्ति शेषवक्षस्कारकूटेष्वेवमुच्चत्वं नास्त्येतेष्वेवास्तीत्यर्थः, एव 'बलकूडावि'त्ति पञ्चसु मन्दरेषु पञ्च नन्दनवनानि तेषु प्रत्येकमैशान्यां दिशि बलकूटाभिधान कूटमस्ति, ततः पञ्च, तानि सहस्रोच्छ्रितानि च, 'नन्दनकूडवज्ज'त्ति शेषाणि नन्दनवनेषु प्रत्येक पूर्वादिदिग्विदिग्व्यवस्थितानि चत्वारिंशत्संख्यानि नन्दनकूटानि वर्जयित्वा तानि साहस्रिकाणि न भवन्तीत्यर्थ । 'अरहते'त्यादि, कुमारत्वे त्रीणि वर्षशतान्यनगारत्वे सप्तेत्येवं दश शतानि, 'पउमद्दहपुंडरी यद्द'त्ति पद्मद्रहः श्रीदेवीनिवासो हिमवद्वर्षधरपर्वतोपरिवर्ती पुण्डरीकद्रहो लक्ष्मीदेवीनिवासः शिखरिवर्षधरोपरिवर्त्तीति ॥ १००० ॥ ११०० ॥ तथा महापद्ममहापुण्डरीकद्रहौ महाहिमवद्रुक्मिवर्षधरयोरुपरिवर्त्तिनौ ह्रीबुद्धिदेव्योर्निवासभूताविति ॥ २००० ॥ 'इमीसे ण रयणे'त्यादि, अयमिह भावार्थः—रत्नप्रभापृथिव्याः प्रथमस्य षोडशविभागस्य खरकाण्डाभिधानकाण्डस्य प्रथमं रत्नकाण्डं वज्रकाण्ड नाम काण्ड द्वितीय वैडूर्यकाण्ड तृतीय लोहिताक्षकाण्डं चतुर्थं तानि च प्रत्येक साहस्रिकाणीति त्रयाणां यथोक्तमन्तरं भवतीति ॥ ३००० ॥ तिगिच्छिकेसरिद्रहौ निषधनीलवद्वर्षधरोपरिस्थितौ धृतिकीर्त्तिदेवीनिवासाविति ॥ ४००० ॥ 'धरणितले' इत्यादि, धरणितले—धरण्यां सम भूभाग इत्यर्थः, 'रुयगनाभीओ'त्ति 'अट्ठपएसो रुयगो तिरिय लोगस्स मज्झयारम्मि । एस पभवो दिसाण एसेव भवे अणुदिसाणं ॥ १ ॥ [ अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्ये । एष प्रभवो दिशामेष एव भवेदनुदिशां ॥ १ ॥ ] ति, रुचक एव नाभिश्चक्रस्य तुम्बमिवेति रुचकनाभि तत्प्रतस्वपि दिक्षु पञ्च ... सहस्राणि ...

पञ्च सहस्राणि मेरुस्तस्य दशसहस्रविष्कम्भत्वादिति ॥ [illegible] ॥ [illegible] ॥ [illegible] [illegible]
सप्तममिति सप्तसहस्राणि ॥ ७००० ॥ 'हरिवासे'त्यादि, इहार्थे गाथार्द्ध—'हरिवासे इगवीसा चुलसी य सया कला य एक्का
य'त्ति ॥ ८००० ॥ 'दाहिणे'त्यादि दक्षिणो भागो भरतस्येति दक्षिणार्द्धभरतं तस्य जीवेव जीवा—ऋज्वी सीमा प्राचीनं—पूर्वतः
प्रतीचीनं—पश्चिमतः आयता—दीर्घा प्राचीनप्रतीचीनायता 'दुहओ'त्ति उभयतः पूर्वापरपार्श्वयोरित्यर्थः, समुद्रं—लवणसमुद्रं स्पृष्टा—छुप्त-
वती नव सहस्राण्यायामत इहोक्ता, स्थानान्तरे तु तद्विशेषोऽयं 'नव सहस्राणि सप्त शतान्यष्टचत्वारिंशदधिकानि द्वादश च कला'
इति ॥ ९००० ॥ १०००० ॥ १००००० ॥ २००००० ॥ ३००००० ॥ ४००००० ॥ 'लवणे'त्यादि, तत्र जम्बूद्वीपस्य लक्षं
चत्वारि च लवणस्येति पञ्च ॥ ५००००० ॥ 'जम्बूदीवस्से'त्यादि, तत्र लक्षं जम्बूद्वीपस्य द्वे लवणस्य चत्वारि धातकीखण्डस्येति
सप्त लक्षाण्यन्तरं सूत्रोक्तं भवतीति ७००००० ॥ अजितस्यार्हतः सातिरेकाणि नवावधिज्ञानिसहस्राणि, अतिरेकश्चत्वारि शतानि, इदं
च सहस्रस्थानकमपि लक्षस्थानकाधिकारे यदधीतं तत् सहस्रशब्दसाधर्म्याद्विचित्रत्वाद्वा सूत्रगतेर्लेखकदोषाद्वेति ॥ ९००००० ॥
पुरुषसिंहः पञ्चमवासुदेवः ॥ १०००००० ॥ 'समणे'त्यादि, यतो भगवान् पोट्टिलाभिधानराजपुत्रो बभूव, तत्र वर्षकोटिं प्रव्रज्यां
पालितवानित्येको भवः, ततो देवोऽभूदिति द्वितीयः ततो नन्दनाभिधानो राजसूनुः छत्राग्रनगर्यां जज्ञे इति तृतीयः, तत्र वर्षलक्षणं
सर्वदा मासक्षपणेन तपस्तप्त्वा दशमदेवलोके पुष्पोत्तरवरविजयपुण्डरीकाभिधाने विमाने देवोऽभवदिति चतुर्थस्ततो ब्राह्मणकुण्डग्रामे
ऋषभदत्तब्राह्मणस्य भार्याया देवानन्दाभिधानायाः कुक्षावुत्पन्न इति पञ्चमस्ततस्त्र्यशीतितमे दिवसे क्षत्रियकुण्डग्रामे नगरे सिद्धार्थ-
महाराजस्य त्रिशलाभिधानभार्यायाः कुक्षाविन्द्रवचनकारिणा हरिनैगमेषिनाम्ना देवेन संहृतस्तीर्थकरतया च जात इति षष्ठः, उक्तभव-

ग्रहणं हि विना नान्यन्नवग्रहणं षष्ठं श्रूयते भगवत इत्येतदेव षष्ठभवग्रहणतया व्याख्यातं, यस्माच्च भवग्रहणादिदं षष्ठं तदन्येतस्मात् षष्ठमेवेति सुप्रतीयते तीर्थकरभवग्रहणात्षष्ठे पोट्टिलभवग्रहणे इति ॥ १०००००० ॥ 'उसमे'त्यादि, 'उसमसिरिस्स'त्ति प्राकृतत्वेन श्रीऋषभ इति वाच्ये व्यत्ययेन निर्देशः कृतः, एका सागरोपमकोटाकोटी द्विचत्वारिंशता वर्षसहस्रैः किञ्चित्साधिकैरूनाऽप्यल्पत्वाद्वि-वक्षितेति ॥ १००००००००००००००० ॥ १३५ ॥ इह य एते अनन्तर सख्याक्रमसम्बन्धमात्रेण सम्बद्धा विविधा वस्तुविशेषा उक्तास्त एव विशिष्टतरसम्बन्धसम्बद्धा द्वादशाङ्गे प्ररूप्यन्त इति द्वादशाङ्गस्यैव स्वरूपमभिधित्सुराह—

दुवालसंगे गणिपिडगे प० तं०-आयारे सूयगडे ठाणे समवाए विवाहपन्नत्ती णायाधम्मकहाओ उवासगदसाओ अंतगडदसाओ अणुत्तरोववाइयदसाओ पण्हावागरणाइं विवागसुए दिट्ठिवाए। से किं तं आयारे? आयारे णं समणाणं निग्गंथाणं आयारगोयरविणयवेणइयट्ठाणगमणचंकमणपमाणजोगजुंजणभासासमितिगुत्ती-सेज्जोवहिभत्तपाणउग्गमउप्पायणएसणाविसोहिसुद्धासुद्धग्गहणवयणियमतवोवहाणसुप्पसत्थमाहिज्जइ, से समासओ पंचविहे प०, तं०-णाणायारे दसणायारे चरित्तायारे तवायारे विरियायारे, आयारस्स णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ पडिवत्तीओ संखेज्जा वेढा संखेज्जा सिलोगा संखेज्जाओ निज्जुत्तीओ, से णं अंगट्ठयाए पढमे अंगे दो सुयक्खंधा पणवीसं अज्झयणा पचासीइं उद्देसणकाला पचासीइं समुद्देसणकाला अट्ठारस पयसहस्साइं पयग्गेणं संखेज्जा अक्खरा अणंता गमा अणंता पज्जवा परित्ता तसा अणंता थावरा [illegible]

निबद्धा [illegible] आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निद-
एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निद-
सिज्जंति उवदंसिज्जंति । सेत्तं आयारे ॥ सूत्रं १३६ ॥

'दुवालसंगे' इत्यादि, अथत्रोत्तरोत्तरसंख्याक्रमसंबद्धार्थप्ररूपणमनन्तरमकारि, साम्प्रतं संख्यामात्रसंबद्धपदार्थप्ररूपणायोपक्रम्यते–'दुवालसंगे' इत्यादि, तत्र श्रुतपरमपुरुषस्याङ्गानि, द्वादशाङ्गानि–आचारादीनि यस्मिंतद्द्वादशाङ्गं, गुणानां गणोऽस्यास्तीति गणी–आचार्यस्तस्य पिटकमिव पिटकं–सर्वस्वभाजनं गणिपिटकं, अथवा गणिशब्दः परिच्छेदवचनः, तथा चोक्तम्––"आयारंमि अहीए जं नाओ होइ समणधम्मो उ । तम्हा आयारधरो भण्णइ पढमं गणिट्ठाणं ॥ १ ॥ [ आचारेऽधीते यत् ज्ञातो भवति श्रमणधर्मस्तु । तस्मादाचारधरो भण्यते प्रथमं गणिस्थानं ॥ १ ॥ ] परिच्छेदस्थानमित्यर्थः, ततश्च परिच्छेदसमूहो गणिपिटकं, अत्र चैवं पदघटना–यदेतद्गणिपिटकं तत् द्वादशाङ्गं प्रज्ञप्तं, तद्यथा–आचारः सूत्रकृत् इत्यादि । 'से किं त'मित्यादि, अथ किं तदाचारवस्तु ? यद्वा अथ कोऽयमाचारः ?, आचर्यत इति वा आचारः साध्वाचरितो ज्ञानाद्यासेवनविधिरिति भावार्थः, एतत्प्रतिपादको ग्रन्थोऽप्याचार एवोच्यते, 'आयारे णं'ति अनेनाचारेण करणभूतेन श्रमणानामाचारो व्याख्यायत इति योगः, अथवा आचारेऽधिकरणभूते णमिति वाक्यालङ्कारे 'श्रमणानां' तपःश्रीसमालिङ्गितानां 'निर्ग्रन्थानां' सबाह्याभ्यन्तरग्रन्थरहितानां, आह–श्रमणा निर्ग्रन्था एव भवन्तीति विशेषणं किमर्थमिति ?, उच्यते, शाक्यादिव्यवच्छेदार्थम्, उक्तं च––"निग्गंथसक्कतावसगेरुयआजीव पंचहा समण'त्ति [ निर्ग्रन्थशाक्यतापसगैरिकाजीविकाः पञ्चधा श्रमणाः ] तत्राचारो–ज्ञानाद्यनेकभेदभिन्नः गोचरो–भिक्षाग्रहणविधिलक्षणो विनयो–ज्ञानादिविनयः वैनयिकं तत्फलं कर्म्म-

शयादि स्थान-कायोत्सर्गोपवेशनशयनभेदात् त्रिरूपं गमन-विहारभूम्यादिषु गतिश्चङ्क्रमण-उपाश्रयान्तरे शरीरश्रमव्यपोहार्थमितस्ततः सञ्चरणं प्रमाणं-भक्तपानाभ्यवहारोपध्यादेर्मानं योगयोजनं-स्वाध्यायप्रत्युपेक्षणादिव्यापारेषु परेषां नियोजनं भाषा -संयतस्य भाषा सत्यासत्यामृषारूपाः समितयः-ईर्यासमित्याद्याः पञ्च गुप्तयो-मनोगुप्त्यादयस्तिस्रः तथा शय्या च-वसतिरुपधिश्च-वस्त्रादिको भक्तं च-अशनादि पानं च-उष्णोदकादीति द्वन्द्वः, तथा उद्गमोत्पादनैषणालक्षणानां दोषाणां विशुद्धिः -अभावः उद्गमोत्पादनैषणाविशुद्धिस्ततः शय्यादीनामुद्गमादिविशुद्धरूपा शुद्धानां तथाविधकारणेऽशुद्धानां च ग्रहणं शय्यादिग्रहणं, तथा व्रतानि-मूलगुणा नियमाः-उत्तर गुणास्तपउपधानं द्वादशविधं तपः, तत आचारश्च गोचरश्चेत्यादि, यावद्गुप्तयश्च शय्यादिग्रहणं च नियमाश्च तपउपधानं चेति समाहार द्वन्द्वस्ततस्तच्च प्रशस्तं चेति कर्म्मधारय, एतत्सर्वमाख्यायते-अभिधीयते, एतेषु आचारादिपदेषु यत्र क्वचिदन्यतरोपादाने अन्यतरस्य गतार्थस्याभिधानं तत्सर्वं तत्प्राधान्यख्यापनार्थमेवेत्यवसेयमिति । 'से समासओ' इत्यादि, सः आचारो यमधिकृत्य ग्रन्थस्याचार इति संज्ञा प्रवर्त्तते 'समासतः' संक्षेपतः पञ्चविधः प्रज्ञप्तः, तद्यथा-ज्ञानाचार इत्यादि, तत्र ज्ञानाचार - श्रुतज्ञानविषयः कालाध्ययनविनयाध्ययनादिरूपो व्यवहारोऽएवं 'दर्शनाचार' सम्यक्त्ववतां व्यवहारो निःशङ्कितादिरूपोऽएवं 'चारित्राचार' चारित्रिणां समित्यादिपालनात्मको व्यवहारः द्वादशविधतपोविशेषानुष्ठितिः वीर्याचारो ज्ञानादित्रयोमत्तेषु वीर्यस्यागोपनमिति, 'आयार'त्ति आचारग्रन्थस्य यमित्यलङ्कारे परित्ता' सङ्ख्येया आद्यन्तोपलब्धेर्नानन्ता भवन्तीत्यर्थ, काः? - वाचना'-सूत्रार्थप्रदानलक्षणाः, अवसर्पिण्युत्सर्पिणीकालं वा प्रतीत्य, 'परीत्ते'त्ति सङ्ख्येयान्यनुयोगद्वाराणि-उपक्रमादीनि, अध्ययना नामेव संख्येयत्वात् प्रज्ञापकवचनगोचरत्वाच्च 'संखेज्जाओ पडिवत्तीओ'त्ति द्रव्यादौ पदार्थाभ्युपगमा मतान्तराणीत्यर्थः, प्रतिपाद्यनि

(मायाभि) ग्रहविशेषा वा 'संखेज्जा वेढ'त्ति वेष्टकाः—छन्दोविशेषाः एकार्थप्रतिबद्धवचनसङ्कलिकेत्यन्ये, 'संखेज्जा सिलोग'त्ति श्लोकाः—अनुष्टुप्छन्दांसि 'संख्याताः, निर्युक्तयः' निर्युक्तानां—सूत्रेऽभिधेयतया व्यवस्थापितानामर्थानां—युक्तिः—घटना विशिष्टा योजना निर्युक्तयुक्ति, एतस्मिंश्च वाक्ये युक्तशब्दलोपान्निर्युक्तिरित्युच्यते, एताश्च निक्षेपनिर्युक्त्याद्याः संख्येया इति। 'से ण'मित्यादि स आचारो णमित्यलङ्कारे 'अङ्गार्थतया' अङ्गलक्षणवस्तुत्वेन प्रथममङ्गं स्थापनामधिकृत्य, रचनापेक्षया तु द्वादशमङ्गं, प्रथमं पूर्वं तस्य सर्वप्रवचनात् पूर्वं क्रियमाणत्वादिति, द्वौ श्रुतस्कन्धौ-अध्ययनसमुदायलक्षणौ, पञ्चविंशतिरध्ययनानि, तद्यथा—सत्थपरिण्णा १ लोगविजओ २ सीओसणिज्ज ३ संमत्तं ४। आवंति ५ धुय ६ विमोहो ७ महापरिण्णो ८ वहाणसुयं ९ ॥ १ ॥' इति प्रथमः श्रुतस्कन्धः, 'पिंडेसण १ सेज्जि २ रिया ३ भासज्जाया य ४ वत्थ ५ पाएसा ६। उग्गहपडिमा ७ सत्तसत्तिक्कया १४ भावण १५ विमुत्ती १६ ॥ २ ॥' इति द्वितीयः श्रुतस्कन्धः, एवमेतानि निशीथवर्जानि पञ्चविंशतिरध्ययनानि, तथा पञ्चाशीतिरुद्देशनकालाः, कथं?, उच्यते, अङ्गस्य श्रुतस्कन्धस्याध्ययनस्योद्देशकस्य चैतेषां चतुर्णामप्येक एवोद्देशनकालः, एवं शस्त्रपरिज्ञादिषु पञ्चविंशतावध्ययनेषु क्रमेण सप्त १ षट् २ चतु ४ श्चतुः ४ षट् ५ पञ्च ६ अष्ट ७ सप्त ८ चतु ९ रेकादश १० त्रि ११ त्रि १२ द्वि १३ द्वि १४ द्वि १५ द्वि १६ संख्या उद्देशनकालाः षोडशस्वध्ययनेषु शेषेषु नवसु नवैवेति, इह सङ्ग्रहगाथा—'सत्त य छ चउ चउरो, छ पञ्च अट्ठेव सत्त चउरो य। एक्कारा ति ति दो दो, दो दो सत्तेक्क एक्को य ॥ १ ॥' त्ति, एवं समुद्देशनकाला अपि भणितव्याः, अष्टादश पदसहस्राणि पदाग्रेण प्रज्ञप्तः, इह यत्रार्थोपलब्धिस्तत्पदं, ननु यदि द्वौ श्रुतस्कन्धौ पञ्चविंशतिरध्ययनान्यष्टादश पदसहस्राणि पदाग्रेण भवन्ति ततो यद्भणितं नवबंभचेरमइओ अट्ठारसपदसहस्सिओ वेउ"त्ति तत्कथं न विरुध्यते?, उच्यते, यत् द्वौ श्रुतस्कन्धावित्यादि तदाचारस्य प्रमाणं

भणित, यत्पुनरष्टादश पदसहस्राणि तब्रह्मचर्याध्ययनात्मकस्य प्रथमश्रुतस्कन्धस्य प्रमाणं, विचित्रार्थबद्धानि च सूत्राणि, गुरूपदेशतस्तेषामर्थोऽवसेय इति, संख्येयानि अक्षराणि, वेष्टकादीनां सङ्ख्येयत्वात्, अनन्ता गमाः, इह गमाः—अर्थगमा गृह्यन्ते अर्थपरिच्छेदा इत्यर्थः, ते चानन्ता, एकस्मादेव सूत्रात्तद्धर्मविशिष्टानन्तधर्मात्मकवस्तुप्रतिपत्तेः, अन्ये तु व्याचक्षते—अभिधानाभिधेयवशतो गमा भवन्ति, ते चानन्ता' पर्याया' स्वपरभेदभिन्ना अक्षरार्थपर्याया इत्यर्थः, परित्तास्त्रसा आख्यायन्त इति योग', त्रसन्तीति त्रसा'—द्वीन्द्रियादयस्ते च परित्ता नानन्ता, एवं रूपत्वादेव तेषां अनन्ताः स्थावरा वनस्पतिकायसहिताः, किंभूता एते ?—'सासया कडा निबद्धा निकाइय'त्ति शाश्वता' द्रव्यार्थतया अविच्छेदेन प्रवृत्ते' कृताः पर्यायार्थतया प्रतिसमयमन्यथात्वावाप्तेर्निबद्धाः—सूत्र एव ग्रथिता निकाचिता—निर्युक्तिसङ्ग्रहणिहेतूदाहरणादिभिः प्रतिष्ठिता जिनैः भगवता भावाः—पदार्था अन्येऽप्यजीवादयः 'आघविज्जंति'त्ति प्राकृतशैल्या आख्यायन्ते—सामान्यविशेषाभ्यां कथ्यन्त इत्यर्थः, प्रज्ञाप्यन्ते नामादिभेदाभिधानेन, प्ररूप्यन्ते नामादिस्वरूपकथनेन, यथा 'पज्जायाणभिधेय'मित्यादि दर्श्यन्ते उपमामात्रतः 'यथा गौर्गवयस्तथा' इत्यादि, निदर्श्यन्ते हेतुदृष्टान्तोपन्यासेन उपदर्श्यन्ते उपनयनिगमनाभ्यां सकलनयाभिप्रायतो वेति, सांप्रतमाचाराङ्गग्रहणफलप्रतिपादनायाह—'से एव'मित्यादि, स इत्याचाराङ्गग्राहको गृह्यते, 'एवं आय'त्ति अस्मिन् भावतः सम्यगधीते तत्स्वेवमात्मा भवति, तदुक्तक्रियापरिणामाव्यतिरेकात् स एव भवतीत्यर्थ, इदं च सूत्र पुस्तकेषु न दृष्ट नन्द्यां तु दृश्यते इतीह व्याख्यातमिति एवं क्रियासारमेव ज्ञानमिति स्थापनार्थं क्रियापरिणाममभिधायाधुना ज्ञानमधिकृत्य आह—'एवं नाय' त्ति इदमधीत्य एवं ज्ञाता भवति यथैवेहोक्तमिति, 'एवं विन्नाय'त्ति, विविधो विशिष्टो वा ज्ञाता विज्ञाता एवं विज्ञाता भवति, तन्त्रान्तरीयज्ञाता भवति—तन्त्रान्तरीयज्ञातृभ्यः प्रधानतर इत्यर्थः, 'एव'मित्यादि

निगमनवाक्यं, एवं–अनेन प्रकारेणाचारगोचरविनयाद्यभिधानरूपेण 'चरणकरणप्ररूपणता आख्यायत' इति चरणं–व्रतश्रमणधर्म्म-संयमाद्यनेकविधं करणं–पिण्डविशुद्धिसमित्याद्यनेकविधं तयोः प्ररुपणता प्ररूपणैव आख्यायते इत्यादि पूर्ववदिति, 'सेत्तं आयारे'त्ति तदिदमाचारवस्तु अथवा सोऽयमाचारो यः पूर्वं दृष्ट इति ॥ १ ॥

से किं तं सूअगडे ? सुअगडे णं ससमाया सूइज्जंति परसमया सूइज्जंति ससमयपरसमया सूइज्जंति जीवा सूइज्जंति अजीवा सूइज्जंति जीवाजीवा सूइज्जंति लोगो सूइज्जंति अलोगो सूइज्जंति लोगालोगो सूइज्जंति, सूअगडे णं जीवाजीवपुण्णपावासवसंवरनिज्जरणबंधमोक्खावसाणा पयत्था सुइज्जंति, समणाणं अचिरकाल-पव्वइयाणं कुसमयमोहमोहमइमोहियाणं संदेहजायसहजवुद्धिपरिणामसंमइयाणं पावकरमलिनमइगुणवि-सोहणत्थं असीअस्स किरियावाइयसयस्स चउरासीए अकिरियवाईणं सत्तट्ठीए अण्णाणियवाईणं बत्तीसाए वेणइयवाईणं तिण्हं तेवट्ठीणं अण्णदिट्ठियसयाणं वूहं किच्चा ससमए ठाविज्जंति णाणदिट्ठंतवयणणिस्सारं सुट्ठु दरिसयंता विविहवित्थराणुगमपरमसब्भावगुणविसिट्ठा मोक्खपहोयारगा उदारा अण्णातमंधकार-दुग्गेसु दीवभूआ सोवाणा चेव सिद्धिसुगइगिहुत्तमस्स णिक्खोभनिप्पकंपा सुत्तत्था, सुयगडस्स णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ पडियत्तीओ संखेज्जा वेढा संखेज्जा सिलोगा संखेज्जाओ निज्जुत्तीओ, से णं अङ्गट्ठयाए दोच्चे अंगे दो सुयक्खंधा तेवीसं अज्झयणा तेत्तीसं उद्देसणकाला तेत्तीसं समुद्देसणकाला छत्तीसं पदसहस्साइं पयग्गेणं प० संखेज्जा अक्खरा अणंता गमा अणंता पज्जवा

परित्ता तसा अणंता थावरा सासया कडा णिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं आया एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जति पण्णविज्जति परूविज्जति निदंसिज्जति उवदंसिज्जति, से तं सूअगडे २ ॥ सूत्र १३७ ॥

'से किं तं सूयगडे' 'सूच सूचायां' सूचनात् सूत्रं सूत्रेण कृतं सूत्रकृतमिति रूढ्योच्यते, 'सूयगडेणं'ति सूत्रकृतेन सूत्रकृते वा समये सूच्यन्ते,इत्यादि कण्ठ्यं, तथा सूत्रकृतेन जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षावसाना पदार्थाः सूच्यन्ते, तथा 'समणाणं'मित्यादि, अत्र, श्रमणानां मतिगुणविशोधनार्थं स्वसमयः स्थाप्यत इति वाक्यार्थः, तत्र श्रमणानां किंभूतानां ?—अचिरकालप्रव्रजितानां, चिरकालप्रव्रजिता हि निर्म्मलमतयो भवन्ति, अहर्निशं शास्त्रपरिचयाद्बहुश्रुतसंपर्काच्चेति, पुनः किंभूतानां ?—'कुसमयमोहमोहमइमोहियाणं'ति कुत्सितः समयः—सिद्धान्तो येषां ते कुसमयाः—कुतीर्थिकास्तेषां मोह'—पदार्थेष्वयथावबोधः कुसमयमोहस्तस्माद्यो मोहः—मोहमनोमूढता तेन मतिर्मोहिता—मूढतां नीता येषां ते कुसमयमोहमतिमोहिताः, अथवा कुसमया'—कुसिद्धान्तास्तेषां ओघ'—सङ्घो मकारस्तु प्राकृतत्वात् तस्माद्यो मोह—मोहमनोमूढता तेन मतिर्मोहिता येषां ते कुसमयौघमोहमतिमोहिता' अथवा कुसमयानां—कुतीर्थिकानां मोहो मोघो वा—शुभफलापेक्षया निष्फलो यो मोहस्तेन मतिर्मोहिता येषां ते कुसमयमोहमोहमतिमोहिताः कुसमयमोघमोहमतिमोहिता वा तेषां, तथा संदेहाः—वस्तुतत्त्वं प्रति संशया कुसमयमोहमतिमोहितानामिति विशेषणमाक्षिप्यात् कुसमयेभ्य सकाशात् (ते) जाता येषां ते सन्देहजाता', तथा सहजात्—स्वभावसम्पन्नात् 'न कुसमयश्रवणसम्पन्नाद्बुद्धिपरिणामात्—मतिस्वभावात् संशयो जातो येषां ते सहजबुद्धिपरिणामसंशयिताः सन्देहजाताश्च सहजबुद्धिपरिणाम

किमत आह–'पापकरो' विपर्ययसंशयात्मकत्वेन कुत्सितप्रवृत्तिनिबन्धनत्वाद्-
संशयिताश्च ये ते तथा तेषां श्रमणानामिति प्रक्रमः, किमत आह–'पापकरो' विपर्ययसंशयात्मकत्वेन कुत्सितप्रवृत्तिनिबन्धनत्वाद्-
शुभकर्म्महेतुरत एव च मलिनः–स्वरूपाच्छादनादनिर्म्मलो यो मतिगुणो–बुद्धिपर्यायस्तस्य विशोधनाय–निर्म्मलत्वाधानाय पापकर-
मलिनमतिगुणविशोधनार्थं । 'असीयस्स किरियावाइयसयस्स'त्ति अशीत्यधिकस्य क्रियावादिशतस्य व्यूहं कृत्वा स्वसमयः स्थाप्यत
इति योगः, एवं शेषेष्वपि पदेषु क्रिया योजनीयेति, तत्र न कर्त्तारं विना क्रिया संभवतीति तामात्मसमवायिनीं वदन्ति ये तच्छी-
लाश्च ते क्रियावादिनः, ते पुनरात्माद्यस्तित्वप्रतिपत्तिलक्षणा अमुनोपायेनाशीत्यधिकशतसंख्या विज्ञेयाः–जीवाजीवाश्रवबन्धसंवर-
निर्जरापुण्यापुण्यमोक्षाख्यान्नव पदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ, तयोरधो नित्यानित्यभेदौ,
तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्चन्यसनीयाः, पुनरित्थं विकल्पाः कर्त्तव्याः–अस्ति जीवः स्वतो नित्यः कालत इत्येको
विकल्पो, विकल्पार्थश्चायं–विद्यते खल्वात्मा स्वेन रूपेण नित्यश्च कालवादिनः, उक्तेनैवाभिलापेन द्वितीयो विकल्प ईश्वरकारणिकस्य,
तृतीयः आत्मवादिनश्चतुर्थो नियतिवादिनः पञ्चमः स्वभाववादिन, एवं स्वत इत्यपरित्यजता लब्धाः पञ्च विकल्पाः, परत इत्यनेनापि
पञ्च लभ्यन्ते, नित्यत्वापरित्यागेन चैते दश विकल्पाः, एवमनित्यत्वेनापि दशैव,एवं विंशतिर्जीवपदार्थेन लब्धाः, अजीवादिष्वप्यष्टा-
स्वेवमेव प्रतिपदं विंशतिर्विकल्पानामतो विंशतिर्नवगुणा शतमशीत्युत्तरं क्रियावादिनामिति, 'चउरासीए अकिरियवाईणं'ति एतेषां च
स्वरूपं यथा नन्द्यादिषु तथा वाच्यं, नवरमेतद्याख्याने पुण्यापुण्यवर्जाः सप्त पदार्थाः स्थाप्यन्ते, तदधः स्वतः परतश्चेति पदद्वयं,
तदधः कालादीनां षष्ठी यदृच्छा न्यस्यते, ततश्च नास्ति जीवः स्वतः कालत इत्येको विकल्पः, एवमेते चतुरशीतिर्भवन्ति । 'सत्तट्ठीए
अन्नाणियवाईणं'ति एतेऽपि तथैव, नवरं जीवादीन्नव पदार्थानुत्पत्तिदशमानुपरि व्यवस्थाप्याधः सप्त सदादयः स्थाप्याः, तद्यथा–

सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं सदवाच्यत्वमसदवाच्यत्वं सदसदवाच्यत्वमिति, तत्र को जानाति जीवस्य सत्त्वमित्येको विकल्पः, एवमसत्त्वमित्यादि, तत एते सप्त नवकास्त्रिषष्टिः, उत्पत्तेस्त्वाद्या एव चत्वारो वाच्याः, इत्येवं सप्तषष्टिरिति, तथा 'बत्तीसाए वेणइयवाईण'ति एते चैव-सुरनृपतियतिज्ञातिस्थविराधममातृपितृणां प्रत्येकं कायवाङ्मनोदानैश्चतुर्धा विनयः कार्य इत्यभ्युपगमवन्तो द्वात्रिंशदिति। एवमेतेषां चतुर्णां वादिप्रकाराणां मीलने त्रीणि त्रिषष्ट्यधिकानि अन्यदृष्टिशतानि भवन्त्यत उच्यते-'तिण्ह'मित्यादि, 'वूहं किच्चे'ति प्रतिक्षेपं कृत्वा 'ससमयो' जैनसिद्धान्तः स्थाप्यते, यत एवं सूत्रकृतेन विधीयते अतस्तत्सूत्रार्थयोः स्वरूपमाह-'नाणे'त्यादि, नाना-अनेकविधा बहुभिः प्रकारैरित्यर्थः, 'दिट्ठंतवयणनिस्सार'ति स्याद्वादिना पूर्वपक्षीकृतानां प्रावादिनां स्वपक्षस्थापनाय यानि दृष्टान्तवचनान्युपलक्षणत्वाद्धेतुवचनानि च तदपेक्षया निःसार-सारताशून्यं परेषां मतमिति गम्यते, सुष्ठु-पुनरप्रतिक्षेपणीयत्वेन दर्शयन्तौ-प्रकाशयन्तौ तथाविधमासौ सत्पदप्ररूपणाद्यनेकानुयोगद्वाराश्रितत्वेन विस्तारानुगमश्च-अनुगमनीयानेकजीवादितत्त्वानां विस्तरप्रतिपादनं विविधविस्तारानुगमः तथा परमसद्भाव-अत्यन्तसत्यता वस्तूनामैदम्पर्यमित्यर्थस्तावेव गुणौ ताभ्यां विशिष्टौ विविधविस्तारानुगमपरमसद्भावगुणविशिष्टौ 'मोक्खपहोयारग'त्ति मोक्षपथावतारकौ, सम्यग्दर्शनादिषु प्राणिनां प्रवर्तकावित्यर्थः, 'उदार'त्ति उदारौ सकलसूत्रार्थदोषरहितत्वेन निखिलतद्गुणसहितत्वेन च, तथाऽज्ञानमेव तमः-अन्धकारमात्यन्तिकान्धकारमथवा प्रकृष्टमज्ञानं महानतमं यद्वा घनं अज्ञानतमोऽन्धकारमज्ञानतमोऽन्धकारमज्ञानतमान्धकारं वा तेन ये दुर्गा-दुरधिगमास्ते तथा तेषु तत्त्वमार्गेष्विति गम्यते 'दीवभूय'त्ति प्रकाशकारित्वाद्दीपोपमौ 'सोवाणा चेव'त्ति सोपानानीव-उन्नतारोहणमार्गविशेषा इव सिद्धिसुगतिगृहोत्तमस्य-सिद्धिलक्षणा सुगतिः सिद्धिसुगतिरथवा सिद्धिश्च सुगतिश्च-सुकुलस्य सुमानुषत्वलक्षणा सिद्धिसुगती तल्लक्षणं गृहोत्तमं–

गृहोत्तमं वरप्रासादस्तस्य सिद्धिसुगतिगृहोत्तमस्यारोहण इति गम्यते 'निक्खोभनिप्पकंप'त्ति निःक्षोभौ वादिना क्षोभयितुं –चालयितुमशक्यत्वात् निष्प्रकम्पौ स्वरूपतोऽपीषद्व्यभिचारलक्षणकम्पाभावात्, कावित्याह ?–'सूत्रार्थौ' सूत्रं चार्थश्च निर्युक्तिभाष्यसङ्ग्रहणिवृत्तिचूर्णिपञ्जिकादिरूप इति सूत्रार्थौ, शेषं कण्ठ्यं यावत् 'सेत्तं सूयगडे'त्ति, नवरं त्रयस्त्रिंशदुद्देशनकालाः–'चउ ४ तिय ३ चउरो ४ दो २ दो २ एकारस चेव हूंति एक्कसरा। सत्तेव महज्झयणा एगसरा बीयसुयखंधे ॥ १ ॥' इत्यतो गाथातोऽवसेया इति ॥ २ ॥

से किं तं ठाणे ?, ठाणेणं ससमया ठाविज्जन्ति परसमया ठाविज्जंति ससमयपरसमया ठाविज्जंति जीवा ठाविज्जंति अजीवा ठाविज्जंति जीवाजीवा० लोगा० अलोगा० लोगालोगा ठाविज्जंति, ठाणेणं दव्वगुणखेत्तकालपज्जव पयत्थाणं–'सेला सलिला य समुद्दा सूरभवणविमाण आगर णदीओ। णिहिओ पुरिसज्जाया सरा य गोत्ता य जोइसंचाला ॥ १ ॥ एक्कविहवत्तव्वयं दुविह जाव दसविहवत्तव्वयं जीवाण पोग्गलाण य लोगट्ठाइं च णं परूवणया आघविज्जंति, ठाणस्स णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ पडिवत्तीओ संखेज्जा वेढा संखेज्जा सिलोगा संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए तइए अंगे एगे सुयक्खंध दस अज्झयणा एक्कवीसं उद्देसणकाला बावत्तरिं पयसहस्साइं पयग्गेणं प०, संखेज्जा अक्खरा अणता पज्जवा परित्ता तसा अणंता थावरा सासया कडा णिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं आया एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं ठाणे ३ सुत्रं १३८ ॥

'से किं तं ठाणे' इत्यादि, अथ किं तद् स्थानं ?, तिष्ठन्त्यस्मिन् प्रतिपाद्यतया जीवादय इति स्थानं, तथा चाह–'ठाणेण' मित्यादि, स्थानेन स्थाने वा जीवाः स्थाप्यन्ते यथावस्थितस्वरूपप्रतिपादनायेति हृदयं, शेषं प्रायो निगदसिद्धमेव, नवरं ठाणेण इत्यस्य पुनरुच्चारणं सामान्येनैव पूर्वोक्तस्यैव स्थापनीयविशेषप्रतिपादनाय वाक्यान्तरमिदमिति ज्ञापनार्थं, तत्र 'दव्वगुणखेत्तकालपज्जव' त्ति प्रथमाबहुवचनलोपाद् द्रव्यगुणक्षेत्रकालपर्यवाः पदार्थानां–जीवादीनां स्थानेन स्थाप्यन्ते इति प्रक्रमः, तत्र द्रव्यं द्रव्यार्थता यथा जीवास्तिकायोऽनन्तानि द्रव्याणि गुणः–स्वभावो यथोपयोगस्वभावो जीवः क्षेत्रं–यथा असङ्ख्येयप्रदेशावगाहनोऽसौ, कालो यथा अनाद्यपर्यवसितः, पर्यवाः–कालकृता अवस्था यथा नारकत्वादयो बालत्वादयो वेति, 'सेला' इत्यादि गाथाविक्षेपः, तत्र शैलाः–हिमवदादिपर्वताः स्थाप्यन्ते स्थानेनेति योगः सर्वत्र, सलिलाश्च गङ्गाद्या महानद्यः समुद्राः लवणादयः सूराः–आदित्या भवनानि–असुरादीनां विमानानि चन्द्रादीनां आकराः–सुवर्णाद्युत्पत्तिभूमयो नद्यः–सामान्या महीकोसीप्रभृतयो निधयः–चक्रवर्तिसम्बन्धिनो नैसर्पादयो नव 'पुरिसज्जाय' त्ति पुरुषप्रकारा उन्नतप्रणतादिभेदाः पाठान्तरेण 'पुस्सजोय' त्ति उपलक्षणत्वात् पुष्यादिनक्षत्राणां चन्द्रेण सह पश्चिमाग्रिमोभयप्रमर्दकादियोगाः स्वराश्च–षड्जादयः सप्त, गोत्राणि च–काश्यपादीनि एकोनपञ्चाशत्, 'जोइसंचालय' त्ति ज्योतिषां–तारकरूपाणां सञ्चलनानि 'तिहिं ठाणेहिं तारारूवे चलेज्जा' इत्यादिना सूत्रेण स्थाप्यन्ते स्थानेनेति प्रक्रमः । १ । तथा एकविधं च तद्वक्तव्यं च–तदभिधेयमित्येकविधवक्तव्यं प्रथमे अध्ययने स्थाप्यत इति योगः, एवं द्विविधवक्तव्यकं द्वितीयेऽध्ययने, एवं तृतीयादिषु यावद्दशविधवक्तव्यकं दशमेऽध्ययने, तथा जीवानां पुद्गलानां च परूपणताऽऽख्यायत इति योगः, तथा 'लोगट्ठाइं च णं' ति लोकस्थायिनां च–धर्माधर्मास्तिकायादीनां परूपणता–प्रज्ञापना, शेषमाचारसूत्रव्याख्यानवदवसेयं, नवरमेकविंशति–

रुद्देशनकालाः, कथं?, द्वितीयतृतीयचतुर्थेष्वध्ययनेषु चत्वारश्चत्वार उद्देशकाः पञ्चमे त्रय इत्येते पञ्चदश, शेषास्तु षट्, षण्णामध्यय-
नानां षडुद्देशनकालत्वादिति 'बावत्तरिं पदसहस्साइं'ति अष्टादशपदसहस्रमानादाचाराद्द्विगुणत्वात् सूत्रकृतस्य ततोऽपि द्विगुणत्वात्
स्थानस्येति ॥ ३ ॥

ससमयपरसमया सूइज्जंति जाव
से किं तं समवाए?, समवाएणं ससमया सूइज्जंति परसमया सूइज्जंति
लोगालोगा सूइज्जंति, समवाएणं एकाइयाणं एगट्ठाणं एगुत्तरियपरिवुड्ढीए दुवालसंगस्स य गणिपिडगस्स
पल्लवग्गे समणुगाइज्जइ ठाणगसयस्स बारसविहवित्थरस्स सुयणाणस्स जगजीवहियस्स भगवओ समासेणं
समोयारे आहिज्जति, तत्थ य णाणाविहप्पगारा जीवाजीवा य वण्णिया वित्थरेण अवरेवि अ बहुविहा विसेसा
नरगतिरियमणुअसुरगणाणं आहारुस्सासलेसाआवाससंखआययप्पमाण उववायचवणउग्गहणोवहिवेयणविहाणउवओगजोगइंदियकसाय विविहा य जीवजोणी विक्खंभुस्सेहपरिरयप्पमाणं विहिविसेसा य
मंदरादीणं महीधराणं कुलगरतित्थगरगणहराणं सम्मत्तभरहाहिवाण चक्कीणं चेव चक्कहरहलहराण य वा-
साण य निगमा य समाए एए अण्णे य एवमाइ एत्थ वित्थरेणं अत्था समाहिज्जंति, समवायस्सणं परित्ता
वायणा जाव से णं अङ्गट्ठयाए चउत्थे अंगे एगे अज्झयणे एगे सुयक्खंधे एगे उद्देसणकाले एगे चउयाले पद-
सहस्से पदग्गेणं प० संखेज्जाणि अक्खराणि जाव चरणकरणपरूवणया आघविज्जंति, सेत्तं समवाए ४ ॥
सूत्रं १३९ ॥

'से किं तं'मित्यादि, अथ कोऽसौ समवायः ?, ग्रन्थेषु प्राकृतत्वेन वकारलोपात् समाये इत्युक्तं, समवायनं समवाय' सम्यक् परिच्छेद इत्यर्थः, तद्धेतुश्च ग्रन्थोऽपि समवायः, तथा चाह-समवायेन समवाये वा स्वसमय सूच्यन्ते इत्यादि कण्ठ्यम्, तथा समवायेन समवाये वा 'एगाइयाणं'ति एकद्वित्रिचतुरादीनां शतान्तानां कोटाकोट्यन्तानां वा 'एगत्थाणं'ति एके च ते अर्थाश्चेत्येकार्थास्तेषां प्रयमर्थः एकशो केषाश्चित् न सर्वेषां निखिलानां चक्रमशश्चत्सादर्थां नामीवादीनां 'एगुत्तरिय'त्ति एक उत्तरो यस्यां सा एकोत्तरा मेव गत्कोत्तरिका, इह प्राकृतत्वात् ह्रस्वत्व, परिवुड्ढिय'त्ति परिवृद्धिमेति समनुगीयते समवायेनेति योगः, तत्र च परिवर्द्धनं संख्यायाः समवसेय, चन्द्रस्य चान्यत्र सम्यन्यादेकोत्तरिका अनेकोत्तरिका च, तत्र शत यावदेकोत्तरिका परतोऽनेकोत्तरिकेति, तथा द्वादश इस च गणिपिटकस्य 'पज्जवग्गो'त्ति पर्यवपरिमाणं अभिधेयादिवद्धर्मसंख्यान यथा 'परित्ता तसा' इत्यादि पर्यवसमूहस्य च 'पज्जव'त्ति निर्देशः प्राकृतत्वात् पर्यङ्कः पल्यङ्क इत्यादिवदिति, अथवा पल्लवा इव पल्लवाः-अवयवास्तत्परिमाण 'समणुगाइज्जति'त्ति-समनुगीयते प्रतिपाद्यते, पूर्वोक्तमेवार्थं मपश्चयन्नाह-'ठाणगसयस्स'त्ति स्थानकशतस्यैकादीनां शतान्तानां संख्यास्थानानां तद्विशेषितात्मादि पदार्थानामित्यर्थः, तथा द्वादशविधो विस्तरो यस्याचारादिभेदेन तत् द्वादशविधविस्तरं तस्य श्रुतज्ञानस्य-जिनप्रवचनस्य, किम्भूतस्य ?-जगज्जीवहितस्य, 'भगवतः' श्रुतातिशयपुक्तस्य 'समासेन' संक्षेपेण समाचारः-प्रतिस्थानं प्रत्यर्थं च विविधाभिधायकत्वलक्षणो व्यवहारः'आहिज्जइ'त्ति आख्यायते, अथ समाचाराभिधानानन्तरं यदुक्तं तदभिधातुमाह-'तत्थ यं'त्यादि, 'तत्थ य'त्ति तत्रैव समवाये इति योगः नानाविधः प्रकारो येषां ते नानाविधप्रकाराः तथाहि-एकेन्द्रियादिभेदेन पञ्चप्रकारा जीवाः ... ... प्रकारा ... तापर्यासादिभेदेन नानाविधः, 'जीवाजीवा य'त्ति जीवा अजीवाश्च वर्णिताः ... ...

जीवाजीवधर्म्मा वर्णिता इति योगः, तानेव लेशत आह–'नरय' त्यादि 'नरये'त्ति निवासनिवासिनामभेदोपचारान्नारकाः, ततश्च नारकतिर्यग्मनुजसुरगणानां सम्बन्धिन आहारादयः, तत्र आहारः–ओजआहारादिराभोगिकानाभोगिकस्वरूपोऽनेकधा उच्छ्वासोऽनुसमयादिकालभेदेनानेकधा लेश्या कृष्णादिका षोढा आवाससंख्या यथा नरकावासानां चतुरशीतिर्लक्षाणीत्यादिका आयतप्रमाणमावासानामेव संख्यातासंख्यातयोजनायामता उपलक्षणत्वादस्य विष्कम्भबाहल्यपरिधिमानान्यप्यत्र द्रष्टव्यानि, उपपात एकसमयेनैतावतामेतावता वा कालव्यवधानेनोत्पत्तिः च्यवनमेकसमयेनैतावतामियता वा कालव्यवधानेन मरणं, अवगाहना–शरीरप्रमाणमङ्गुलासंख्येयभागादि अवधिः–अङ्गुलासंख्येयभागक्षेत्रविषयादि वेदना–शुभाशुभस्वभावा विधानानि–भेदा यथा सप्तविधा नारका इत्यादि उपयोगः–आभिनिबोधिकादिर्द्वादशविधः योगः–पञ्चदशविधः इन्द्रियाणि–पञ्च द्रव्यादिभेदाद् विंशतिर्वा श्रोत्रादिच्छिद्राद्यपेक्षयाऽष्टौ वा कषायाः–क्रोधादयः आहारश्चोच्छ्वासश्चेत्यादिर्द्वन्द्वस्ततः कषायशब्दात्प्रथमाबहुवचनलोपो द्रष्टव्यः तथा त्रिविधा च जीवयोनिः–सचित्तादिकं जीवानामुत्पत्तिस्थानं, तथा विष्कम्भोत्सेधपरिरयप्रमाणं विधिविशेषाश्च मन्दरादीनां महीधराणामिति, तत्र विष्कम्भो–विस्तार उत्सेधः–उच्चत्वं परिरयः–परिधिः विधिविशेषा इति विधयो–भेदा यथा मन्दरा जम्बूद्वीपीयधातकीखण्डीयपौष्करार्द्धिकभेदात् त्रिधा तद्विशेषस्तु जम्बूद्वीपको लक्षोच्चः शेषास्तु पञ्चाशीतिसहस्रोच्छ्रिता इति, एवमन्येष्वपि भावनीयं, तथा कुलकरतीर्थकरगणधराणां तथ ।समस्तभरताधिपानां–चक्रिणां चैव तथा चक्रधरहलधराणां च विधिविशेषाः समाश्रीयन्त इति योगः, तथा वर्षाणां च–भरतादि क्षेत्राणां निर्गमाः-पूर्वेभ्यः उत्तरेषामाधिक्यानि 'समाए'त्ति समवाये चतुर्थे अङ्गे वर्णिता इति प्रक्रमः, अथैतन्निगमयन्नाह—एते चोक्ताः पदार्था अन्ये च घनतनुवातादयः पदार्थाः, एवमादय -एवंप्रकाराः अत्र समवाये विस्तरेणार्थाः समाश्रीयन्ते, अविपरीत-

म्नरूपगुणभूषिता बुद्ध्याऽङ्गीक्रियन्त इत्यर्थः, अथवा समस्यन्ते-कुप्ररूपणाभ्यः सम्यक्प्ररूपणायां क्षिप्यन्ते, शेषं निगदसिद्धमानिगमनादिति ॥ ५ ॥

से किं तं वियाहे ?, वियाहेणं ससमया विआहिज्जंति परसमया विआहिज्जंति ससमयपरसमया विआहिज्जंति जीवा विआहिज्जंति अजीवा विआहिज्जंति जीवाजीवा विआहिज्जंति लोगे विआहिज्जइ अलोए विआहिज्जइ लोगालोगे विआहिज्जइ, वियाहेणं नाणाविहसुरनरिंदरायरिसिविविहसंसइअपुच्छियाणं जिणेणं वित्थरेण भासियाणं दव्वगुणखेत्तकालपज्जवपदेसपरिणामजहत्थिभावअणुगमनिक्खेवणयप्पमाणसुनिउणोवक्कमविविहप्पकारपगडपयासियाणं लोगालोगपयासियाणं संसारसमुद्दरुंदउत्तरणसमत्थाणं सुरवइसंपूजियाणं भवियजणपयहिययाभिनंदियाणं तमरयविद्धंसणाणं सुदिट्ठदीवभूयईहामतिबुद्धिवद्धणाणं छत्तीससहस्समणूणयाणं वागरणाणं दंसणाओ सुयत्थबहुविहप्पगारा सीसहियत्था य गुणमहत्था, वियाहस्स णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ पडिवत्तीओ संखेज्जा वेढा संखेज्जा सिलोगा संखेज्जाओ निज्जुत्तीओ, से णं अंगट्ठयाए पंचमे अंगे एगे सुयक्खंधे एगे साइरेगे अज्झयणसते दस उद्देसगसहस्साइं दस समुद्देसगसहस्साइं छत्तीसं वागरणसहस्साइं चउरासीइं पयसहस्साइं पयग्गेणं पण्णत्ता, संखेज्जाइं अक्खराइं अणंता गमा अणंता पज्जवा परित्ता तसा अणंता थावरा सासया कडा णिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति निदंसिज्जंति उवदंसिज्जंति, से एवं आया

से एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं वियाहे ५ ॥ सूत्रं १४० ॥

'से किं तं वियाहे' इत्यादि, अथ केयं व्याख्या ?, व्याख्यायन्ते अर्था यस्यां सा व्याख्या, वियाहे इति च पुंल्लिङ्गनिर्देशः प्राकृतत्वात्, 'वियाहेणं'ति व्याख्यया व्याख्यायां वा ससमया इत्यादीनि नव पदानि सूत्रकृतवर्णके व्याख्यातत्वादिह कण्ठ्यानि, 'वियाहे ण'मित्यादि, नानाविधैः सुरैः नरेन्द्रैः राजर्षिभिश्च 'विविहसंसइय'त्ति विविधसंशयितैः—विविधसंशयवद्भिः पृष्टानि यानि तानि तथा तेषां नानाविधसुरनरेन्द्रराजऋषिविविधसंशयितपृष्टानां व्याकरणानां षट्त्रिंशत्सहस्राणां दर्शनात् श्रुतार्था व्याख्यायन्त इति पूर्वापरेण वाक्यसंबन्धः, पुनः किंभूतानां व्याकरणानां ?—'जिनेने'ति भगवता महावीरेण 'वित्थरेण भासियाणं' विस्तरेण भणितानामित्यर्थः, पुनः किंभूतानां ?-'दव्वे'त्यादि, द्रव्यगुणक्षेत्रकालपर्यवप्रदेशपरिणामावस्थायथास्तिभावाऽनुगमनिक्षेपनयप्रमाणसुनिपुणोपक्रमैर्विविधप्रकारैः प्रकटः प्रदर्शितो यैर्व्याकरणैस्तानि तथा तेषां, तत्र द्रव्याणि—धर्मास्तिकायादीनि गुणा—ज्ञानवर्णादयः क्षेत्रं—आकाशं कालः—समयादिः पर्यवाः—स्वपरभेदभिन्ना धर्म्माः अथवा कालकृता अवस्था नवपुराणादयः पर्यवाः प्रदेशा-निरंशावयवाः परिणामाः-अवस्थातोऽवस्थान्तरगमनानि यथा—येन प्रकारेणास्तिभाव अस्तित्वं-सत्ता यथाऽस्तिभावं अनुगमः— संहितादिव्याख्यानप्रकाररूपः उद्देशनिर्देशनिर्गमादिद्वारकलापात्मको वा निक्षेपो—नामस्थापनाद्रव्यभावैर्वस्तुनो न्यासः 'नयप्रमाणं' नया—नैगमादयः सप्त द्रव्यास्तिकपर्यायास्तिकभेदात् ज्ञाननयक्रियानयभेदान्निश्चयरव्यवहारभेदाद्वा द्वौ ते एव तावेव वा प्रमाणं—वस्तुतत्त्वपरिच्छेदनं नयप्रमाणं तथा सुनिपुणः सुसूक्ष्मो सुनिपुणो—वा सुष्ठु निश्चितगुण उपक्रमः—आनुपूर्व्यादिः, विविधप्रकारता चैषां भेदभणनत एवोपदर्शितेति, पुनः किंभूतानां व्याकरणानां ?, लोकालोकौ प्रकाशितौ येषु तानि तथा तेषां, तथा 'संसारसमुद्दरुंदउत्तरणसमत्थाणं'ति संसारसमुद्रस्य

रंदस-पिस्तीर्णस उत्तरणे-तारणे समर्थानामित्यर्थ' अत एव सुरपतिसपूजितानां-प्रच्छकनिर्णायकपूजनात् सूक्तत्वेन श्लाघितत्वाद्वा तथा 'भवियजणपयहिययाभिणंदियाण'ति भव्यजनानां-भव्यप्राणिनां-प्रजा लोको भव्यजनप्रजा भव्यजनपदो वा तस्यास्तस्य वा हृदयै -चित्तैरभिनन्दितानां-अनुमोदितानामिति विग्रह', तथा तमोरजसी-अज्ञानपातके विध्वंसयति-नाशयति यत्तमोरजोविध्वंसं तच तद् ज्ञानं च तमोरजोविध्वंसज्ञानं तेन सुष्ठु दृष्टानि-निर्णीतानि यानि तानि तथा अत एव तानि च तानि दीपभूतानि-चेति, भतएव तानि ईहामतिबुद्धिवर्द्धनानि चेति, तपां तमोरजोविध्वंसज्ञानसुदृष्टदीपभूतेहामतिबुद्धिवर्द्धनानां, तत्र ईहा वितर्को मतिः-अपायो निश्चय इत्यर्थः बुद्धिः-औत्पत्तिक्यादिचतुर्विधेति, अथवा तमोरजोविध्वसनानामिति पृथगेव पद पाठान्तरेण सुदृष्टदीपभूता-नामिति च, तथा 'छत्तीससहस्समणूणयाण'ति अन्यूनकानि षट्त्रिंशत् सहस्राणि येपां तानि तथा, इह मकारोऽन्यथा पदनिपातश्च प्राकृतत्वादनघ इति, 'वागरणाण'ति व्याक्रियन्ते-प्रश्नानन्तरमुत्तरतयाऽभिधीयन्ते निर्णायकेन यानि तानि व्याकरणानि तेपां दर्श-नात्-प्रकाशनादुपनिबन्धनादित्यर्थः अथवा तेपां दर्शना-उपदर्शका इत्यर्थः, कस्त्याह-'सुतत्थबहुविहप्पयारे'त्ति श्रुतविपया अर्थाः श्रु-तार्था अभिलाप्यार्थविशेपा इत्यर्थ' श्रुता वा आकर्णिता जिनसकाशे गणधरेण ये अर्थास्ते श्रुतार्था', अथवा श्रुतमिति सूत्रं अर्था-निर्यु-क्त्यादय इति श्रुतार्थास्ते च ते बहुविधप्रकाराश्चेति विग्रहः श्रुतार्थानां वा बहवो विधा -प्रकारा इति विग्रहः, किमर्थं ते व्याख्यायन्त इत्याह-'सिस्सहियत्थाय' शिष्याणां हित-अनर्थप्रतिघातार्थप्राप्तिरूप तदेवार्थ भाष्यमानत्वात्तस्य तस्मै इति, किंभूतास्ते अत आह-गुणहस्ता-गुण एतार्थप्राप्त्यादिलक्षणो हस्त इव हस्तः प्रधानावयवो येपां ते तथा (गुणमहत्या-गुणोत्सवार्था'), 'वियाहस्से' त्यादि तु निगमनान्तं सुगमिदं, नवरं व्रतमिहाध्ययनस्य संज्ञा, चतुरशीतिः पदसहस्राणि पदाग्रेणेति समवायापेक्षया द्विगुणताया इहानाश्रयण

दन्यथा तद्द्विगुणत्वे द्वे लक्षे अष्टाशीतिः सहस्राणि च भवन्तीति ॥ ५ ॥

से किं तं णायाधम्मकहाओ ?, णायाधम्मकहासु णं णायाणं णगराइं उज्जाणाइं चेइआइं वणखंडा रायाणो ५ अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइअइड्ढीविसेसा १० भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहातवोवहाणाइं परियागा १५ संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायायाइं २० पुणबोहिलाभा अंतकिरियाओ २२ य आघविज्जंति जाव नायाधम्मकहासु णं पव्वइयाणं विणयकरणजिणसामिसासणवरे संजमपईण्णपालणधिइमइववसायदुब्बलाणं १ तवनियमतवोवहाणरणदुद्धरभरभग्गयणिस्सहयणिसिट्ठाणं २ घोरपरीसहपराजियाणं सहपारद्धरुद्धसिद्धालयमग्गनिग्गयाणं ३ विसयसुहतुच्छआसावसदोसमुच्छियाणं ४ विराहियचरित्तनाणदंसणजइगुणविविहप्पयारनिस्सारसुन्नायणं ५ संसारअपारदुक्खदुग्गइभवविविहपरंपरापवंचा ६ धीराण य जियपरिसहकसायसेण्णधिइधणियसंजमउच्छाहनिच्छियाणं ७ आराहियनाणदंसणचरित्तजोगनिस्सल्लसुद्धसिद्धालयमग्गमभिमुहाणं सुरभवणविमाणसुक्खाइं अणोवमाइं भुत्तूण चिरं च भोगभोगाणि ताणि दिव्वाणि महरिहाणि ततो य कालक्कमचुयाण जह य पुणो लद्धसिद्धिमग्गाणं अंतकिरिया चलियाण य सदेवमाणुस्सधीरकरणकारणाणि बोधणअणुसासणाणि गुणदोसदरिसणाणि दिट्ठंते पच्चये य सोऊण लोगमुणिणो जहट्ठियसासणम्मि जरमरणनासणकरे आराहिअसंजमा य सुरलोगपडिनियत्ता ओवेन्ति जह सासयं सिवं सव्वदुक्ख-

मोक्ख, एए अण्णे य एवमाइअत्था वित्थरेण य, णायाधम्मकहासु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए छट्ठे अंगे दो सुअक्खधा एगूणवीसं अज्झयणा, ते समासओ दुविहा पण्णत्ता, तंजहा—चरिता य कप्पिया य, दस धम्मकहाणं वग्गा, तत्थ णं एगमेगाए धम्मकहाए पंच पंच अक्खाइयासयाइं एगमेगाए अक्खाइयाए पंच पंच उवक्खाइयासयाइं एगमेगाए उवक्खाइयाए पंच पंच अक्खाइयउवक्खाइयासयाइं एवमेव सपुव्वावरेणं अद्धुट्ठाओ अक्खाइयाकोडीओ भवतीति मक्खायाओ, एगूणतीसं उद्देसणकाला एगूणतीसं समुद्देसणकाला संखेज्जाइं पयसहस्साइं पयग्गेणं पण्णत्ता संखेज्जा अक्खरा जाव चरणकरणपरूवणया आघविज्जति, सेत्तं णायाधम्मकहाओ ६ ॥ सूत्र १४१ ॥

से किं त'मित्यादि, अथ कास्ता ज्ञाताधर्मकथा ?—ज्ञातानि—उदाहरणानि तत्प्रधाना धर्मकथा ज्ञाताधर्मकथा दीर्घत्वं संज्ञात्वात् अथवा प्रथमश्रुतस्कन्धो ज्ञाताभिधायकत्वात् ज्ञातानि द्वितीयस्तु तथैव धर्मकथाः, ततश्च ज्ञातानि च धर्मकथाश्च ज्ञाताधर्मकथा, तत्र प्रथमं व्युत्पत्त्यर्थं सूत्रकृतो दर्शयन्नाह—'नायाधम्मकहासु णं'मित्यादि, ज्ञातानां—उदाहरणभूतानां मेघकुमारादीनां नगरादीन्याख्यायन्ते, नगरादीनि 'आघविज्जंति' पदानि कथ्यानि च, नवरमुद्यानं—पत्रपुष्पफलच्छायोपगतवृक्षोपशोभितं विविधवेषोन्नतमानश्च बहुजनो यत्र भोजनार्थं यातीति, चैत्यं—व्यन्तरायतनं, वनखण्डोऽनेकजातीयैरुत्तमैर्वृक्षैरुपशोभित इति, 'आघविज्जंति'इह यावत्करणादन्यानि पञ्च पदानि दृश्यानि यावदुप सूत्रावयवो यथा 'नायाधम्मे'त्यादि, तत्र ज्ञाताधर्मकथासु णमित्यलङ्कारे प्रव्रजितानां, क्व ?—'विनयकरणजिनस्वामिशासनवरे कर्मविनयकरे जिननाथसम्बन्धिनि शेषप्रवचनापेक्षया प्रधाने प्रवचने इत्यर्थः, पाठान्तरेण 'समणाणं विणयकरणजिणसा-

सणंमि पवरे' किंभूतानां ?–संयमप्रतिज्ञा–संयमाभ्युपगमः सैव दुरधिगम्यत्वात् कातरनरक्षोभकत्वाद्गम्भीरत्वाच्च पातालमिव पातालं तत्र धृतमतिव्यवसाया दुर्लभा येषां ते तथा, पाठान्तरेण संयमप्रतिज्ञापालने ये धृतिमतिव्यवसायास्तेषु दुर्बला ये ते तथा तेषां, तत्र धृतिः–चित्तस्वास्थ्यं मतिः–बुद्धिर्व्यवसायः–अनुष्ठानोत्साह इति, तथा तपसि नियमः–अवश्यकरणं तपोनियमो नियन्त्रितं तपः स च तप उपधानं चानियन्त्रितं तप एव श्रुतोपचारः तपोनियमतपउपधाने ते एव रणश्च–कातरजनक्षोभकत्वात् सङ्ग्रामो 'दुद्धरभर'त्ति श्रमकारणत्वाद्दुर्द्धरभरश्च–दुर्वहलोहादिभारस्ताभ्या भग्ना इति (एव)–भग्नकाः–पराङ्मुखीभूतास्तथा 'निरसहगनिसट्ठाणं'ति निःसहा–नितरामशक्तास्त एव निःसहका निसृष्टाश्चनिसृष्टाङ्गा मुक्ताङ्गा ये ते तपोनियमतपउपधानरणदुर्धरभरभग्नकनिःसहकनिसृष्टाः, पाठान्तरेण निःसहकनिविष्टास्तेषां, इह च प्राकृतत्वेन ककारलोपसन्धिकरणाभ्यां भग्ना इत्यादौ दीर्घत्वमवसेयं तथा घोरपरीषहैः पराजिताश्चा-सहाश्च–असमर्थाः सन्तः प्रारब्धाश्च–परीषहैरेव वशीकर्त्तुं रुद्धाश्च मोक्षमार्गगमने ये ते घोरपरीषहपराजितासहमारब्धरुद्धाः अत एव सिद्धालयमार्गात्–ज्ञानादेर्निर्गताः–प्रतिपतिता ये ते तथा ते च ते चेति तेषां घोरपरीषहपराजितासहप्रारब्धरुद्धसिद्धालयमार्गनिर्गतानां, पाठान्तरेण घोरपरीषहपराजितानां तथा सह–युगपदेव परीषहैर्विशिष्टगुणश्रेणिमारोहन्तः प्ररुद्धरुद्धाः–अतिरुद्धाः सिद्धालयमार्गनिर्गताश्च ये ते तथा तेषां सहप्ररुद्धसिद्धालयमार्गनिर्गतानां, तथा विषयसुखेषु तुच्छेषु स्वरूपतः आशावशदोषेण–मनोरथपारतन्त्र्यवैगुण्येन मूर्च्छिता–अध्युपपन्ना ये ते तथा तेषां विषयसुखतुच्छाशावशदोषमूर्छितानां पाठान्तरेण विषयसुखे या महेच्छा कस्यांचिदवस्थायां या चावस्थान्तरे तुच्छाशा तयोर्वशः–पारतन्त्र्यं तल्लक्षणेन दोषेण मूर्च्छिता ये ते तथा तेषां विषयसुखमहेच्छातुच्छाशावशदोषमूर्च्छितानां, तथा विराधितानि चारित्रज्ञानदर्शनानि यैस्ते तथा, तथा 'यतिगुणेषु विविधप्रकारेषु मूलगुणोत्तरगुणरूपेषु निःसाराः- सारवर्जिताः

पलाशिमायगुणधान्या इत्यर्थः, तथा तैरेव यतिगुणैः शून्यकाः सर्वथा अभावाये ते तथेति, पदत्रयस्य च कर्म्मधारयोऽस्तेषां विराधितचारित्रज्ञानदर्शनयतिगुणविविधप्रकाराणि-सारशून्यकानां, किमत आह-संसारे-संसृतौ अपारदुःखा-अनन्तक्लेशा ये दुर्गतिषु-नारकतिर्यङ्मानुषकुदेवत्वरूपासु भवा भवग्रहणानि तेषां ये विविधाः परम्पराः पारम्पर्याणि तासां ये प्रपञ्चास्ते संसारापारदुर्गतिभवविविध-परम्परा-प्रपञ्चाः, आख्यायन्ते इति पूर्वेण योगः, तथा धीराणां च महासत्त्वानां, किंभूतानां ?-जितं परीषहकषायसैन्यं यैस्ते तथा, धृतेः-मनःस्वास्थ्यस्य धनिकाः स्वामिनो धृतिधनिकाः, तथा संयमे उत्साहो-वीर्यं निश्चितः-अवश्यंभावी येषां (ते) संयमोत्साहनिश्चितास्ततः पदत्रयस्य कर्मधारयोऽतस्तेषां जितपरीषहकषायसैन्यधृतिधनिकसंयमोत्साहनिश्चितानां, तथा आराधिता ज्ञानदर्शनचारित्रयोगा यैस्ते तथा निःशल्यो-मिथ्यादर्शनादिशल्यरहितः शुद्धश्च-अतीचारविमुक्तो यः सिद्धालयस्य-सिद्धेर्यो (?) मार्गस्तस्याभिमुखा ये ते तथा ततः पदत्रयस्य कर्म्मधारयः अतस्तेषामाराधितज्ञानदर्शनचारित्रयोगनिःशल्यशुद्धसिद्धालयमार्गाभिमुखानां, किमत आह-सुरभवने-देवतयोत्पादे यानि विमानसौख्यानि तानि सुरभवनविमानसौख्यानि अनुपमानि ज्ञाताधर्मकथास्वाख्यायन्त इति प्रक्रमः, इह च भवनशब्देन भवनपतिभवनानि न व्याख्यातान्यविराधितसंयमप्रव्रजितप्रस्तावात्, ते हि भवनपतिषु नोत्पद्यन्त इति, तथा भुक्त्वा चिरं च भोगभोगान्-मनोज्ञशब्दादीन् तांस्तथाविधान् दिव्यान्-स्वर्गभवान् 'महार्हान्' महतः आत्यन्तिकान् अर्हान्-प्रशस्ततया पूज्यानिति भावः, ततश्च-देवलोकात् कालक्रमच्युतानां यथा पुनर्लब्धसिद्धिमार्गाणां-मनुष्यत्वावाप्तज्ञानादीनामन्तक्रिया-मोक्षो भवति तथाऽऽख्यायन्त इति प्रक्रमः, तथा चलितानां च-कथञ्चित्कर्मवशतः परीषहादवधीरतया संयमप्रतिज्ञाया प्रभ्रष्टानां सह देवैर्मानुषाः सदेवमानुषास्तेषां सम्बन्धीनि धीरकरणे-धीरत्वोत्पादने यानि कारणानि-ज्ञातानि तानि सदेव-

मानुषधीरकरणकारणानि आख्यायन्त इति प्रक्रमः, इयमत्र भावना—यथा आर्यापाढो देवेन धीरीकृतो यथा वा मेघकुमारो भगवता शैलकाचार्यो वा पन्थकसाधुना धीरीकृतः एवं धीरकरणकारणानि तत्राख्यायंते, किंभूतानि तानीत्याह-'बोधनानुशासनानि' बोधनानि—मार्गभ्रष्टस्य मार्गस्थापनानि अनुशासनानि—दुःस्थस्य सुस्थतासम्पादनानि अथवा बोधनं-आमन्त्रणं तत्पूर्वकान्यनुशासनानि बोधनानुशासनानि, तथा गुणदोषदर्शनानि—संयमाराधनायां गुणा इतरत्र दोषा भवन्तीत्येवंदर्शनानि वाक्यान्याख्यायन्त इति योगः, तथा दृष्टान्तान् ज्ञातानि प्रत्ययांश्च बोधिकारणभूतानि वाक्यानि श्रुत्वा 'लोकमुनयः' शुकपरिव्राजकादयो 'यथा' येन प्रकारेण स्थिताः शासने जरामरणनाशनकरे जिनानां सम्बन्धिनीति भावः, तथाऽऽख्यायन्त इति योगः, तथा 'आराहितसञ्जम'त्ति एत एव लौकिकमुनयः संयमं वलिताश्च जिनप्रवचनं प्रपन्नाः पुनः परिपालितसंयमाश्च सुरलोकं गत्वा चैते सुरलोकप्रातिनिवृत्ता उपयान्ति यथा शाश्वतं—सदाभाविनं शिवं-अबाधाकं सर्वदुःखमोक्षं निर्वाणमित्यर्थः, एते चोक्तलक्षणाः अन्ये च 'एवमादिअत्थ'त्ति एवमादय आदि-शब्दस्य प्रकारार्थत्वादेवंप्रकारा अर्थाः—पदार्थाः, 'वित्थरेण य'त्ति विस्तरेण चशब्दाद् क्वचित्केचित् संक्षेपेण आख्यायन्त इति क्रिया-योगः 'नायाधम्मकहासु ण'मित्यादि कण्ठ्यमानिगमनात्, नवरं 'एकूणवीसमज्झयण'त्ति प्रथमश्रुतस्कन्धे एकोनविंशतिर्द्वितीये च दशेति, तथा 'दस धम्मकहाणं वग्गा' इत्यादौ भावनेयं—इहैकोनविंशतिर्ज्ञाताध्ययनानि दार्ष्टान्तिकार्थज्ञापनलक्षणज्ञातप्रतिपादकत्वात्तानि प्रथम-श्रुतस्कन्धे, द्वितीये त्वहिंसादिलक्षणधर्म्मस्य कथा धर्मकथा—आख्यानकानीत्युक्तं भवति, तासां च दश वर्गाः, वर्ग इति समूहः ततश्चार्थाधि-कारसमूहात्मकान्यध्ययनान्येव दश वर्गा द्रष्टव्याः, तत्र ज्ञातेष्वादिमानि दश यानि तानि ज्ञातान्येव, न तेष्वाख्यायिकादिसम्भवः, शेषाणि नव ज्ञातानि, तेषु पुनरेकैकस्मिन् पञ्च पञ्च चत्वारिंशदधिकानि आख्यायिकाशतानि, तत्राप्येकैकस्यामाख्यायिकायां पञ्च पञ्चोपा-

ख्यायिकाशतानि, तत्राप्येकैकस्यामुपाख्यायिकायां पञ्च पञ्चाख्यायिकोपाख्यायिकाशतानि, एवमेतानि संपिण्डितानि किं सञ्जात?— 'इगवीस कोडिसयं लक्खा पण्णासमेव बोद्धव्वा। १२१५०००००० । एवं ठिए समाणे अहिगयसुत्तस्स पत्थावो ॥ १ ॥' तद्यथा 'दस धम्मकहाणं वग्गा, तत्थ णं एगमेगाए धम्मकहाए पञ्च पञ्च उवक्खाइयासयाइं एगमेगाए अक्खाइयाए पञ्च पञ्च उवक्खाइया सयाइं एगमेगाए उवक्खाइयाए पञ्च पञ्च अक्खाइउवक्खाइयासयाइं'ति, एवमेतानि सम्पिण्डितानि किं संजात?—'पणवीसं कोडिसय १२५०००००००० एत्थ य समलक्खणाइया अम्हा। नवनायसम्बद्धा अक्खाइयमाइया तेणं ॥ १ ॥ ते सोहिज्जंति फुडं इमाउ रासीओ वेगलाए तु। पुणरुत्तवज्जियाणं पमाणमेयं विणिद्दिट्ठं ॥ २ ॥' शोधिते चैतस्मिन् सति अर्द्धचतुर्थां एव कथानककोट्यो भवन्तीति, अत एवाह—'एवमेव सपुव्वावरेणं'ति भणितप्रकारेण गुणनशोधने कृते सतीत्युक्तं भवति 'अद्धुट्ठाओ अक्खाइयाकोडीओ भवन्तीतिमक्खाओ'त्ति आख्यायिकाः—कथानकानि एता—एवमेतत्संख्या भवन्तीतिकृत्वा आख्याता भगवता महावीरेणेति तथा मख्यातानि 'पदसयसहस्साणी'ति किल पञ्च लक्षाणि षट्सप्ततिश्च सहस्राणि पदाग्रेण अथवा सूत्रालापकपदाग्रेण सख्यातान्येव पदसहस्राणि भवन्तीत्येवं सर्वत्र भावयितव्यमिति ॥ ६ ॥

से किं तं उवासगदसाओ?, उवासगदसासु णं उवासयाणं णगराइं उज्जाणाइं चेइआइं वणसंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइयइड्डिविसेसा उवासयाणं सीलव्वयवेरमणगुणपच्चक्खाणपोसहोववासपडिवज्जणयाओ सुयपरिग्गहा तवोवहाणा पडिमाओ उवसग्गा संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायाया पुणो बोहिलाभा अंतकिरियाओ

आघविज्जंति, उवासगदसासु णं उवासयाणं रिद्धिविसेसा परिसा वित्थरधम्मसवणाणि बोहिलाभअभिगमसम्मत्तविसुद्धया थिरत्तं मूलगुणउत्तरगुणाइयारा ठिईविसेसा य बहुविसेसा पडिमाभिग्गहग्गहणपालणा उवसग्गाहियासणा णिरुवसग्गा य तवा य विचित्ता सीलव्वयगुणवेरमणपच्चक्खाणपोसहोववासा अपच्छिममारणंतिया य संलेहणाझोसणाहिं अप्पाणं जह य भावइत्ता बहूणि भत्ताणि अणसणाए य छेअइत्ता उववण्णा कप्पवरविमाणुत्तमेसु जह अणुभवंति सुरवरविमाणवरपोंडरीएसु सोक्खाइं अणोवमाइं कमेण भुत्तूण उत्तमाइं तओ आउक्खएणं चुया समाणा जह जिणमयम्मि बोहिं लद्धूण य संजमुत्तमं तमरयोघविप्पमुक्का उवेंति जह अक्खयं सव्वदुक्खमोक्खं, एते अन्ने य एवमाइअत्था वित्थरेण य, उवासयदसासु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संगहणीओ संखेसंखेज्जाओ, से णं अंगट्ठयाए सत्तमे अंगे एगे सुयक्खंधे दस अज्झयणा दस उद्देसणकाला दस समुद्देसणकाला संखेज्जाइं पयस्सयसहस्साइं पयग्गेणं प० संखेज्जाइं अक्खराइं जाव एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं उवासगदसाओ ७ ॥ सूत्रं १४२ ॥

'से किं त'मित्यादि अथ कास्ता उपासकदशाः? उपासकाः श्रावकास्तद्गतक्रियाकलापप्रतिबद्धा दशाः-दशाध्ययनोपलक्षिता उपासकदशाः, तथा चाह—'उपासकदसासु णं' उपासकानां नगराणि उद्यानानि चैत्यानि वनखण्डा राजानः अम्बापितरौ समवसरणानि धर्माचार्या धर्मकथा ऐहलौकिकपारलौकिका ऋद्धिविशेषा उपासकानां च शीलव्रतविरमणगुणप्रत्याख्यानपौषधोपवासप्रतिपादनताः, तत्र शीलव्रतानि—अणुव्रतानि विरमणानि—रागादिविरतयः गुणा—गुणव्रतानि प्रत्याख्यानानि—नमस्कारसहितादीनि पौषधः—अष्टम्यादिपर्वदिनं

यत्रोपवसनमाहारशरीरसत्कारादित्यागः पौषधोपवासः, ततो द्वन्द्वे सत्येतेषां प्रतिपादनता–प्रतिपत्तय इति विग्रहः, श्रुतपरिग्रहास्तप उपधानानि प्रतीतानि 'पडिमाओ'त्ति एकादश उपासकप्रतिमाः कायोत्सर्गा वा उपसर्गा–देवादिकृतोपद्रवाः संलेखनाभक्तपानप्रत्याख्यानानि, पादपोपगमनानि देवलोकगमनानि सुकुलप्रत्यायातिः पुनर्बोधिलाभोऽन्तक्रिया चाख्यायन्ते पूर्वोक्तमेवेतो विशेषत आह–'उवासगे'त्यादि, तत्र ऋद्धिविशेषा–अनेककोटीसंख्यद्रव्यादिसम्पद्विशेषाः तथा परिषदः–परिवारविशेषा यथा मातापितृपुत्रादिका अभ्यन्तरपरिषत् दासीदासमित्रादिका बाह्यपरिषदिति, विस्तरधर्मश्रवणानि महावीरसमीपे, ततो बोधिलाभोऽभिगमः–सम्यक्त्वस्य विशुद्धता स्थिरत्वं–सम्यक्त्वशुद्धिरेव मूलगुणोत्तरगुणाः–अणुव्रतादयः अतिचारास्तेषामेव–वधबन्धादिव' खण्डनानि स्थितिविशेषाश्च–उपासकपर्यायस्य कालमानमेवाश्च बहुविशेषाः प्रतिमाः–प्रभूतभेदाः सम्यग्दर्शनादिप्रतिमा' अभिग्रहग्रहणानि तेषामेव च पालनानि उपसर्गाधिसहनानि निरुपसर्गश्च–उपसर्गाभाव इत्यर्थः, तपांसि च विचित्राणि शीलव्रताद्योऽनन्तरोक्तरूपा अपश्चिमा'–पश्चात्कालभाविन्य' अपरस्तत्वमङ्गलपरिहारार्थं मरणरूपे अन्ते भवा मारणान्तिक्यः आत्मनः–शरीरस्य जीवस्य च संलेखनाः तपसा रागादिजयेन च कृशीकरणानि आत्मसंलेखनाः तत्र–पदत्रयस्य कर्मधारयस्तासां, 'झोसणे'त्ति जोषणाः सेवना कारणानीत्यर्थः, ताभिरपश्चिममारणान्तिकात्मसंलेखनाजोषणाभिरात्मानं यथा च भावयित्वा बहूनि भक्तानि अनशनतया च-निर्भोजनतया छेदयित्वा-व्यवच्छेद्यित्वा व्यवच्छेद्य उपपन्ना मृत्वेति गम्यते, केषु ?–कल्पवरेषु यानि विमानानि उत्तमानि तेषु, तथा यथानुभवन्ति सुरवरविमानानि वरपुण्डरीकाणीव वरपुण्डरीकाणि यानि तेषु कानि ?–सौख्यान्यनुपमानि क्रमेण भुक्त्वोत्तमानि ततः आयुःक्षयेण च्युता सन्तो यथा जिनमते बोधिं लब्ध्वा इति शेषः लब्ध्वा च संयमोत्तमं–प्रधानं संयमं तमोरजओघविप्रमुक्ता अज्ञानकर्मप्रवाहविप्रमुक्ता उपयान्ति,

यथा, अक्षयं—अपुनरावृत्तिकं सर्वदुःखमोक्षं कर्मक्षयमित्यर्थः, तथोपासकदशास्वाख्यायन्त इति प्रक्रमः, एते चान्ये चेत्यादि प्राग्वन्नवरं 'संखेज्जाइं पयसयसहस्साइं पयग्गेणं'ति किलेकादश लक्षाणि द्विपञ्चाशच्च सहस्राणि पदानामिति ॥ ७ ॥

से किं तं अंतगडदसाओ ?, अंतगडदसासु णं अंतगडाणं णगराइं उज्जाणाइं चेइयाइं वणाइं राया अम्मापियरो समोसरणा धम्मायरिया धम्मकहा इहलोइयपरलोइअइड्ढिविसेसा भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहा तवोवहाणाइं पडिमाओ बहुविहाओ खमा अज्जवं मद्दवं च सोअं च सच्चसहियं सत्तरसविहो य संजमो उत्तमं च बंभं आकिंचणया तवो चियाओ समिइगुत्तीओ चेव तह अप्पमायजोगो सज्झायज्झाणेण य उत्तमाणं दोण्हंपि लक्खणाइं पत्ताण य संजमुत्तमं जियपरीसहाणं चउव्विहकम्मक्खयम्मि जह केवलस्स लंभो परियाओ जत्तिओ य जह पालिओ मुणिहिं पायोवगओ य जो जहिं जत्तियाणि भत्ताणि छेअइत्ता अंतगडो मुनिवरो तमरयोघविप्पमुक्को मोक्खसुहमणंतरं च पत्ता एए अन्ने य एवमाइअत्था वित्थारेणं परूवेई, अंतगडदसासु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ संगहणीओ, जाव से णं अंगट्ठयाए अट्ठमे अंगे एगे सुयक्खंधे दस अज्झयणा सत्त वग्गा दस उद्देसणकाला दस समुद्देसणकाला संखेज्जाइं पयसहस्साइं पयग्गेणं पण्णत्ता संखेज्जा अक्खरा जाव एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं अंतगडदसाओ ॥ ८ ॥ सूत्रं १४३ ॥

'से किं त'मित्यादि, अथ कास्ता अन्तकृद्दशाः ?, तत्रान्तो-विनाशः, स च कर्म्मणस्तत्फलस्य वा संसारस्य कृतो यैस्ते अन्त-

कृतास्ते च तीर्थकरादयस्तेषां दशा'-प्रथमवर्गे दशाध्ययनानीति तत्संख्यया अन्तकृतदशाः, तथा चाह-'अंतगडदसासु णं'मित्यादि कण्ठ्य, नवरं नगरादीनि चतुर्दश पदानि पञ्चमाङ्गवर्णकाभिहितान्येव, तथा 'पडिमाओ'त्ति द्वादश भिक्षुप्रतिमा मासिक्यादयो बहुविधा' यथा क्षमा मार्दवं आर्जवं च शौचं च सत्यसहित, तत्र शौच-परद्रव्यापहारमालिन्याभावलक्षणं सप्तदशविधश्च संयम उत्तम च ब्रह्म- मैथुनविरतिरूप 'आकिंचणिय'त्ति आकिञ्चन्यं तपस्त्याग इति आगमोक्तं दानं समितयो गुप्तयश्चैव तथा अप्रमादयोग स्वाध्यायध्यान योश्च उत्तमयोर्द्वयोरपि लक्षणानि-स्वरूपाणि, तत्र स्वाध्यायस्य लक्षण 'सज्झाएण पसत्थं झाण'मित्यादि, ध्यानलक्षण यथा-"अंतो मुहुत्तमित्त चित्तावत्थाणमेगवत्थुंमी"त्यादि, ध्याख्यायन्त इति सर्वत्र योगः, तथा प्राप्तानां च संयमोत्तमं-सर्वविरतिं जितपरीषहाणां चतुर्विधकर्मक्षये सति-घातिकर्मक्षये सति यथा केवलस्य ज्ञानादेर्लाभ' पर्याय -प्रव्रज्यालक्षणो यावांश्च-यावद्वर्षादिप्रमाणो 'यथा' येन तपोविशेषाभ्यसनादिना प्रकारेण पालितो मुनिभिः पादपोपगतश्च-पादपोपगमाभिधानमनशनं प्रतिपन्नो यो मुनिर्यत्र शत्रुञ्जय- पर्वतादौ यावन्ति च भक्तानि-भोजनानि छेदयित्वा, अनशनिना हि प्रतिदिनं भक्तद्वयच्छेदो भवति अन्तकृतो मुनिवरो जात इति तमोरजओघविप्रमुक्तः, एवं च सर्वेऽपि क्षेत्रकालादिविशेषिता मुनयो मोक्षसुखमनुत्तरं च प्राप्ता आख्यायन्त इति क्रियायोगः, एते अन्ये चेत्यादि प्राग्वत् नवरं 'दस अज्झयण'त्ति प्रथमवर्गापेक्षयैव घटन्ते, नन्द्यां तथैव व्याख्यातत्वात्, यच्चेह पठ्यते 'सत्त वग्ग' त्ति तत्प्रथमवर्गादन्यवर्गापेक्षया, यतोऽत्र सर्वेऽप्यष्ट वर्गाः, नन्द्यामपि तथा पठितत्वात्, तद्वृत्तिश्चेयं 'अट्ठ वग्ग'त्ति' अत्र वर्गः समूह', स चान्तकृतानामध्ययनानां वा, सर्वाणि चैकवर्गगतानि युगपदुद्दिश्यन्ते, ततो भणित 'अट्ठ उद्देसणकाला' इत्यादि, इह च दश उद्देशनकाला अधीयन्ते इति नास्याभिप्रायमवगच्छामः तथा संख्यातानि पदशतसहस्राणि पदाग्रेणेति, तानि च किल त्रयोविंशति

र्क्षाणि चत्वारि च सहस्राणीति ॥ ८ ॥

से किं तं अणुत्तरोववाइयदसाओ ?, अणुत्तरोववाइयदसासु णं अणुत्तरोववाइयाणं नगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोगपरलोगइड्ढिविसेसा भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहा तवोवहाणाइं परियागो पडिमाओ संलेहणाओ भत्तपाणपच्चक्खाणाइं पाओवगमणाइं अणुत्तरोववाओ सुकुलपच्चायाया पुणो बोहिलाभो, अंतकिरियाओ य आघविज्जंति, अणुत्तरोववाइयदसासु णं तित्थकरसमोसरणाइं परमंगल्लजगहियाणि जिणातिसेसा य बहुविसेसा जिणसीसाणं चेव समणगणपवरगंधहत्थीणं थिरजसाणं परिसहसेण्णरिउबलपमद्दणाणं तवदित्तचरित्तणाणसम्मत्तसारविविहप्पगारवित्थरपसत्थगुणसंजुयाणं अणगारमहरिसीणं अणगारगुणाण वण्णओ, उत्तमवरतवविसिट्ठणाणजोगजुत्ताणं जह य जगहियं भगवओ जारिसा इड्ढिविसेसा देवासुरमाणुसाणं परिसाणं पाउब्भावा य जिणसमीवं जह य उवासंति जिणवरं जह य परिकहंति धम्मं लोगगुरू अमरनरसुरगणाणं सोऊण य तस्स भासियं अवसेसकम्मविसयविरत्ता नरा जहा अब्भुवेंति धम्ममुरालं संजमं तवं चावि बहुविहप्पगारं जह बहूणि वासाणि अणुचरित्ता आराहियनाणदंसणचरित्तजोगा जिणवयणमणुगयमहियं भासित्ता जिणवराण हिययेणमणुण्णेत्ता जे य जहिं जत्तियाणि भत्ताणि छेअइत्ता लद्धूण य समाहिमुत्तमज्झाणजोगजुत्ता उववन्ना मुणिवरोत्तमा जह अणुत्तरेसु पावंति जह अणुत्तरं तत्थ विसयसोक्खं तओ य चुआ कमेण काहिंति

मजया जहा य अंतकिरियं एए अन्ने य एवमाइअत्था वित्थरेण, अणुत्तरोववाइयदसासु णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए नवमे अंगे एगे सुयक्खंधे दस अज्झयणा तिन्नि वग्गा दस उद्देसणकाला दस समुद्देसणकाला संखेज्जाइं पयसयसहस्साइं पयग्गेणं प०, संखेज्जाणि अक्खराणि जाव एवं चरणकरणपरूवणया आघविज्जति, सेत्तं अणुत्तरोववाइयदसाओ ॥ ९ ॥ सूत्र १४४

'से किं तं'मित्यादि, नास्मादुत्तरो विद्यते इत्यनुत्तर उपपतनमुपपातो जन्मेत्यर्थः अनुत्तरः—प्रधानः संसारे अन्यस्य तथाविध स्याभावादुपपातो येषां ते तथा त एवानुत्तरोपपातिकाः, तद्वक्तव्यताप्रतिबद्धा दशा—दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशा, तथा चाह—'अणुत्तरोववाइयदसासु णं'मित्यादि, तत्रानुत्तरोपपातिकानामिति—साधूनां नगरादीनि द्वाविंशतिः पदानि ज्ञाताधर्मकथा-धर्मकोक्तानि यथा तथा [ ज्ञेयानि ], एतेषामेव च प्रपञ्चं रचयन्नाह—अनुत्तरोपपातिकदशासु तीर्थकरसमवसरणानि, किम्भूतानि?—परममाङ्गल्यत्वेन जगद्धितानि परममाङ्गल्यजगद्धितानि जिनातिशेषाश्च—बहुविशेषा 'देहं विमलसुयंधं' मित्यादयश्चतुर्स्त्रिंशदधिकतरा वा तथा जिनशिष्याणां चैव—गणधरादीनां, किम्भूतानामत आह—श्रमणगणप्रवरगन्धहस्तिनां-श्रमणोत्तमानामित्यर्थः, तथा स्थिरयशसां तथा परीषहसैन्यमेव—परीषहवृन्दमेव रिपुबलं—परचक्रं तत्प्रमर्दनानां, तथा दवदव—दावाग्निरिव दीप्तानि—उज्ज्वलानि पाठान्तरेण तपोदीप्तानि यानि चारित्रज्ञानसम्यक्त्वानि तैः साराः—सफलाः विविधप्रकारविस्तारा—अनेकविधप्रपञ्चाः प्रशस्ताश्च ये क्षमादयो गुणास्तैः संयुतानां, क्वचिद्गुणध्वजानामिति पाठः, तथा अनगाराश्च ते महर्षयश्चेत्यनगारमहर्षयस्तेषामनगारगुणानां वर्णकः—श्लाघा आख्यायन्त इति योगः, पुनः किम्भूतानां जिनशिष्याणां?—उत्तमाश्च ते जात्यादिभिर्वरतपसश्च ते विशिष्टज्ञानयोग-

युक्ताश्चेत्यतस्तेषामुत्तमवरतपोविशिष्टज्ञानयोगयुक्तानां, किञ्चापरं ?, यथा च जगद्धितं भगवत इत्यत्र जिनस्य शासनमिति गम्यते, यादृशाश्च ऋद्धिविशेषा देवासुरमानुषाणां रत्नोज्ज्वललक्षयोजनमानविमानरचनं सामानिकाद्यनेकदेवदेवीकोटिसमवायनं मणिखण्डमण्डिततदण्डपटुप्रचलत्पताकिकाशतोपशोभितमहाध्वजपुरःप्रवर्त्तनं विविधातोद्यनादगगनाभोगपूरणं चैवमादिलक्षणाः प्रतिकल्पितगन्धसिन्धुरस्कन्धारोहणं चतुरङ्गसैन्यपरिवारणं छत्रचामरमहाध्वजादिमहाराजचिह्नप्रकाशनं च एवमादयश्च सम्पद्विशेषाः समवसरणगमनप्रवृत्तानां वैमानिकज्योतिष्काणां भवनपतिव्यन्तराणां राजादिमनुजानां च अथवा अनुत्तरोपपातिकसाधूनां ऋद्धिविशेषा देवादिसम्बन्धिनस्तादृशा आख्यायन्त इति क्रियायोगः, तथा पर्षदां च 'संजयवेमाणित्थी संजइ पुव्वेण पविसिउं वीर'मित्यादिनोक्तस्वरूपाणां प्रादुर्भावाश्च–आगमनानि, क्व ?–'जिणसमीवं'ति जिनसमीपे यथा–येन च प्रकारेण पञ्चविधाभिगमादिना उपासते—सेवन्ते राजादयो जिनवरं तथाऽऽख्यायत इति योगः, यथा च परिकथयति धर्म्मं लोकगुरुरिति–जिनवरोऽमरनरासुरगणानां, श्रुत्वा च तस्येति–जिनवरस्य भाषितं अवशेषाणि क्षीणप्रायाणि कर्म्माणि येषां ते तथा ते च ते विषयविरक्ताश्चेति अवशेषकर्मविषयविरक्ताः, के ?–नराः, किं ?–यथा अभ्युपयन्ति धर्म्ममुदारं, किंस्वरूपमत आह—संयमं तपश्चापि, किम्भूतमित्याह—बहुविधप्रकारं, तथा यथा बहूनि वर्षाणि 'अणुचरित्त'त्ति अनुचर्य आसेव्य संयमं तपश्चेति वर्त्तते, तत आराधितज्ञानदर्शनचारित्रयोगास्तथा जिणवयणमणुगयमहियभासिय'त्ति जिनवचनं–आचारादि अनुगतं–सम्बद्धं नार्द्धवितर्दमित्यर्थः महितं–पूजितमधिकं वा भाषितं यैरध्यापनादिना ते तथा, पाठान्तरं जिनवचनमनुगत्या–आनुकूल्येन सुष्ठु भाषितं यैस्ते जिनवचनानुगतिसुभाषिताः, तथा 'जिणवराण हियएणमणुण्णेत्त'त्ति इति षष्ठी द्वितीयार्थे तेन जिनवरान् हृदयेन–मनसा अनुनीय–प्राप्य ध्यात्वेति यावत्, ये च यत्र यावन्ति च भक्तानि छेदयित्वा लब्ध्वा च

समाधिभूतमें ध्यानयोगयुक्ता उपपन्ना मुनिवरोत्तमा यथा अनुत्तरेषु तथा आख्यायन्त इति प्रक्रमः, तथा प्राप्नुवन्ति यथाऽनुत्तरं 'सर्व'त्ति अनुत्तरविमानेषु विषयसुखं तथाऽऽख्यायन्ते इति योगः, 'तत्तो य चुया अनुत्तरविमानेभ्यश्च्युताः' क्रमेण करिष्यन्ति संयता यथा चान्तक्रियां ते तथाऽऽख्यायन्ते अनुत्तरोपपातिकदशास्विति प्रकृतं, एते चान्ये चेत्यादि पूर्ववत्, नवरं 'दस अज्झयणा तिन्नि वग्ग'त्ति, दशाध्ययनसमूहो वर्गो, वर्गे दशाध्ययनानि, वर्गश्च युगपदेवोद्दिश्यते इत्यतस्त्रय एवोद्देशनकाला भवन्तीत्येवमेव च नन्द्यामभिधीयन्ते, इह तु दृश्यन्ते दशेत्यत्राभिप्रायो न ज्ञायत इति, तथा संख्यातानि 'पदसयसहस्साइं पयग्गेणं'ति किल षट्चत्वारिंश-ल्लक्षाण्यष्टौ च सहस्राणि ॥ ९ ॥

से किं तं पण्हावागरणाणि?, पण्हावागरणेसु अट्ठुत्तरं पसिणसयं अट्ठुत्तरं अपसिणसयं अट्ठुत्तरं पसिणापसिणसयं विज्जाइसया नागसुवण्णेहिं सद्धिं दिव्वा संवाया आघविज्जंति, पण्हावागरणदसासु णं ससमयपरसमयपण्णवयपत्तेयबुद्धविविहत्थभासाभासियाणं अतिसयगुणउवसमणाणप्पगारआयरियभासियाणं वित्थरेणं वीरमहेसीहिं विविहवित्थरभासियाणं च जगहियाणं अद्दागंगुट्ठबाहुअसिमणिखीरआइच्चभासियाणं विविहमहापसिणविज्जामणपसिणविज्जादेवयपयोगपहाणगुणप्पगासियाणं सब्भूयविगुणप्पभावनरगणमइविम्हयकराणं अतिसयमईयकालसमयदमसमतित्थकरुत्तमस्स ठितिकरणकारणाणं दुरहिगमदुरवगाहस्स सव्वसव्वन्नुसम्मयस्स अबुहजणविबोहणकरस्स पच्चक्खयपच्चयकराणं पण्हाणं विविहगुणमहत्था जिणवरप्पणीया आघविज्जंति, पण्हावागरणेसु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ, स-

गहणीओ से णं अंगट्ठयाए दसमे अंगे एगे सयक्खंधे पणयालीसं उद्देसणकाला पणयालीसं समुद्देसणकाला संखेज्जाणि पयसयसहस्साणि पयग्गेणं प०, संखेज्जा अक्खरा अणंता गमा जाव चरणकरणपरूवणया आघविज्जंति, सेत्तं पण्हावागरणाइं ॥ १० ॥ ( सूत्रं १४५ )

'से किं त'मित्यादि, प्रश्नः-प्रतीतस्तन्निर्वचनं-व्याकरणं प्रश्नानां च व्याकरणानां च योगात्पश्नव्याकरणानि तेषु 'अट्ठुत्तरं पसिणसयं' तत्राङ्गुष्ठबाहुप्रश्नादिका मन्त्रविद्याः प्रश्ना या पुनर्विद्या मन्त्रविधिना जप्यमाना अपृष्टा एव शुभाशुभं कथयन्ति एताः अप्रश्नाः तथाऽङ्गुष्ठादिप्रश्नभावं तदभावं च प्रतीत्य या विद्याः शुभाशुभं कथयन्ति ताः प्रश्ना-प्रश्नाः 'विज्जाइसय'त्ति तथा अन्ये विद्यातिशयाः स्तम्भस्तोभवशीकरणविद्वेषीकरणोच्चाटनादयः नागसुपर्णैश्च सह भवनपतिविशेषैरुपलक्षणत्वाद्यक्षादिभिश्च सह साधकस्येति गम्यते दिव्याः-तात्त्विकाः संवादाः-शुभाशुभगताः संलापाः आख्यायन्ते, एतदेव प्रायः प्रपञ्चयन्नाह--'पण्हावागरणदसे'त्यादि, स्वसमयपरसमयप्रज्ञापका ये प्रत्येकबुद्धास्तैः करकण्ड्वादिसदृशैर्विविधार्थो यका भाषा गम्भीरेत्यर्थः तया भाषिताः-गदिताः स्वसमयपरसमयप्रज्ञापकप्रत्येकबुद्धविविधार्थभाषाभाषितास्तासां किम् ?-आदर्शाङ्गुष्ठादीनां सम्बन्धिनां प्रश्नानां विविधगुणमहार्थाः प्रश्नव्याकरणदशास्वाख्यायन्त इति योगः, पुनः किम्भूतानां प्रश्नानां ?-'अइसयगुणउवसमनाणप्पगारआयरियभासियाणं'ति अतिशयाश्च-आमर्षौषध्या दयो गुणाश्च-ज्ञानादय उपशमश्च-स्वपरभेदः एते नानाप्रकारा येषां ते तथा ते च ते आचार्याश्च तैर्भाषिता यास्तास्तथा तासां, कथं भाषितानामित्याह-'वित्थरेणं'ति विस्तरेण-महता वचनसन्दर्भेण तथा स्थिरमहर्षिभिः पाठान्तरे वीरमहर्षिभिः 'विविहवित्थरभा सियाणं च'त्ति विविधविस्तरेण भाषितानां च, चकारस्तृतीयप्रणायकभेदसमुच्चयार्थः, पुनः कथंभूतान प्रश्नानां ?-'जगहियाणं'ति

समाधिमुत्तमं ध्यानयोगयुक्ता उपपन्ना मुनिवरोत्तमा यथा अनुत्तरेषु तथा आख्यायन्त इति प्रक्रमः, तथा प्राप्नुवन्ति यथाऽनुत्तर 'तत्थ'त्ति अनुत्तरविमानेषु विषयसुखं तथाऽऽख्यायन्ते इति योगः, 'तत्तो य'त्ति अनुत्तरविमानेभ्यश्च्युताः क्रमेण करिष्यन्ति संयता यथा चान्तक्रियां ते तथाऽऽख्यायन्ते अनुत्तरोपपातिकदशास्विति प्रकृतं, एते चान्ये चेत्यादि पूर्ववत्, नवरं 'दस अज्झयणा तिण्णि वग्ग'त्ति, इहाध्ययनसमूहो वर्गो, वर्गे दशाध्ययनानि, वर्गश्च युगपदेवोद्दिश्यते इत्यतस्त्रय एवोद्देशनकाला भवन्तीत्येवमेव च नन्द्यामभिधीयन्ते, इह तु दृश्यन्ते दशेत्यत्राभिप्रायो न ज्ञायत इति, तथा संख्यातानि 'पदसयसहस्साइं पयग्गेणं'ति किल षट्चत्वारिंशल्लक्षाण्यष्टौ च सहस्राणि ॥ ९ ॥

से किं तं पण्हावागरणाणि?, पण्हावागरणेसु अट्ठुत्तरं पसिणसयं अट्ठुत्तरं अपसिणसयं अट्ठुत्तरं पसिणापसिणसयं विज्जाइसया नागसुवण्णेहिं सद्धिं दिव्वा संवाया आघविज्जंति, पण्हावागरणदसासु णं ससमयपरसमयपण्णवयपत्तेयबुद्धविविहत्थभासाभासियाणं अइसयगुणउवसमणाणप्पगारआयरियभासियाणं वित्थरेणं वीरमहेसीहिं विविहवित्थरभासियाणं च जगहियाणं अद्दागंगुट्ठबाहुअसिमणिखोमआइच्चभासियाणं विविहमहापसिणविज्जामणपसिणविज्जादेवयपयोगपहाणगुणप्पगासियाणं सब्भूयदुगुणप्पभावनरगणमइविम्हयकराणं अईसयमईयकालसमयदमसमतित्थकरुत्तमस्स ठिइकरणकारणाणं दुरहिगमदुरवगाहस्स सव्वसव्वन्नुसम्मअस्स अबुहजणविबोहणकरस्स पच्चक्खयपच्चयकराणं पण्हाणं विविहगुणमहत्था जिणवरप्पणीया आघविज्जंति, पण्हावागरणेसु णं परित्ता वायणा संखेज्जा अणुओगदारा जाव संखेज्जाओ, स

प्रत्यक्षमिवेदमित्येवं प्रत्ययः प्रत्यक्षकप्रत्ययस्तत्करणशीला:-प्रत्यक्षकप्रत्ययकार्यः प्रत्यक्षताप्रत्ययकार्यो वा तासां प्रत्यक्षकप्रत्ययकारीणां वा, कासामित्याह--प्रश्नानां-प्रश्नविद्यानां उपलक्षणत्वादन्यासां च यासामष्टोत्तरशतात्पादौ प्रतिपादितानि, विविधगुणा-बंधप्रभास्ते च ते महार्थाश्च-महान्तोऽभिधेया:-पदार्थाः शुभाशुभसूचनादयो विविधगुणमहार्थाः, किंभूता ?-जिनवरप्रणीताः, याह--'आघविज्जंति'त्ति आख्यायन्ते शेषं पूर्ववत्, नवरं 'पणयालीस'मित्यादि यद्यपीहाध्ययनानां दशत्वाद्दशैवोद्देशनकाला त तथापि वाचनान्तरापेक्षया पञ्चचत्वारिंशदिति सम्भाव्यते इति 'पणयालीस'मित्याद्यविरुद्धमिति, 'संखेज्जाणि पयसयसहस्साणि पयग्गेण'ति तानि च किल द्विनवतिलक्षाणि षोडश च सहस्राणीति ॥ १० ॥

से किं तं विवागसुयं?, विवागसुए णं सुकडदुक्कडाणं कम्माणं फलविवागे आघविज्जंति, से समासओ दुविहे पण्णत्ते, तंजहा दुहविवागे चेव, सुहविवागे चेव तत्थ णं दस दुहविवागाणि दस सुहविवागाणि, से किं तं दुहविवागाणि?, दुहविवागेसु णं दुहविवागाणं नगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ नगरगमणाइं संसारपबंधे दुहपरंपराओ य आघविज्जंति, सेत्तं दुहविवागाणि। से किं तं सुहविवागाणि?, सुहविवागेसु सुहविवागाणं णगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइयइड्ढिविसेसा भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहा तवोवहाणाइं परियागा पडिमाओ संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायाया पुणबोहिलाहा अंतकिरियाओ य आघविज्जंति, दुहविवागेसु णं पाणाइवायअलियवयणचो

जगद्धितानां पुरुषार्थोपयोगित्वात्, किंसम्बन्धिनीनामित्याह–'अद्दाग'त्ति आदर्शश्चाङ्गुष्ठश्च बाहू च असिश्च मणिश्च क्षौमं च–वस्त्रं आदित्यश्चेति द्वन्द्वस्ते आदिर्येषां कुड्यशङ्खघण्टादीनां ते तथा तेषां सम्बन्धिनीनां, प्रश्नविद्याभिरादर्शकादीनामावेशनात्, किंभूतानां प्रश्नानामत आह–विविधमहाप्रश्नविद्याश्च–वाचैव प्रश्ने सत्युत्तरदायिन्यः मनःप्रश्नविद्याश्च मनःप्रश्नितार्थोत्तरदायिन्यस्तासां दैवतानि तदधिष्ठातृदेवतास्तेषां प्रयोगप्राधान्येन–तद्व्यापारप्रधान्यतया गुण–विविधार्थसंवादनलक्षणं प्रकाशयन्ति–लोके व्यञ्जयन्ति यास्ता विविधमहाप्रश्नविद्यामनःप्रश्नविद्यादैवतप्रयोगप्राधान्यगुणप्रकाशिकास्तासां, पुनः किंभूतानां प्रश्नानां ?–सद्भूतेन तात्त्विकेन द्विगुणेन पुनः उपलक्षणत्वाद्बहुलौकिकप्रश्नविद्याप्रभावापेक्षया बहुगुणेन पाठान्तरे विविधगुणेन प्रभावेन–माहात्म्येन नरगणमतेः मनुजसमुदय-बुद्धेर्विस्मयकारिण्यः–चमत्कारहेतवो या प्रश्नास्ताः सद्भूतद्विगुणप्रभावनरगणमतिविस्मयकार्यस्तासां, पुनः किंभूतानां तासां ?–'अतिसयमतीतकालसमये'त्ति अतिशयेन योऽतीतः कालः समयः स तथा तत्र, अतिव्यवहिते काले इत्यर्थः, दम'–शमस्तत्प्रधानः तीर्थकराणां–दर्शनान्तरशास्तॄणामुत्तमो यः स तथा भगवान्–जिनस्तस्य दमतीर्थकरोत्तमस्य स्थितिकरण–स्थापन, आसीत् अतीतकाले सातिशयप्रधानादिगुणयुक्तः सकलप्रणायकशिरःशेखरकल्पः पुरुषविशेषः एवंविधप्रश्नानामन्यथानुपपत्तेरित्येवंरूप, तस्य प्रतिष्ठापनस्य कारणानि–हेतवो यास्तास्तथा तासां, पुनस्ता एव विशिनष्टि–दुरभिगम–दुःखबोधं गम्भीरं सूक्ष्मार्थत्वेन दुरवगाहं च–दुःखाध्येयं यतश्चैवं तस्मात् सर्वेषां सर्वज्ञानां सम्मतं–इष्टं सर्वसर्वज्ञसम्मतं अथवा सर्वं च तत्सर्वज्ञसम्मतं चेति सर्वसर्वज्ञसम्मतं प्रवचनतत्त्वमित्यर्थः, तस्य अबुधजनविबोधनकरस्य एकान्तहितस्येति भावः 'पच्चक्खयपच्चयकराण'त्ति प्रत्यक्षेण–ज्ञानेन साक्षादित्यर्थो यः प्रत्यय–मर्यादितस्यनिधानमतीन्द्रियार्थोपदर्शनाव्यभिचारि चेदं जिनप्रवचनमित्येवरूपा प्रतिपत्तिः अथवा प्रत्यक्षेणैवानेनार्थाः प्रतीयन्ते इति

प्रत्यक्षमिवेदमित्येवं प्रत्ययः प्रत्यक्षकप्रत्ययस्तत्करणशीलाः–प्रत्यक्षकप्रत्ययकार्यः प्रत्यक्षताप्रत्ययकार्यो वा तासां प्रत्यक्षकप्रत्ययकारीणां वा, कासामित्याह—प्रश्नानां–प्रश्नविद्यानां उपलक्षणत्वादन्यासां च यासामष्टोत्तरशतात्पादौ प्रतिपादितानि, विविधगुणा–बहुविधप्रभास्ते च ते महार्थाश्च–महान्तोऽभिधेयाः–पदार्थाः शुभाशुभसूचनादयो विविधगुणमहार्थाः, किंभूता ?–जिनवरप्रणीताः, किमित्याह—'आघविज्जंति'त्ति आख्यायन्ते शेषं पूर्ववत्, नवरं 'पणयालीस'मित्यादि यद्यपीहाध्ययनानां दशत्वाद्दशैवोद्देशनकाला भवन्ति तथापि वाचनान्तरापेक्षया पञ्चचत्वारिंशदिति सम्भाव्यते इति 'पणयालीस'मित्याद्यविरुद्धमिति, 'संखेज्जाणि पयसयसहस्साणि पयग्गेण'ति तानि च किल द्विनवतिलक्षाणि षोडश च सहस्राणीति ॥ १० ॥

से किं तं विवागसुयं?, विवागसुए णं सुकडदुक्कडाणं कम्माणं फलविवागे आघविज्जंति, से समासओ दुविहे पण्णत्ते, तंजहा दुहविवागे चेव, सुहविवागे चेव तत्थ णं दस दुहविवागाणि दस सुहविवागाणि, से किं तं दुहविवागाणि?, दुहविवागेसु णं दुहविवागाणं नगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ नगरगमणाइं संसारपवंधे दुहपरंपराओ य आघविज्जंति, सेत्तं दुहविवागाणि। से किं तं सुहविवागाणि?, सुहविवागेसु सुहविवागाणं णगराइं उज्जाणाइं चेइयाइं वणखंडा रायाणो अम्मापियरो समोसरणाइं धम्मायरिया धम्मकहाओ इहलोइयपरलोइयइड्ढिविसेसा भोगपरिच्चाया पव्वज्जाओ सुयपरिग्गहा तवोवहाणाइं परियागा पडिमाओ संलेहणाओ भत्तपच्चक्खाणाइं पाओवगमणाइं देवलोगगमणाइं सुकुलपच्चायाया पुणबोहिलाहा अंतकिरियाओ य आघविज्जंति, दुहविवागेसु णं पाणाइवायअलियवयणचो

रिकरणपरदारमेहुणससग्गाए महतिव्वकसायइंदियप्पमायपावप्पओयअसुहज्झवसाणसंचियाणं कम्माणं पावगाणं पावअणुभागफलविवागा णिरयगतितिरिक्खजोणिबहुविहवसणसयपरंपरापबद्धाणं मणुयत्तेवि आगयाणं जहा पावकम्मसेसेण पावगा होन्ति फलविवागा वहवसणविणासनासाकन्नुट्ठंगुट्ठकरचरणनहच्छेयणजिब्भछेअणअंजणकडग्गिदाहगयचलणमलणफालणउल्लंबणसूललयालउडलिट्ठिभंजणतउसीसगतत्ततेल्लकलकलअहिसिंचणकुंभिपागकंपणथिरबंधणवेहवज्झकत्तणपतिभयकरकरपल्लीवणादिदारुणाणि दुक्खाणि अणोवमाणि बहुविविहपरंपराणुबद्धा ण मुच्चंति पावकम्मवल्लीए, अवेयइत्ता हु णत्थि मोक्खो तवेण धितिधणियबद्धकच्छेण सोहणं तस्स वावि हुज्जा, एत्तो य सुहविवागेसु णं सीलसंजमणियमगुणतवोवहाणेसु साहूसु सुविहिएसु अणुकंपासयप्पओगतिकालमइविसुद्धभत्तपाणाइं पययमणसा हियसुहनीसेसतिव्वपरिणामनिच्छियमई पयच्छिऊण पयोगसुद्धाइं जह य निव्वत्तेंति उ बोहिलाभं जह य परित्तीकरेंति नरनरयतिरियसुरगमणविपुलपरियट्टअरतिभयविसायसोगमिच्छत्तसेलसंकडं अन्नाणतमंधकारचिक्खिल्लसुदुत्तारं जरमरणजोणिसंखुभियचक्कवालं सोलसकसायसावयपयंडचंडं आणाइअं अणवदग्गं संसारसागरमिणं जह य णिबंधंति आउगं सुरगणेसु जह य अणुभवंति सुरगणविमाणसोक्खाणि अणोवमाणि ततो य कालंतरे चुयाणं इहेव नरलोगमागयाणं आउवपुपुण्णरूवजातिकुलजम्मआरोग्गबुद्धिमेहाविसेसा मित्तजणसयणधणधण्णविभवसमिद्धिसारसमुदयविसेसा बहुविहकामभोगुब्भवाणं सोक्खाणं सुहविवागोत्तमेसु, अणुवरय

परंपराणुबद्धा असुभाणं सुभाणं चेव कम्माणं भासिआ बहुविहा विवागा विवागसुयम्मि भगवया जिणवरेण संवेगकारणत्था अन्नेवि य एवमाइया बहुविहा वित्थरेणं अत्थपरूवणया आघविज्जंति, विवागसुअस्स णं परित्ता वायणा संखेज्ञा अणुओगदारा जाव संखेज्ञाओ संगहणीओ, से णं अंगट्ठयाए एक्कारसमे अंगे वीसं अज्झयणा वीसं उद्देसणकाला वीसं समुद्देसणकाला, संखेज्ञाइं पयसयसहस्साइं पयग्गेणं प०, संखेज्ञाणि अक्खराणि अणंता गमा अणंता पज्जवा जाव एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं विवागसुए ॥ ११ ॥ [ सूत्रं १४६ ]

'से किं त'मित्यादि, विपचनं विपाकः—शुभाशुभकर्म्मपरिणामस्तत्प्रतिपादकं श्रुतं विपाकश्रुतं 'विवागसुए ण'मित्यादि कण्ठ्यं, नवरं 'फलविपाके'ति फलरूपो विपाकः फलविपाक. तथा 'नगरगमणाइं'ति भगवतो गौतमस्य भिक्षाद्यर्थं नगरप्रवेशनानीति, एतदेव पूर्वोक्तं प्रपञ्चयन्नाह—'दुहविवागेसु ण'मित्यादि, तत्र प्राणातिपातालीकवचनचौर्यकरणपरदारमैथुनैः सह 'ससंगयाए'त्ति या ससङ्गता सपरिग्रहता तया संचितानां कर्म्मणामिति योगः,महातीव्रकषायेन्द्रियप्रमादपापप्रयोगाशुभाध्यवसायसञ्चितानां कर्मणां पापकानां पापानुभागा अशुभरसा ये फलविपाका—विपाकोदयास्ते तथा ते आख्यायन्त इति योगः,केषामित्याह—निरयगतौ तिर्यग्योनौ च ये बहुविधव्यसनशतपरम्पराभिः प्रबद्धाः ते तथा तेषां, जीवानामिति गम्यते, तथा 'मणुयत्ते'त्ति मनुजत्वेऽप्यागतानां यथा पापकर्मशेषेण पापका भवन्ति फलविपाका अशुभा विपाकोदया इत्यर्थः, तथा आख्यायन्ते इति प्रकृतं, तथाहि—वधो—यष्ट्यादिताडनं वृषणविनाशो—वर्द्धितककरणं तथा नासायाश्च कर्णयोश्च ओष्ठस्य चाङ्गुष्ठानां च करयोश्च चरणयोश्च नखानां च यच्छेदनं तत्तथा जिह्वाछेदनं 'अंजण'त्ति

अञ्जनं तप्ताय'श्लाकया नेत्रयोः भ्रक्षण वा देहस्य क्षारतैलादिना 'कडमिदाहणं'ति कटानां—विदलवंशादिमयानामभिः कटाग्निस्तेन दाहनं कटाग्निदाहनं कटेन परिवेष्टितस्य भापनमित्यर्थः, तथा गजचलनमलनं फालनं—विदारणं उल्लम्बनं—वृक्षशाखादावुल्लम्बनं तथा शूलेन लतया लकुटेन यष्ट्या च भञ्जनं गात्राणां तथा त्रपुणा—धातुविशेषेण सीसकेन च—तेनैव तप्तेन तैलेन च 'कलकल'त्ति सन्नम्र्नाभिषेचनं तथा कुम्भ्यां—भाजनविशेषे पाकः कुम्भीपाकः कम्पनं—शीतलजलाच्छोटनादिना शीतकाले गात्रोत्कम्पजननं तथा स्थिरबन्धनं—निबिडनियन्त्रणं वेधः—कुन्तादिना शस्त्रेण भेदनं वर्द्धकर्त्तनं—त्वगुत्रोटनं प्रतिभयकर—भयजननं तथ तत् करप्रदीपनं च—घमनावेष्टितस्य तैलाभिषिक्तस्य करयोरग्निप्रबोधनमिति कर्म्मधारयः ततश्च वधश्च इत्यादिनाश्चेत्यादि यावत्प्रतिभयकरकरप्रदीपनं चेति द्वन्द्वः, ततस्तानि आदिर्येषां दुःखानां तानि च तानि दारुणानि चेति कर्म्मधारयः, कानीमानीत्याह—दुःखानि, किंभूतानि?—अनुपमानि दुःखविपाकेष्वाख्यायन्त इति प्रक्रमः, तथैवमाख्यायते बहुविधिपरम्पराभिः दुःखानामात गम्यते, अनुबद्धाः—सन्तत मालिङ्गिता बहुविधपरम्परानुबद्धा जीवा इति गम्यते न मुच्यन्ते—न त्यज्यन्ते, कया?—पापकर्मवल्ल्या दुःखफलसम्पादिकया, किमि त्याह—यतोऽवेदयित्वा—अननुभूय कर्मफलमिति गम्यते हुर्यस्मादर्थे नास्ति—न भवति मोक्षो—वियोगः कर्म्मणः सकाशात्, जीवाना मिति गम्यते, किं सर्वथा नेत्याह—तपसा—अनशनादिना किम्भूतेन?—धृतिः—चित्तसमाधानं तद्रूपा 'धणिय'त्ति अत्यर्थं बद्धा—निष्पीडिता कच्छा—बन्धविशेषो यत्र तपसा तेन धृतिबलयुक्तेनेत्यर्थः, शोधनं—अपनयनं तस्य कर्म्मविशेषस्य 'वावि'त्ति स म्मावनायां 'होज्जा' सम्पद्येत नान्यो मोक्षोपायोऽस्तीति भावः, 'एत्तो ये' त्यादि इतश्चानन्तरं सुखविपाकेषु द्वितीयश्रुतस्कन्धाख्य पनेष्वित्यर्थः यदाख्यायते तदभिधीयत इति शेषः, शीलं—ब्रह्मचर्यं समाधिर्वा संयमः—प्राणातिपातविरतिर्नियमा—अभिग्रहविशेषाः गु

णाः—शेषमूलगुणाः उत्तरगुणाश्च तपोऽनशनादि एतेषामुपधानं—विधानं येषां ते तथा अतस्तेषु शीलसंयमनियमगुणतपउपधानेषु, केष्वित्याह—साधुषु—यतिषु, किम्भूतेषु ?—सुष्ठु विहितं—अनुष्ठितं येषां ते सुविहितास्तेषु भक्तादि दत्त्वा यथा बोधिलाभादि निर्वर्त्तयन्ति तथेहाख्यायत इति सम्बन्धः, इह च सम्प्रदानेऽपि सप्तमी न दुष्टा, विषयस्य विवक्षणात्, अनुकम्पा अनुक्रोशस्तत्प्रधान आशयः—चित्तं तस्य प्रयोगोव्यावृत्तिरनुकम्पाशयप्रयोगस्तेन, तथा 'तिकालमति' त्ति त्रिषु कालेषु या मतिः—बुद्धिर्यदुत दास्यामीति परितोषो दीयमाने परितोषो दत्ते च परितोष इति सा त्रैकालिमतिस्तया च यानि विशुद्धानि तानि तथा तानि च तानि भक्तपानानि चेति-अनुकम्पाशयप्रयोगत्रिकालमतिविशुद्धभक्तपानानि प्रदायेति क्रियायोगः,केन प्रदायेत्याह—प्रयतमनसा—आदरभूतचेतसा, हितोऽनर्थपरिहाररूपत्वात् सुखहेतुत्वात् सुखः शुभो वा 'नीसेस'त्ति निः श्रेयसः कल्याणकरत्वात् तीव्रः-प्रकृष्टः परिणामः—अध्यवसानं यस्याः सातथा सा निश्चिता—असंशया मतिः—बुद्धिर्येषां ते हितसुखनिः श्रेयसतीव्रपरिणामनिाश्चितमतयः किं ?-'पयच्छिऊणं' ति प्रदाय, किंभूतानि भक्तपानानि ?—प्रयोगेषु शुद्धानि दायकदानव्यापारापेक्षया सकलाशंसादिदोषरहितानि ग्राहकग्रहणव्यापारापेक्षया चो मादिदोषवर्ज्जितानि, ततः किं?—यथा च—येन च प्रकारेण पारम्पर्येण—मोक्षसाधकत्वलक्षणेन निर्वर्त्तयन्ति, भव्यजीवा इति गम्यते, तु शब्दो भाषामात्रार्थः, बोधिलाभं, यथा च परित्तीकुर्वन्ति—ह्रस्वतां नयन्ति संसारसागरमिति योगः, किंभूतं?—नरनिरयतिर्यक्सुरगतिषु यज्जीवानां गमनं—परिभ्रमणं स एव विपुलो—विस्तीर्णः परिवर्त्तो—मत्स्यादीनां परिवर्त्तनमनेकधा सञ्चरणं यत्र स तथा, तथा अरतिभयविषादशोकमिथ्यात्वान्येव शैलाः—पर्वतास्तैः सङ्कटः—सङ्कीर्णो यः स तथा ततः कर्म्मधारयोऽतस्तं, इह च विषादो—दैन्यमात्रं शोकस्त्वाक्रन्दनादिचिह्न इति, तथा अज्ञानमेव तमोऽन्धकारं—महान्धकारं यत्र स तथा अतस्तं, 'चिक्खल्लसुदुत्तारं' ति चिक्खल्लं-

कर्दमः संसारपक्षे तु विविक्षार्थं-विषयधनस्वजनादिप्रतिबन्धस्तेन सुदुस्तरो-दुःखोत्तार्यो यः स तथा त, तथा जरामरणयोनयः एव संक्षुभित-महामत्स्यमकरादनेकजलजन्तुजातसम्मर्देन प्रविलोडित चक्रवाल-जलपारिमाण्डल्य यत्र स तथा तं तथा षोडश कषाया एव श्वापदानि-मकरग्राहादीनि प्रकाण्डचण्डानि-अत्यर्थं रौद्राणि यत्र स तथा त, अनादिकमनवदग्रमनन्तं संसारसागरमिम प्रत्यक्षमित्यर्थ", तथा यथा च सागरोपमादिना प्रकारेण निबध्नन्त्यायु सुरगणेषु साधुदानप्रत्ययमिति भाव , यथा चानुभवन्ति सुरगणविमानसौख्यानि अनुपमानि, ततश्च कालान्तरेण च्युतानाम् 'इहैव' त्ति तिर्यग्लोके नरलोकमागतानामायुर्वपुर्वर्णरूपजातिकुलजन्मारोग्यबुद्धिमेधाविशेषा आख्यायन्त इति योगः, तत्रायुषो विशेष इतरजीवायुषः सकाशात् शुभत्वं दीर्घत्व च एव वपुः शरीर तस्य स्थिरसंहननता वर्णसौदारगौरत्वं रूपस्यातिसुन्दरता जातेरुत्तमत्वं कुलस्याप्येव जन्मनो विशिष्टक्षेत्रकालौ निराबाधस्व आरोग्यस्य प्रकर्षः बुद्धिरौत्पत्तिक्यादिका तस्याः प्रकृष्टता मेधा अपूर्वश्रुतग्रहणशक्तिस्तस्या विशेष प्रकृष्टतैवेति, तथा मित्रजन-सुहृल्लोकः स्वजनः-पितृपितृव्यादिः धनधान्यरूपो यो विभवो लक्ष्मीः स धनधान्यविभवस्तथा समृद्धेः-पुरान्तः पुरकोशकोष्ठागारबलवाहनरूपायाः सम्पदो यानि साराणि-प्रधानानि वस्तूनि तेषां यः समुदाय-समूह स तथा इत्येतेषां द्वन्द्वस्तत एषां ये विशेषा -प्रकर्षास्ते तथा,तथा बहुविधकामभोगोद्भवानां सौख्यानां विशेषा इतीहापि सम्बन्धनीयं, शुभविपाक उत्तमो येषां ते शुभविपाकोत्तमास्तेषु जीवेष्विति गम्य, इह चेय षष्ठ्यर्थे सप्तमी, तेन शुभविपाकाध्ययनवाच्यानां साधूनामायुष्कादिविशेषा शुभविपाकाध्ययनेष्वाख्यान्ते इति प्रकृत, अथ प्रत्येकं श्रुतस्कन्धयोरभिधेये पुण्यपापविपाकरूपे प्रतिपाद्य तयोरेव यौगपद्येन ते आह-'अणुवरये' त्यादि, अनुपरता-अविच्छिन्ना ये परम्परानुबद्धाः-पारम्पर्यप्रतिबद्धाः, के ?-विपाका इति योग, केषां ?-अशुभानां शुभानां चैव कर्मणां प्रथमद्वितीयश्रुतस्कन्धयोः क्रमेणैव च

भाषिताः-उक्ता बहुविधा विपाकाः विपाकश्रुते एकादशाङ्गे भगवता जिनवरेण संवेगकारणार्थाः-संवेगहेतवो भावाः अन्येऽपि चयमौदिका आख्यायन्त इति पूर्वोक्तक्रियया वचनपरिणामाद्वोत्तरक्रियया योगः, एवं च बहुविधा विस्तरेणार्थप्ररूपणता आख्यायन्त इति, शेषं कण्ठ्यं, नवरं संख्यातानि पदशतसहस्राणि पदाग्रेणेति, तत्र किल एका पदकोटी चतुरशीतिश्च लक्षाणि द्वात्रिंशच्च सहस्राणीति ॥११॥

से किं तं दिट्ठिवाए, ? दिट्ठिवाए णं सव्वभावपरूवणया आघविज्जंति, से समासओ पंचविहे प० तं-परिकम्मं सुत्ताइं पुव्वगयं अणुओगो चूलिया, से किं तं परिकम्मे ?-परिकम्मे सत्तविहे प० तं-सिद्धसेणियापरिकम्मे मणुस्ससेणियापरिकम्मे पुट्ठसेणियापरिकम्मे ओगाहणसेणियापरिकम्मे उवसंपज्जसेणियापरिकम्मे विप्पजहसेणियापरिकम्मे चुआचुअसेणियापरिकम्मे, से किं तं सिद्धसेणियापरिकम्मे ?, सिद्धसेणिआपरिकम्मे चोद्दसविहे प० तं-माउयापयाणि एगट्ठियपयाणि पादोट्ठपयाणि आगासपयाणि केउभूयं रासिबद्धं एगगुणं दुगुणं तिगुणं केउभूयं पडिग्गहो संसारपडिग्गहो नंदावत्तं सिद्धबद्धं, सेत्तं सिद्धसेणियापरिकम्मे, से किं तं मणुस्ससेणियापरिकम्मे ?, मणुस्ससेणियापरिकम्मे चोद्दसविहे पण्णत्ते, तं जहा-ताइं चेव माउआपयाणि जाव नंदावत्तं मणुस्सबद्धं, सेत्तं मणुस्ससेणियापरिकम्मे, अवसेसा परिकम्माइं पुट्ठाइयाइं एक्कारसविहाइं पन्नत्ताइं, इच्चेयाइं सत्त परिकम्माइं ससमइयाइं सत्त आजीवियाइं छ चउक्कणइयाइं सत्त तेरासियाइं एवामेव सपुव्वावरेणं सत्त परिकम्माइं तेसीति भवंतीतिमक्खायाइं, सेत्तं परिकम्माइं, से किं तं सुत्ताइं ?, सुत्ताइं अट्ठासीति भवंतीतिमक्खायाइं, तंजहा-उज्जुगं परिणयापरिणयं बहुभंगियं विप्पचइयं [विन (ज) यचरियं] अ-

णत्तं परंपर समाणं सजूह [मासाणं] स भिन्नं अहावय [अहव्वाय नन्द्यां] सोवत्थि (वत्तं य) णदावत्त बहुलं पुट्ठापुट्ठ वियावत्त एवभूय दुआवत्तं वत्तमाणप्पय समभिरूढ सव्वओभद्दं पणाम [ पस्सास नन्द्यां] दुपडिग्गह इच्चेयाइं बावीस सुत्ताइं छिण्णछेअणइआइ ससमयसुत्तपरिवाडीए, इच्चेआइ बावीस सुत्ताइ अछिन्नछेयनइयाइ आजीवियसुत्तपरिवाडीए, इच्चेआइ बावीसं सुत्ताइं तिकणइयाइ तेरासियसुत्तपरिवाडिए, इच्चेआइं बावीस सुत्ताइं चउक्कणइयाइ ससमयसुत्तपरिवाडीए, एवामेव सपुव्वावरेण अट्ठासीति सुत्ताइ भवतीतिमक्खाइ, सेत्तं सुत्ताइ। से किं त पुव्वगयं ?, पुव्वगय चउद्दसविहं पन्नत्त, तंजहा–उप्पायपुव्व अग्गेणीय वीरिय अत्थिणत्थिप्पवाय नाणप्पवायं सच्चप्पवाय आयप्पवाय कम्मप्पवायं पच्चक्खाणप्पवाय विज्जाणुप्पवाय अवंझ० पाणाऊ० किरियाविसालं लोगबिंदुसारं १४, उप्पायपुव्वस्स ण दस वत्थू प० चत्तारि चूलियावत्थू प०, अग्गेणियस्स ण पुव्वस्स चोद्दस वत्थू बारस चूलियावत्थू, वीरियपवायस्स ण पुव्वस्स अट्ठ वत्थू अट्ठ चूलियावत्थू प० अत्थिणत्थिप्पवायस्स णं पुव्वस्स अट्ठारस वत्थू दस चूलियावत्थू प०, नाणप्पवायस्स णं पुव्वस्स बारस वत्थू प०, सच्चप्पवायस्स णं पुव्वस्स दो वत्थू प०, आयप्पवायस्स ण पुव्वस्स सोलस वत्थू प०, कम्मप्पवायपुव्वस्स तीस वत्थू प०, पच्चक्खाणस्स ण पुव्वस्स वीस वत्थू प०, विज्जाणुप्पवायस्स ण पुव्वस्स पनरस वत्थू प०, अवंझस्स ण पुव्वस्स बारस वत्थू प०, पाणाउस्स ण पुव्वस्स तेरस वत्थू प०, किरियाविसालस्स ण पुव्वस्स तीस वत्थू प०, लोगबिंदुसारस्स णं पुव्वस्स पणवीसं वत्थू प०,–दस चोद्दस

अट्ठारसे व बारस दुवे य वत्थूणि। सोलस तीसा वीसा पन्नरस अणुप्पवायंमि ॥१॥ बारस एक्कारसमे बारसमे तेरसेव वत्थूणि। तीसा पुण तेरसमे चउदसमे पन्नवीसाओ ॥२॥ चत्तारि दुवालस अट्ठ चेव दस चेव चूलवत्थूणि। आतिल्लाण चउण्हं सेसाणं चूलिया णत्थि ॥ ३ ॥ सेत्तं पुव्वगयं, सेकिं तं अणुओगे?, अणुओगे दुविहे पन्नत्ते, तंजहा–मूलपढमाणुओगे य गंडियाणुओगे य, से किं तं मूलपढमाणुओगे?, एत्थ णं अरहंताणं भगवंताणं पुव्वभवा देवलोगगमणाणि आउं चवणाणि जम्मणाणि अ अभिसेया रायवरसिरीओ सीयाओ पव्वज्जाओ तवा य भत्ता केवलणाणुप्पाया अ तित्थपवत्तणाणि अ संघयणं संठाणं उच्चत्तं आउं वन्नविभागो सीसा गणा गणहरा य अज्जा पवत्तणीओ संघस्स चउव्विहस्स जं वावि परिमाणं जिणमणपज्जवओहिनाणसम्मत्तसुयनाणिणो य वाई अणुत्तरगई य जत्तिया सिद्धा पाओवगआ य जे जहिं जत्तियाइं भत्ताइं छेअइत्ता अंतगडा मुणिवरुत्तमा तमरओघविप्पमुक्का सिद्धिपहमणुत्तरं च पत्ता, एए अन्ने य एवमाइया भावा मूलपढमाणुओगे कहिआ आघविज्जंति पण्णविज्जंति परू० सेत्तं मूलपढमाणुओगे, से किं तं गंडियाणुओगे?, अणेगविहे पण्णत्ते, तंजहा-कुलगरगंडियाओ तित्थगरगंडियाओ गणहरगंडियाओ चक्कहरगंडियाओ दसारगंडियाओ बलदेवगंडियाओ वासुदेवगंडियाओ हरिवंसगंडियाओ भद्दबाहुगंडियाओ तवोकम्मगंडियाओ चित्तंतरगंडियाओ उस्सप्पिणीगंडियाओ ओसप्पिणीगंडियाओ अमरनरतिरियनिरयगइगमणविविहपरियट्टणाणुओगे, एवमाइयाओ गंडियाओ आघविज्जंति पण्णविज्जंति परूविज्जंति, सेत्तं गंडिया-

णगर परपर समाण सजूह [मासाण] स भिर्ण अहावयं [अहव्वाय नन्या] सोवत्थि (वत्त य) णंदावत्तं बहुलं पुट्ठापुट्ठं वियावत्त एवमूय दुआवत्त वत्तमाणप्पय समभिरूढ सव्वओभद्द पणाम[ पस्सास नन्या] दुपडिग्गह इच्चेयाइं बावीस सुत्ताइं छिण्णछेअणइआइं ससमयसुत्तपरिवाडीए, इच्चेआइं बावीस सुत्ताइं अछिन्नछेयनइयाइं आजीवियसुत्तपरिवाडीए, इच्चेआइं बावीस सुत्ताइं तिकणइयाइं तेरासियसुत्तपरिवाडीए, इच्चेआइं बावीस सुत्ताइं चउक्कणइयाइं ससमयसुत्तपरिवाडीए, एवामेव सपुव्वावरेण अट्ठासीति सुत्ताइं भवतीतिमक्खायाइं, सेत्त सुत्ताइं। से किं त पुव्वगयं?, पुव्वगयं चउद्दसविहं पन्नत्तं, तंजहा–उप्पायपुव्वं अग्गेणीयं वीरियं अत्थिणत्थिप्पवायं नाणप्पवायं सच्चप्पवायं आयप्पवायं कम्मप्पवायं पच्चक्खाणप्पवायं विज्जाणुप्पवायं अबंझं पाणाऊ० किरियाविसालं लोगबिंदुसारं १४, उप्पायपुव्वस्स णं दस वत्थू प० चत्तारि चूलियावत्थू प०, अग्गेणियस्स णं पुव्वस्स चोद्दस वत्थू बारस चूलियावत्थू, वीरियपवायस्स णं पुव्वस्स अट्ठ वत्थू अट्ठ चूलियावत्थू प० अत्थिणत्थिप्पवायस्स णं पुव्वस्स अट्ठारस वत्थू दस चूलियावत्थू प०, नाणप्पवायस्स णं पुव्वस्स बारस वत्थू प०, सच्चप्पवायस्स णं पुव्वस्स दो वत्थू प०, आयप्पवायस्स णं पुव्वस्स सोलस वत्थू प०, कम्मप्पवायपुव्वस्स तीस वत्थू प०, पच्चक्खाणस्स णं पुव्वस्स वीस वत्थू प०, विज्जाणुप्पवायस्स णं पुव्वस्स पनरस वत्थू प०, अवंझस्स णं पुव्वस्स बारस वत्थू प०, पाणाउस्स णं पुव्वस्स तेरस वत्थू प०, किरियाविसालस्स णं पुव्वस्स तीस वत्थू प०, लोगबिंदुसारस्स णं पुव्वस्स पणवीसं वत्थू प०,–दस चोद्दस



नयचिन्ताः तत्र नैगमो द्विविधः—साङ्ग्राहिकोऽसाङ्ग्राहिकश्च, तत्र साङ्ग्राहिकः सङ्ग्रहं प्रविष्टोऽसाङ्ग्राहिकश्च व्यवहारं, तस्मात्सङ्ग्रहो व्यवहार ऋजुसूत्रः शब्दादयश्चैक एवेत्येवं चत्वारो नयाः, एतैश्चतुर्भिर्नयैः षट् स्वसामयिकानि परिकर्म्माणि चिन्त्यन्ते, अतो भणितं 'छ चउक्कनयाइं'ति भवन्ति त एव चाजीविकास्त्रैराशिका भणिताः कस्माद् ? उच्यते, यस्मात्ते सर्वं त्र्यात्मकं इच्छन्ति, यथा जीवोऽजीवो जीवाजीवः लोकोऽलोको लोकालोकः सत् असत् सदसत् इत्येवमादि, नयचिन्तायामपि ते त्रिविधं नयमिच्छन्ति, तद्यथा—द्रव्यार्थिकः पर्यायार्थिकः उभयार्थिकः, अतो भणितं 'सत्त तेरासिय'त्ति सप्त परिकर्माणि त्रैराशिकपाखण्डिकास्त्रिविधया नयचिन्तया चिन्तयन्तीत्यर्थः, 'सेत्तं परिकम्मे'त्ति निगमनं, 'से किं तं सुत्ताइ'मित्यादि, तत्र सर्वद्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणि अष्टाशीत्यपि च सूत्रार्थतो व्यवच्छिन्नानि तथापि दृष्टानुसारतः किञ्चिल्लिख्यते. एतानि किल ऋजुकादीनि द्वाविंशतिः सूत्राणि, तान्येव त्रिभागतोऽष्टाशीतिर्भवन्ति, कथम् ?, उच्यते, 'इच्चेइयाइं बावीसं सुत्ताइं छिन्नछेयनइयाइं ससमयसुत्तपरिवाडीए'त्ति इह यो नयः सूत्रं छिन्नं छेदेनेच्छति स छिन्नच्छेदनयो यथा "धम्मो मंगलमुक्किट्ठ"मित्यादिश्लोकः सूत्रार्थतः प्रत्येकच्छेदेन स्थितो न द्वितीयादिश्लोकमपेक्षते, प्रत्येककल्पितपर्यन्त इत्यर्थः, एतान्येव द्वाविंशतिः स्वसमयसूत्रपरिपाट्या सूत्राणि स्थितानि, तथा इत्येतानि द्वाविंशतिः सूत्राणि अच्छिन्नच्छेदनयिकान्याजीविकसूत्रपरिपाट्येति, अयमर्थः—इह यो नयः सूत्रमच्छिन्नं छेदेनेच्छति सोऽच्छिन्नछेदनयो यथा 'धम्मो मंगलमुक्किट्ठ'मित्यादि श्लोक एवार्थतो द्वितीयादिश्लोकमपेक्षमाणो द्वितीयादयश्च प्रथममिति अन्योऽन्यसापेक्षा इत्यर्थः,एतानि द्वाविंशतिराजीविकगोशालकप्रवर्तितपाखण्डसूत्रपरिपाट्या अक्षररचनाविभागस्थितान्यप्यर्थतोऽन्योऽन्यमपेक्षमाणानि भवन्ति, 'इच्चेइयाइं' इत्यादि सूत्रं, तत्र 'तिकनइयाइं'ति नयत्रिकाभिप्रायतश्चिन्त्यन्त इत्यर्थस्त्रैराशिका श्चाजीविका एवोच्यन्ते इति, तथा 'इच्चेइयाइं' इत्यादि सूत्रं, तत्र 'चउ-



पुओगे से किं तं चूलियाओ? जण्णं आइल्लाण चउण्हं पुव्वाणं चूलियाओ, सेसाइं पुव्वाइं अचूलियाइं सेत्तं चूलियाओ, दिट्ठिवायस्स णं परित्ता वायणा संखेज्जा अणुओगदारा संखेज्जाओ पडिवत्तीओ संखेज्जाओ निज्जुत्तीओ संखेज्जा सिलोगा संखेज्जाओ संगहणीओ, से णं अंगट्ठयाए बारसमे अंगे एगे सुयक्खंधे चउद्दस पुव्वाइं संखेज्जा वत्थू संखेज्जा चूलवत्थू संखेज्जा पाहुडा संखेज्जा पाहुडपाहुडा संखेज्जाओ पाहुडियाओ संखेज्जाओ पाहुडपाहुडियाओ संखेज्जाणि पयसयसहस्साणि पयग्गेणं पन्नत्ता, संखेज्जा अक्खरा अणंता गमा अणंता पज्जवा परित्ता तसा अणंता थावरा सासया कडा णिबद्धा णिकाइया जिणपण्णत्ता भावा आघविज्जंति पण्णविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति, एवं णाया एवं विण्णाया एवं चरणकरणपरूवणया आघविज्जंति, सेत्तं दिट्ठिवाए, सेत्तं दुवालसंगे गणिपिडगे ॥ १२ ॥ ( सूत्र १४७ )

'से किं तं दिट्ठिवाए' त्ति दृष्टयो-दर्शनानि वदनं वादो दृष्टीनां वादो दृष्टिवादः दृष्टीनां वा पातो यत्रासौ दृष्टिपातः सर्वनयदृष्टय एवेहाख्यायन्त इत्यर्थः, तथा चाह-'दिट्ठिवाए णं'मित्यादि, दृष्टिवादेन दृष्टिपातेन वा सर्वभावप्ररूपणाऽऽख्यायते, 'से समासओ पंचविहे' इत्यादि सर्वमिदं प्रायो व्यवच्छिन्नं तथापि यथादृष्टं किमपि लिख्यते, तत्र सूत्रादिग्रहणयोग्यतासम्पादनसमर्थानि परिकर्म्माणि गणितपरिकर्मवत्, तच्च परिकर्म्मश्रुतं सिद्धश्रेणिकादिपरिकर्म्ममूलभेदतः सप्तविधं, उत्तरभेदतस्तु त्र्यशीतिविधं मातृकापदादि, एतच्च सर्वं समूलोत्तरभेदं सूत्रार्थतो व्यवच्छिन्नं एतेषां च परिकर्म्मणां षट् आदिमानि परिकर्म्माणि स्वसामयिकान्येव, गोशालकप्रवर्त्तिताजीविकपाषण्डिकसिद्धान्तमतेन पुनः च्युताच्युतश्रेणिकापरिकर्म्मसहितानि सप्त प्रज्ञाप्यन्ते, इदानीं परिकर्मेषु

नयचिन्ताः तत्र नैगमो द्विविधः—साङ्ग्राहिकोऽसाङ्ग्राहिकश्च, तत्र साङ्ग्राहिकः सङ्ग्रहं प्रविष्टोऽसाङ्ग्राहिकश्च व्यवहारं, तस्मात्सङ्ग्रहो व्यवहार ऋजुसूत्रः शब्दादयश्चैक एवेत्येवं चत्वारो नयाः, एतैश्चतुर्भिर्नयैः षट् स्वसामयिकानि परिकर्म्माणि चिन्त्यन्ते, अतो भणितं 'छ चउक्कनयाइं'ति भवन्ति त एव चाजीविकास्त्रैराशिका भणिताः कस्मात् ? उच्यते, यस्मात्ते सर्वं त्र्यात्मकं इच्छन्ति, यथा जीवोऽजीवो जीवाजीवः लोकोऽलोको लोकालोकः सत् असत् सदसत् इत्येवमादि, नयाचिन्तायामपि ते त्रिविधं नयमिच्छन्ति, तद्यथा—द्रव्यार्थिकः पर्यायार्थिकः उभयार्थिकः, अतो भणितं 'सत्त तेरासिय'त्ति सप्त परिकर्माणि त्रैराशिकपाखण्डिकास्त्रिविधया नयचिन्तया चिन्तयन्तीत्यर्थः, 'सेत्तं परिकम्मे'त्ति निगमनं, 'से किं तं सुत्ताइ'मित्यादि, तत्र सर्वद्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणि अष्टाशीत्यपि च सूत्रार्थतो व्यवच्छिन्नानि तथापि दृष्टानुसारतः किञ्चिल्लिख्यते. एतानि किल ऋजुकादीनि द्वाविंशतिः सूत्राणि, तान्येव विभागतोऽष्टाशीतिर्भवन्ति, कथम् ?, उच्यते, 'इच्चेइयाइं बावीसं सुत्ताइं छिन्नछेयनइयाइं ससमयसुत्तपरिवाडीए'त्ति इह यो नयः सूत्रं छिन्नं छेदेनेच्छति स छिन्नच्छेदनयो यथा "धम्मो मंगलमुक्किट्ठ"मित्यादिश्लोकः सूत्रार्थतः प्रत्येकच्छेदेन स्थितो न द्वितीयादिश्लोकमपेक्षते, प्रत्येककल्पितपर्यन्त इत्यर्थः, एतान्येव द्वाविंशतिः स्वसमयसूत्रपरिपाट्या सूत्राणि स्थितानि, तथा इत्येतानि द्वाविंशतिः सूत्राणि अच्छिन्नच्छेदनयिकान्याजीविकसूत्रपरिपाट्येति, अयमर्थः—इह यो नयः सूत्रमच्छिन्नं छेदेनेच्छति सोऽच्छिन्नछेदनयो यथा 'धम्मो मंगलमुक्किट्ठ'मित्यादि श्लोक एवार्थतो द्वितीयादिश्लोकमपेक्षमाणो द्वितीयादयश्च प्रथममिति अन्योऽन्यसापेक्षा इत्यर्थः,एतानि द्वाविंशतिराजीविकगोशालकप्रवर्तितपाखण्डसूत्रपरिपाट्या अक्षररचनाविभागस्थितान्यप्यर्थतोऽन्योऽन्यमपेक्षमाणानि भवन्ति, 'इच्चेइयाइं' इत्यादि सूत्रं, तत्र 'तिकनइयाइं'ति नयत्रिकाभिप्रायतश्चिन्त्यन्त इत्यर्थस्त्रैराशिका श्चाजीविका एवोच्यन्ते इति, तथा 'इच्चेइयाइं' इत्यादि सूत्रं, तत्र 'चउ-

चनस्याइं'ति नयचतुष्काभिप्रायतश्चिन्त्यन्त इति भावना, एवमेवे'त्यादि, एवं एतानि सप्रांशीतिशतानि षट्को द्वाविंशतयोऽष्टाशीति' सूत्राणि भवन्ति 'सेत्त सुत्ताइं'ति निगमनवाक्यं, 'से किं त पुव्वगय' इत्यादि, अथ किं तत् पूर्वगत ?, उच्यते, यस्मात्तीर्थकर' तीर्थप्रवर्तनाकाले गणधराणां सर्वसूत्राधारत्वेन पूर्वं पूर्वगतं सूत्रार्थं भाषते तस्मात्पूर्वाणीति भणितानि, गणधराः पुनः श्रुतरचनां विदधाना आचारादिक्रमेण रचयन्ति स्थापयन्ति च, मतान्तरेण तु पूर्वगतसूत्रार्थः पूर्वमर्हता भाषितो गणधरैरपि पूर्वगतश्रुतमेव पूर्वं रचितं पश्चादाचारादि, नन्वेवं यदाचार-निर्युक्त्यामभिहितं 'सव्वेसिं आयारो पढमो' इत्यादि तत्कथम् ?, उच्यते, तत्र स्थापनामाश्रित्य तथोक्तमिह त्वक्षररचनां प्रतीत्य भ णितं पूर्वं पूर्वाणि कृतानीति, तच्च पूर्वगतं चतुर्दशविधं प्रज्ञप्तं, तद्यथा—'उप्पाये' त्यादि, तत्रोत्पादपूर्वं प्रथमं, तत्र च सर्वद्रव्याणां पर्यवाणां चोत्पादभावमङ्गीकृत्य प्रज्ञापना कृता, तस्य च पदपरिमाणमेका कोटी, अग्गेणीयं द्वितीयं, तत्रापि सर्वेषां द्रव्याणां पर्य वाणां जीवविशेषाणां चाग्र–परिमाणं वर्ण्यत इत्यग्रेणीयं तस्य पदपरिमाणं षण्णवतिः पदशतसहस्राणि, 'वीरिय' त्ति वीर्यप्रवादं तृतीयं, तत्राप्यजीवानां जीवानां च सकर्मेतराणां वीर्यं प्रोच्यत इति वीर्यप्रवादं, तस्यापि सप्ततिः पदशतसहस्राणि परिमाणं, अस्तिनास्तिप्रवादं चतुर्थं, यद्यल्लोके यथास्ति यथा वा नास्ति, अथवा स्याद्वादाभिप्रायतः तदेवास्ति तदेव नास्तीत्येवं प्रवदतीति अस्तिनास्तिप्रवादं भणितं, तदपि पदपरिमाणतः षष्टिः पदशतसहस्राणि, ज्ञानप्रवादं पञ्चमं, तस्मिन् मतिज्ञानादिपञ्चकस्य भेदप्ररूपणा यस्मात् कृता तस्मात् ज्ञानप्रवादं, तस्मिन् पदपरिमाणमेका कोटी एकपदोनेति, सत्यप्रवादं, षष्ठं सत्य–संयमः सत्यवचनं वा तद्यत्र सभेदं सप्रतिपक्षं च वर्ण्यते तत्सत्यप्रवादं, तस्य पदपरिमाणं एका पदकोटी षट् च पदानीति, आत्मप्रवादं सप्तमं 'आय' त्ति आत्मा सोऽनेकधा यत्र नयदर्शनै-र्वर्ण्यते तदात्मप्रवादं, तस्य पदपरिमाणं षड्विंशतिः पदकोट्यः कर्मप्रवादमष्टमं ज्ञानावरणादिकमष्टविधं कर्म्मप्रकृतिस्थित्यनुभागप्रदे-

शादिभिर्भेदैरन्यैश्चोत्तरोत्तरभेदैर्यत्र वर्ण्यते तत्कर्म्मप्रवादं, तत्परिमाणमेका पदकोटी अशीतिश्च सहस्राणीति. प्रत्याख्यानं नवमं तत्र- सर्वं प्रत्याख्यानस्वरूपं वर्ण्यत इति प्रत्याख्यानप्रवादं, तत्परिमाणं चतुरशीतिः पदशतसहस्राणीति, विद्यानुप्रवादं दशमं तत्रानेके विद्या- तिशया वर्णितास्तत्परिमाणमेका पदकोटी दश च पदशतसहस्राणीति, अवन्ध्यमेकादशं, वन्ध्यं नाम निष्फलं न वन्ध्यमवन्ध्यं सफ- लमित्यर्थः, तत्र हि सर्वे ज्ञानतपःसंयमयोगाः शुभफलेन सफला वर्ण्यन्ते अप्रशस्ताश्च प्रमादादिकाः सर्वे अशुभफला वर्ण्यन्ते अतोऽ- वन्ध्यं, तस्य च परिमाणं षड्विंशतिः पदकोटयः, प्राणायुर्द्वादशं तत्राप्यायुःप्राणविधानं सर्वं सभेदमन्ये च प्राणा वर्णितास्तत्परिमाण- मेका पदकोटी षट्पञ्चाशच्च पदशतसहस्रणीति, क्रियाविशालं त्रयोदशं, तत्र कायिक्यादयः क्रिया विशालत्ति–सभेदाः संयमक्रिया छन्दक्रिया विधानानि च वर्ण्यन्त इति क्रियाविशालं, तत्पदपरिमाणं नव पदकोट्यः, लोकबिन्दुसारं च चतुर्दशमं, तच्चास्मिन् लोके श्रुतलोके वा बिन्दुरिवाक्षरस्य सर्वोत्तममिति, सर्वाक्षरसन्निपातप्रतिष्ठितत्वेन च लोकबिन्दुसारं भणितं, तत्प्रमाणमर्द्धत्रयोदश पदकोटय इति । 'उप्पायपुव्वस्से' त्यादि कण्ठ्यं, नवरं वस्तु–नियतार्थाधिकारप्रतिबद्धो ग्रन्थविशेषोऽध्ययनवदिति, तथा चूडा इव चूडा, इह दृष्टिवादे परिकर्म्मसूत्रपूर्वगतानुयोगोक्तानुक्तार्थसङ्ग्रहपरा ग्रंथपद्धतयश्चूडा इति, 'सेत्तं पुव्वगते' त्ति निगमनं, 'से किं त' मित्यादि. अनुरूपोऽनुकूलो वा योगोऽनुयोगः सूत्रस्य निजेनाभिधेयेन सार्द्धमनुरूपः सम्बन्ध इत्यर्थः, स च द्विविधः प्रज्ञप्तः, तद्यथा–मूलप्रथमा नुयोगश्च, 'से किं त' मित्यादि, इह धर्म्मप्रणयनात् मूलं तावत्तीर्थकरास्तेषां प्रथमसम्यक्त्वाप्तिलक्षणपूर्वभवादिगोचरोऽनुयोगो मूलप्र- थमानुयोगः, तथा चाह–'से किं तं मूलपढमाणुओगे' इत्यादि सूत्रसिद्धं यावत् 'सेत्तं 'मूलपढमाणुओगे' 'से किं त' मित्यादि इहैक- वक्तव्यतार्थाधिकारानुगता वाक्यपद्धतयो गण्डिका उच्यन्ते तासामनुयोगः, अर्थकथनविधिः गण्डिकानुयोगः, तथा चाह-'गंडियाणु-

चन्नयाइ'त्ति नयचतुष्काभिप्रायतश्चिन्त्यन्त इति भावना, एवमेवे'त्यादिसूत्र, एव चतस्रो द्वाविंशतयोऽष्टाशीतिः सूत्राणि भवन्ति 'सेत्तं सुत्ताइ'ति निगमनवाक्य, 'से किं तं पुव्वगय' इत्यादि, अथ किं तत् पूर्वगतं ?, उच्यते, यस्मात्तीर्थकरः तीर्थप्रवर्त्तनाकाले गणधराणां सर्वसूत्राधारत्वेन पूर्वं पूर्वगतं सूत्रार्थं भाषते तस्मात्पूर्वाणीति भणितानि, गणधराः पुनः श्रुतरचनां विदधाना आचारादिक्रमेण रचयन्ति स्थापयन्ति च, मतान्तरेण तु पूर्वगतसूत्रार्थः पूर्वमर्हता भाषितो गणधरैरपि पूर्वगतश्रुतमेव पूर्वं रचितं पश्चादाचारादि, नन्वेवं यदाचार-निर्युक्त्यामभिहितं 'सव्वेसिं आयारो पढमो' इत्यादि तत्कथम् ?, उच्यते, तत्र स्थापनामाश्रित्य तथोक्तमिह त्वक्षररचनां प्रतीत्य भणितं पूर्वं पूर्वाणि कृतानीति, तच्च पूर्वगतं चतुर्दशविधं प्रज्ञप्तं, तद्यथा—'उप्पाये' त्यादि, तत्रोत्पादपूर्वं प्रथमं, तत्र च सर्वद्रव्याणां पर्यवाणां चोत्पादभावमङ्गीकृत्य प्रज्ञापना कृता, तस्य च पदपरिमाणमेका कोटी, अग्रेणीयं द्वितीयं, तत्रापि सर्वेषां द्रव्याणां पर्य-वाणां जीवविशेषाणां चाग्र-परिमाणं वर्ण्यते इत्यग्रेणीयं तस्य पदपरिमाणं षण्णवतिः पदशतसहस्राणि, 'वीरियं' ति वीर्यप्रवादं तृतीयं, तत्राप्यजीवानां जीवानां च सकर्मेतराणां वीर्यं प्रोच्यत इति वीर्यप्रवाद, तस्यापि सप्ततिः पदशतसहस्राणि परिमाणं, अस्तिनास्तिप्रवादं चतुर्थं, यल्लोके यथास्ति यथा वा नास्ति, अथवा स्याद्वादाभिप्रायतः तदेवास्ति तदेव नास्तीत्येवं प्रवदतीति अस्तिनास्तिप्रवाद भणितं, तदपि पदपरिमाणतः षष्टिः पदशतसहस्राणि, ज्ञानप्रवादं पञ्चमं, तस्मिन् मतिज्ञानादिपञ्चकस्य भेदप्ररूपणा यस्मात् कृता तस्मात् ज्ञानप्रवाद, तस्मिन् पदपरिमाणमेका कोटी एकपदोनेति, सत्यप्रवादं, षष्ठं सत्य-संयमः सत्यवचनं वा तद्यत्र सभेदं सप्रतिपक्षं च वर्ण्यते तत्सत्यप्रवाद, तस्य पदपरिमाणं एका पदकोटी षट् च पदानीति, आत्मप्रवादं सप्तमं 'आय' त्ति आत्मा सोऽनेकधा यत्र नयदर्शने-र्वर्ण्यते तदात्मप्रवाद, तस्य पदपरिमाणं षड्विंशतिः पदकोट्यः कर्मप्रवादमष्टमं ज्ञानावरणादिकमष्टविधं [illegible]

अवट्ठिए णिच्चे से जहा णामए पंच अत्थिकाया ण कयाइ ण आसि ण कयाइ णत्थि ण कयाइ ण भविस्सति भुविं च भवति य भविस्सति य धुवा णितिया सासया अक्खया अव्वया अवट्ठिया णिच्चा एवामेव दुवालसंगे गणिपिडगे ण कयाइ ण आसि ण कयाइ णत्थि ण कयाइ ण भविस्सइ भुविं च भवति य भविस्सइ य धुवे जाव अवट्ठिए णिच्चे, एत्थ णं दुवालसंगे गणिपिडगे अणंता भावा अणंता अभावा अणंता हेऊ अणंता अहेऊ अणंता कारणा अणंता अकारणा अणंता जीवा अणंता अजीवा अणंता भवसिद्धिया अणंता अभवसिद्धिया अणंता सिद्धा अणंता असिद्धा आघविज्जंनि पण्णविज्जंति परूविज्जंति दंसिज्जंति निदंसिज्जंति उवदंसिज्जंति, एवं दुवालसंगं गणिपिडगं इति ( सूत्रं १४८ )

'इच्चय'मित्यादि, इत्येतद्द्वादशाङ्गं गणिपिटकमतीतकाले अनन्ता जीवा आज्ञया विराध्य चतुरन्तं संसारकान्तारं 'अणुपरियट्टिंसु'त्ति अनुपरिवृत्तवन्त', इदं हि द्वादशाङ्गसूत्रार्थोभयभेदेन त्रिविधं, ततश्च आज्ञया सूत्राज्ञया अभिनिवेशतोऽन्यथापाठादिलक्षणया अतीतकाले अनन्ता जीवाश्चतुरन्त संसारकान्तारं नारकतिर्यग्नरामरविविधवृक्षजालदुस्तरं भवाटवीगहनमित्यर्थः, अनुपरावृत्तवन्तो जमालिवत् अर्थाज्ञया पुनरभिनिवेशतोऽन्यथाप्ररूपणादिलक्षणया गोष्ठामाहिलवत् उभयाज्ञया पुनः पञ्चविधाचारपरिज्ञानकरणोद्यतगुर्वादेशादेरन्यथाकरणलक्षणया गुरुप्रत्यनीकद्रव्यालिङ्गधार्यनेकश्रमणवत् सूत्रार्थोभयैर्विराध्येत्यर्थः, अथवा द्रव्यक्षेत्रकालभावापेक्षमागमोक्तानुष्ठानसेवाज्ञा तया तदकरणेनेत्यर्थः, 'इच्चेय'मित्यादि गतार्थमेव, नवरं 'परित्ता जीवा' इति संख्येया जीवाः, वर्त्तमाने विशिष्टविराधकमनुष्यजीवानां संख्येयत्वात् 'अणुपरियट्टंति'त्ति 'अनुपरावर्त्तन्ते भ्रमन्तीत्यर्थः, 'इच्चेय'मित्यादि इदमपि भावितार्थमेव, नवरम् 'अणुपरियट्टिस्संति'त्ति अनु-

ओगे अमेगे' त्यादि, तत्र कुलकरगण्डिकासु कुलकराणां विमलवाहनादीनां पूर्वजन्माद्यभिधीयत इति, एवं शेषास्वपि अभिधान वशतो भावनीयं, यावत् चित्रान्तरगण्डिका, नवरं वशार्हाः समुद्रविजयादयो दश वसुदेवान्ताः तथा चित्रा-अनेकार्था अन्तरे-ऋषभाजिततीर्थकरान्तरे गण्डिका—एकवक्तव्यतार्थाधिकारानुगतास्ततश्च चित्राश्च ता अन्तरगण्डिकाश्च चित्रान्तरगण्डिकाः, एतदुक्तं भवति—ऋषभाजिततीर्थकरान्तरे सगरजभूपतीनां शेषगतिगमनव्युदासेन शिवगमनानुत्तरोपपातप्राप्तिप्रतिपादिकाश्चित्रान्तरगण्डिका इति, ताश्च 'चोद्दसलक्खा सिद्धा निवईणेक्को य होइ सव्वट्ठे। एवेक्केक्कट्ठाणे पुरिसजुगा हुंति संखेज्जे ॥१॥' त्यादिना ग्रन्थेन नन्दिटीकायामभिहितास्तत एवावसेयाः, इह ग्रन्थगमनिकामात्रस्य विवक्षितत्वादिति, शेषं सूत्रसिद्धमानिगमनात्, नवरं 'संखेज्जा वत्थु' त्ति पदं विंशत्युत्तरे द्वे शते संखेज्जा चूलवत्थु' त्ति चतुस्त्रिंशत् ॥१२॥ साम्प्रतं द्वादशाङ्गविराधनानिष्पन्नं त्रैकालिकं फलमुपदर्शयन्नाह—

इच्चेइयं दुवालसंगं गणिपिडगं अतीतकाले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिंसु इच्चेइयं दुवालसंगं गणिपिडगं पडुप्पण्णे काले परित्ता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टंति इच्चेइयं दुवालसंगं गणिपिडगं अणागए काले अणंता जीवा आणाए विराहित्ता चाउरंतसंसारकंतारं अणुपरियट्टिस्संति इच्चेइयं दुवालसंगं गणिपिडगं अतीतकाले अणंता जीवा आणाए आराहित्ता चाउरंतसंसारकंतारं वीईवइंसु एवं पडुप्पण्णेऽवि एवं अणागएवि, दुवालसंगे णं गणिपिडगे ण कयावि णत्थि ण कयाइ णासी ण कयाइ ण भविस्सइ भुविं च भवति य भविस्सति य धुवे णितिए सासए अक्खए अव्वए

कत्वाच्च हेतोः सूत्रस्य चानन्तगमपर्यायात्मकत्वादिति, यथोक्तहेतुप्रतिपक्षतोऽनन्ता अहेतवः, तथा अनन्तानि कारणानि मृत्पिण्डतन्त्वादीनि घटपटादिनिर्वर्त्तकानि, तथा अनन्तान्यकारणानि सर्वकारणानामेव कार्यान्तराकारणत्वात् , नहि मृत्पिण्डः पटं निर्वर्त्तयतीति, तथा अनन्ता जीवाः– प्राणिनः एवमजीवाः–द्व्यणुकादयः भवसिद्धिका–भव्याः सिद्धा–निष्ठितार्था इतरे–संसारिणः, आघविज्जंती'त्यादि पूर्ववदिति । द्वादशाङ्गस्य स्वरूपमनन्तरमभिहितमथ तदभिधेयस्य राशिद्वयान्तर्भावतः स्वरूपमभिधित्सुराह—

**दुवे रासी पन्नत्ता, तंजहा जीवरासी अजीवरासी य, अजीवरासी दुविहा पन्नत्ता, तंजहा-रूवीअजीवरासी अरूवीअजीवरासी य, से किं तं अरूवी अजीवरासी?, अरूविअजीवराशी दसविहा पन्नत्ता, तंजहा–धम्मत्थिकाए, जाव अद्धासमए,रूवीअजीवरासी अणेगविहा० प० जाव से किं तं अणुत्तरोववाइआ ?, अणुत्तरोववाइआ पंचविहा पन्नत्ता, तंजहा-विजयवेजयंतजयंतअपराजितसव्वट्ठसिद्धिआ, सेत्तं अणुत्तरोववाइआ ! सेत्तं पंचिंदियसंसारसमावण्णजीवरासी,दुविहा णेरइया पन्नता,तंजहा–पज्जत्ता य अपज्जत्ता य एवं दंडओ भाणियव्वो जाव वेमाणियत्ति, इमीसे णं रयणप्पभाए पुढवीए केवइयं खेत्तं ओगाहेत्ता केवइया णिरयावासा पण्णत्ता?,गोयमा! इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सवाहल्लाए उवरि एगं जोयणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठसत्तरि जोयणसयसहस्से एत्थ णं रयणप्पभाए पुढवीए णेरइयाणं तीसं णिरयावाससयसहस्सा भवंतीतिमक्खाया,ते णं णिरयावासा अंतो वट्टा बाहिं चउरंसा जाव असुभा णिरया असुभाओ णिरएसु वेयणाओ, एवं सत्तवि भाणियव्वाओ जं जासु जुज्जइ–'आसीयं बत्तीसं अट्ठावीसं तहेव वीसं च। अट्ठारस**

परावर्तिष्यन्ते पर्यटिष्यन्तीत्यर्थः, 'इच्चेय'मित्यादि कण्ठ्यं, नवरं 'विइवइंसु'त्ति व्यतिव्रजितवन्तः चातुर्गतिकसंसारोल्लङ्घनेन मुक्तिमवाप्ता इत्यर्थः, एवं प्रत्युत्पन्नेऽपि, नवरं अयं विशेषः 'विइवयंति'त्ति व्यतिव्रजन्ति-व्यतिक्रामन्तीत्यर्थः, अनागतेऽप्येवं, नवरं 'वीइवइस्संति'त्ति व्यतिव्रजिष्यन्ति-व्यतिक्रमिष्यन्तीत्यर्थः, यदिदमनिष्टेतरभेदभिन्नं फलं प्रतिपादितमेतत्सदावस्थायित्वे सति द्वादशाङ्गस्योपजायत इत्याह- 'दुवालसंगे' इत्यादि, द्वादशाङ्ग ममित्यलङ्कार गणिपिटक न कदाचिन्नासीदनादित्वात् न कदाचिन्न भवति सदैव भावात् न कदाचिन्न भविष्यति अपर्यवसितत्वात्, किं तर्हि ?, भुविं चे'त्यादि अभूच्च भवति च भविष्यति च, तदेवं त्रिकालभावित्वादचलं अचलत्वाच्च ध्रुवं मेर्वादिवत् ध्रुवत्वादेव नियतं पञ्चास्तिकायेषु लोकवचनवत् नियतत्वादेव शाश्वतं समयावलिकादिषु कालवचनवत् शाश्वतत्वादेव वाचनादिप्रदानेऽप्यक्षयं गङ्गासिन्धुप्रवाहेऽपि पद्महदवत् अक्षयत्वादेवाव्ययं मानुषोत्तराद्बहिः समुद्रवत् अव्ययत्वादेव स्वप्रमाणेऽवस्थितं जम्बूद्वीपादिवत् अवस्थितत्वादेव नित्यमाकाशवदिति, साम्प्रतं दृष्टान्तमन्नार्थे आह—'से जहा नामए' इत्यादि, तद्यथा नाम पञ्चास्तिकाया-धर्मास्तिकायादयः न कदाचिन्नासन्नित्यादि प्राग्वत्, 'एवमेवे'त्यादि दार्ष्टान्तिकयोजना निगदसिद्धैवेति। 'एत्थ ण'मित्यादि अत्र द्वादशाङ्गे गणिपिटके अनन्ता भावा आख्यायन्त इति योगः, तत्र भवन्तीति भावा जीवादयः पदार्था, एते च जीवपुद्गलानामनन्तत्वादनन्ता इति, तथा अनन्ता अभावाः सर्वभावानामेव पररूपेणासत्त्वात् एवानन्ता अभावा इति, स्वपरसत्तापेक्षया भावाभावोभयाधीनत्वाद्वस्तुतत्त्वस्य, तथाहि-जीवो जीवात्मना भावोऽजीवात्मना चाभावोऽन्यथाऽजीवत्वप्रसङ्गादिति, अन्ये तु धर्मापेक्षया अनन्ता भावा' अनन्ता अभावाः (च) प्रतिवस्त्वस्तित्वनास्तित्वाभ्यां प्रतिबद्धा इति व्याचक्षते, तथाऽनन्ता हेतवः, तत्र हिनोति-गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुस्ते चानन्ताः, वस्तुनोऽनन्तधर्मात्मकत्वात् तत्प्रतिबद्धधर्मविशिष्टवस्तुगम

णा य' त्ति, अतिदिष्टस्य च सूत्रतः सर्वस्य प्रज्ञापनापदस्य लेखितुमशक्यत्वादर्थतस्तल्लेश उपदर्श्यते-तत्राजीवराशिर्द्विविधो रूप्यरूपिभेदात्, तत्रारूप्यजीवराशिर्दशधा-धर्म्मास्तिकायस्तद्देशास्तत्प्रदेशश्चेत्येवमधर्म्मास्तिकायाकाशास्तिकायावपि वाच्यावेवं नव दशमोऽद्धासमय इति, रूप्यजीव शिश्चतुर्द्धा-स्कन्धा देशाः प्रदेशाः परमाणवश्चेति, ते च वर्णगन्धरसस्पर्शसंस्थानभेदतः पञ्चविधाः संयोगतोऽनेकविधा इति। जीवराशिर्द्विविधः संसारसमापन्नोऽसंसारसमापन्नश्च, तत्रासंसारसमापन्ना जीवा द्विविधाः अनन्तरपरम्परसिद्ध भेदात, तत्रानन्तरसिद्धाः पञ्चदश प्रकाराः परम्परसिद्धास्त्वनन्तप्रकारा इति, संसारसमापन्नास्तु पञ्चधैकेन्द्रियादिभेदेन, तत्रैकेन्द्रियाः पञ्चविधाः पृथिव्यादिभेदेन, पुनः प्रत्येकं द्विविधाः सूक्ष्मबादरभेदेन, पुनः पर्याप्तापर्याप्तभेदेन द्विधा एवं द्वित्रिचतुरिन्द्रिया अपि, पञ्चेन्द्रियाश्चतुर्द्धा नारकादिभेदात्, तत्र नारकाः सप्तविधाः रत्नप्रभादिपृथ्वीभेदात्, पञ्चेन्द्रियतिर्यञ्चस्त्रिधा जलस्थलखचरभेदात्, तत्र जलचराः पञ्चविधा मत्स्यकच्छपग्राहमकरसुंसुमारभेदात्, पुनर्मत्स्या अनेकधा-श्लक्ष्णमत्स्यादिभेदात्, कच्छपा द्विधा अस्थिकच्छपमांसकच्छपभेदात्, ग्राहाः पञ्चधा दिलिवेष्टकमद्गुपुलकसीमाकारभेदात् मकरा-मत्स्यविशेषा द्विविधाः-शुण्डामकरा करिमकराश्च, सुंसुमारास्त्वेकविधाः, स्थलचरा द्विधा-चतुष्पदपरिसर्प्पभेदात्, तत्र चतुष्पदाश्चतुर्द्धा-एकखुरद्विखुरगण्डीपदसनखपदभेदात्, क्रमेण चैते अश्वगोहस्तिसिंहादयः, परिसर्प्पा द्विधा-उरःपरिसर्पभुजपरिसर्पभेदात्, उरःपरिसर्पाश्चतुर्द्धा-अहिअजगराशालिकमहोरगभेदात्, तत्राहयो द्रिधा-दर्वीकरा मुकुलिनश्चेति, खचराश्चतुर्द्धा-चर्मपक्षिणो लोमपक्षिणः समुद्गपक्षिणो विततपक्षिणश्च, तत्राद्यौ द्वौ वल्गुलीहंसादिभेदावितरौ द्वीपान्तरेष्वेव स्तः, सर्वे च पञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च द्विधा-सम्मूर्च्छिमा गर्भव्युत्क्रान्तिकाश्च, तत्र संमूर्च्छिमाः नपुंसका एव, इतरे तु त्रिलिङ्गा इति, गर्भव्युत्क्रान्तिकमनुष्यास्त्रिधा-कर्मभूमिजा अकर्मभूमिजा, अन्तरद्वपजाश्चेति कर्म्मभूमिजा द्विविधाः आर्या-म्लेच्छाश्च, आर्या द्वेधा-क्र-

सोलसग अट्ठुत्तरमेव बाहल्लं ॥ १ ॥ तीसा य पण्णवीसा पन्नरस दसेव सयसहस्साइ। तिण्णेग पंचूण पंचेव अणुत्तरा नरगा ॥ २ ॥ चउसट्ठी असुराणं चउरासीइ च होइ नागाण। बावत्तरि सुवन्नाण वाउकुमाराण छण्णउइ॥३॥दीवदिसाउदहीण विज्जुकुमारिंदथणियमग्गीणं।छण्हपि जुमलयाण बावत्तरिमो य सय सहसा॥४॥बत्तीसट्ठावीसा बारस अट्ठ चउरो य सयसहस्सा।पण्णा चत्तालीसा छच्च सहस्सा सहस्सारे॥५॥ आणयपाणयकप्पे चत्तारि सयाऽऽरणच्चुए तिन्नि। सत्त विमाणसयाइं चउसुवि एएसु कप्पेसु॥ ६ ॥एक्कारसुत्तर हेट्ठिमेसु सत्तुत्तर च मज्झिमए। सयमेग उवरिमए पंचेव अणुत्तरविमाणा॥ ७ ॥ दोच्चाए णं पुढवीए तच्चाएणं पुढवीए चउत्थीए पुढवीए पंचमीए पुढवीए छट्ठीए पुढवीए सत्तमीए पुढवीए गाहाहिं भाणियव्वा, सत्तमाए पुढवीए पुच्छा, गोयमा! सत्तमाए पुढवीए अट्ठुत्तरजोयणसयसहस्साइं बाहल्लाए उवरि अद्धतेवन्न जोयणसहस्साइं ओगाहेत्ता हेट्ठावि अद्धतेवन्न जोयणसहस्साइं वज्जित्ता मज्झे तिसु जोयणसहस्सेसु एत्थ णं सत्तमाए पुढवीए नेरइयाणं पंच अणुत्तरा महइमहालया महानिरया पण्णत्ता, तंजहा–काले महाकाले रोरुए महारोरुए अप्पइट्ठाणे नामं पंचमे ते णं निरया वट्टे य तंसा य अहे खुरप्पसंठाणसंठिया जाव असुभा नरगा असुभाओ नरएसु वेयणाओ ( सूत्र १४९ )

इह च प्रज्ञापनायाः प्रथमपदं प्रज्ञापनाख्यं सर्वं तदक्षरमध्येतव्यं, किमवसानमित्याह–'जाव से किं तं' मित्यादि, केवलमस्य प्रज्ञापनासूत्रस्य चायं विशेषः, इह 'दुवे रासी पण्णत्ता' इत्यभिलापसूत्र (सूत्र) तु 'दुविहा पण्णवणा पण्णत्ता–जीवपण्णवणा अजीवपण्णव

सचिक्खिल्ललित्ताणुलेवणतला असुइवीसा परमदुब्भिगंधा काऊअगणिवण्णाभा कक्खडफासा दुरहियासा' इति तत्र नित्यं-सर्वदा अन्धकारं-अन्धत्वकारकं बहलबलाहकपटलाच्छादितगगनमण्डलामावास्यार्द्धरात्रान्धकारवत्तम -तमिस्रं येषु ते नित्यान्धकारतमसः, अथवा नित्येनान्धकारेण सार्वकालिकेनेत्यर्थः तमसः-तमिस्रा नित्यान्धकारतमसः, जात्यन्धमेघान्धकारामावास्यानिशीथतुल्या इत्यर्थः, कथमित्यत आह--व्यपगता-अविद्यमाना ग्रहचन्द्रसूरनक्षत्ररूपाणां ज्योतिषां-ज्योतिष्कलक्षणाविमानविशेषाणां ज्योतिषो वा-दीपाद्यग्नेः प्रभाप्रकाशो येषु ते तथा, 'पह' त्ति पथशब्दो वाऽयं व्याख्येयः, तथा मेदोवसापूयरुधिरमांसानि शरीरावयवास्तेषां यच्चिक्खिल्लं कर्दमस्तेन लिप्तं-उपदिग्धमनुलेपनेन सकृल्लिप्तस्य पुनः पुनरुपलेपनेन तलं-भूमिका येषां ते मेदोवसापूयरुधिरमांसचिक्खिल्ललिप्तानुलेपनतलाः, यद्यपि च तत्र मेदःप्रभृतीन्यौदारिकपञ्चेन्द्रियशरीरावयवरूपाणि न सन्ति वैक्रियशरीरत्वान्नारकाणां तथापि तदाकारास्तदवयवास्तत्र प्रोच्यन्त इति, अशुचयो विश्राः आमगन्धयः पूतिगन्धय इत्यर्थः, अत एव परमदुरभिगन्धाः 'काऊअगणिवण्णाभ' त्ति कृष्णाग्निर्लोहादीनां ध्मायमानानां तद्वर्णवदाभा येषां ते कृष्णाग्निवर्णाभाः,तथा कर्कशः स्पर्शो येषां ते कर्कशस्पर्शाः, अत एव दुःखेन--कृच्छ्रेणाधिसोढुं शक्यते वेदना येषु ते दुरधिसह्याः, अत एवाशुभा नरकाअशुभानरकेषु वेदना इति 'एवं सत्तवि भाणियव्व' त्ति प्रथमामभुञ्चता सप्त इत्युक्तं, 'जं जासु जुज्जइ' त्ति यच्च यस्यां पृथिव्यां वाहल्यस्य नरकाणां च परिमाणं च युज्यते स्थानान्तरोक्तानुसारेण तच्च तस्यां वाच्यं, तच्चेदं-'आसीतं' गाहा 'तीसा य' गाहा अशीतिसहस्राधिकयोजनलक्षं रत्नप्रभायां वाहल्यमेवं शेषासु भावनीयं, तथा त्रिंशल्लक्षाणि प्रथमायां नरकावासानामित्येवं शेषास्वपि नेयमिति, आवासपरिमाणं चासुरादीनामपि दशानां सौधर्म्मादीनां च कल्पेतराणां सूत्रैर्वक्ष्यतीति, तन्निवासपरिमाणसङ्ग्रहे 'चउसट्ठी' इत्यादि गाथाः पञ्च, एवं चैव सूत्राभिलापो दृश्यः, 'सक्करप्पभाए

द्विप्राप्ता इतरे च, तत्र प्रथमा अष्टादश्च:, द्वितीया नवविधा-क्षेत्रजातिकुलकर्मशिल्पभाषाज्ञानदर्शनचारित्रभेदात् , देवाश्चतुर्विधा भवनवास्यादिभेदाद्भवनपतयो दशधा असुरनागादय व्यन्तरा अष्टविधा पिशाचादय ज्योतिष्काः पञ्चधा चन्द्रादयः वैमानिका द्वि-धाकल्पोपगा कल्पातीताश्च, कल्पोपगा द्वादशधा सौधर्मादिभेदात् , कल्पातीता द्वेधा-ग्रैवेयका अनुत्तरोपपातिकाश्च ग्रैवेयका नवधा अनुत्तरोपपातिका पञ्चधेति, एतत्समस्तं सूचयतोक्तं 'जाव से किं त अणुत्तरे' त्यादि, पूर्वोक्तमेव जीवराशिं दण्डकक्रमेण द्विधा दर्शयन्नाह-'दुविहे' त्यादि, सुगमं नवरं 'दण्डओ' त्ति 'नेरइया १ असुराई १० पुढवाइ ५ बेइंदियादओ ४ मणुया १। वंतर १ जोइस १ वेमाणिया य १ अह दण्डओ एवं ॥ १ ॥' अथानन्तरं प्रक्रान्तानां नारकादीनां पर्याप्तापर्याप्तभेदानां स्थाननिरूपणायाह-'इमीसे णं' मित्यादि, अवगाहनाद्वारावधि सर्वं कण्ठ्यं, नवरं 'ते णं निरया' इत्यादि अत्र च जीवाभिगमचूर्ण्य-नुसारेण लिख्यते-किल द्विविधा नरका भवन्ति आवलिकाप्रविष्टाः आवलिकाबाह्याश्च, तत्रावलिकाप्रविष्टा अष्टासु दिक्षु भवन्ति, ते च वृत्तत्र्यस्रचतुरस्रक्रमेण प्रत्यवगन्तव्याः, एतेषां च मध्ये इन्द्रकाः सीमन्तकादयो भवन्ति, आवलिकाबाह्यास्तु पुष्पावकीर्णा दिग्विदिक्षामन्तरालेषु भवन्ति नाना संस्थानसंस्थिता इति निरयसंस्थानव्यवस्था, तत्र च बाहुल्यमङ्गीकृत्ये-दमभिधीयते- अंतो वट्टे' त्यादि, उक्तं च प्रज्ञापनावृत्तिकृता-नारका सीमन्तकादिका बाहुल्यमङ्गीकृत्यान्तः मध्ये वृत्ता बहिरपि चतुरस्रा अधश्च क्षुरप्रसंस्थानसंस्थिताः, एतच्च संस्थानं पुष्पावकीर्णकानामित्योक्तं तेषामेव प्रचुरत्वात् , आवलिकाप्रविष्टास्तु वृत्तत्र्यस्रच-तुरस्रसंस्थाना भवन्ती" ति, तत्रान्तर्वृत्ता मध्ये सुषिरमाश्रित्य बहिश्च चतुरस्रा कुड्यपरिधिमाश्रित्य, यावत्करणादिदं दृश्यं चतुर अधः क्षुरप्रसंस्थानसंस्थिताः-भूतलमाश्रित्य क्षुरप्राकारास्तद्भूतलस्य संचारिसत्त्वपादच्छेदकत्वात् अन्ये त्वाहुः-तेषामधस्तनो भू-रत्र इवाग्रेऽग्रे प्रतलो विस्तीर्णश्चेति क्षुरप्रसंस्थानता, तथा 'निच्चंधयारतमसा ववगयगहचंदसूरनक्खत्तजोइसप्पहा मेयवसापूयरुहिरमं-

पडिरूवा, एवं जं जस्स कमती तं तस्स जं जं गाहाहिं भणियं तह चेव वण्णओ। केवइया णं भंते! पुढविकाइयावासा प० ?, गोयमा! असंखेज्जा पुढवीकाइयावासा प०, एवं जाव मणुस्सत्ति, केवइया णं भंते! वाणमंतरावासा प० ?, गोयमा! इमीसे णं रयणप्पभाइ पुढवीए रयणामयस्स कंडस्स जोयणसहस्सबाहल्लस्स उवरिं एगं जोयणसयं ओगाहेत्ता हेट्ठा चेगं जोयणसयं वज्जेत्ता मज्झे अट्ठसु जोयणसएसु एत्थ णं वाणमंतराणं देवाणं तिरियमसंखेज्जा भोमेज्जा नगरावाससयसहस्सा प०, ते णं भोमेज्जा नगरा बाहिं वट्टा अंतो चउरंसा, एवं जहा भवणवासीणं तहेव णेयव्वा, णवरं पडागमालाउला सुरम्मा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा॥ केवइया णं भंते! जोइसियाणं विमाणावासा प०?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ सत्तनउयाइं जोयणसयाइं उड्ढं उप्पइत्ता एत्थ णं दसुत्तरजोयणसयबाहल्ले तिरियं जोइसविसए जोइसियाणं देवाणं असंखेज्जा जोइसियविमाणावासा प०, ते णं जोइसियविमाणावासा अब्भुग्गयमूसियपहसिया विविहमणिरयणभत्तिचित्ता वाउद्धुयविजयवेजयंतीपडागछत्ताइछत्तकलिया तुंगा गगणतलमणुलिहंतसिहरा जालंतररयणपञ्जरुम्मिलियव्व मणिकणगथूभियागा वियसियसयपत्तपुण्डरीयतिलयरयणद्धचंदचित्ता अंतो बाहिं च सण्हा तवणिज्जवालुआपत्थडा सुहफासा सस्सिरीयरूवा पासाईया दरिसणिज्जा॥ केवइया णं भंते! वेमाणियावासा प० ?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरियगहगणनक्खत्ततारारूवाणं वीइवइत्ता बहूणि जोयणाणि बहूणि

णं पुढवीए केवइय ओगाहित्ता केवइया निरया पण्णत्ता ?, गोयमा! सक्करप्पभाए णं पुढवीए बत्तीसुत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहित्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे तीसुत्तरे जोयणसयसहस्से एत्थ णं सक्करप्पभाए पुढवीए नेरइयाणं पणवीसं निरयावाससयसहस्सा भवन्तीतिमक्खाया, ते णं निरया' इत्यादि, एवं गाथानुसारेणान्येऽपि पञ्चालापका वाच्या इति, एतदेवाह—'दोचाए' इत्यादि 'वियणाओ' इत्येतदन्तं सुगमं, नवरं 'गाहाहिं' ति गाथाभिः करणभूताभिर्गाथानुसारेणेत्यर्थः, भणितव्या-वाच्या नरकावासा इति प्रक्रमः, तथा 'पंचे य दसा य' त्ति मध्यमो वृत्त' शेषास्त्र्यस्त्रा इति, अथासुरावासविषयमभिलापं दर्शयति—

केवइया णं भंते! असुरकुमारावासा प० ?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठहत्तरि जोयणसयसहस्से एत्थ णं रयणप्पभाए पुढवीए चउसट्ठिं असुरकुमारावाससयसहस्सा प०, ते णं भवणा बाहिं वट्टा अंतो चउरंसा अहे पोक्खरकण्णिआसंठाणसंठिया उक्किण्णंतरविउलगंभीरखायफलिहा अट्टालयचरियदारगोउरकवाडतोरणपडिदुवारदेसभागा जंतमुसलमुसंढिसयग्घिपरिवारिया अउज्झा अडयालकोट्ठरइया अडयालकयवणमाला लाउल्लोइयमहिया गोसीससरसरत्तचंदणदद्दरदिण्णपंचंगुलितला कालागुरुपवरकुंदुरुक्कतुरुक्कडज्झंतधूवमघमघेंतगंधुद्धुयाभिरामा सुगंधिया गंधवट्टिभूया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया णिम्मला वितिमिरा विसुद्धा सप्पभा समिरीया सउज्जोआ पासाईया दरिसणिज्जा अभिरूवा

अट्टालका—प्राकारस्योपर्याश्रयविशेषाः चरिका—नगरप्राकारयोरन्तरमष्टहस्तो मार्गः पाठान्तरेण 'चतुरय'न्ति चतुरकाः सभाविशेषाः ग्रामप्रसिद्धाः 'दारगोउर'त्ति गोपुरद्वाराणि प्रतोल्यो—नगरस्यैव कपाटानि प्रतीतानि तोरणान्यपि तथैव प्रतिद्वाराणि—अवांतरद्वाराणि तत एतेषां द्वन्द्व एतानि देशलक्षणेषु भागेषु येषां तानि तथा, इह देशो भागश्चानेकार्थः, ततोऽन्योऽन्यमनयोर्विशेष्यविशेपणभावो दृश्य इति, तथा जंताणि—पाषाणक्षेपणयन्त्राणि मुशलानि प्रतीतानि मुसुंढ्यः—प्रहरणविशेषाः शतघ्न्यः—शतानामुपघातकारिण्यो महाकायाः काष्ठशैलस्तम्भयष्टयः ताभिः 'परिवारिय'त्ति—परिवारितानि परिकलितानीत्यर्थः तथा अयोध्यानि—योधयितुं—सङ्ग्रामयितुं दुर्गत्वान्न शक्यन्ते परबलैर्यानि तान्ययोध्यानि अविद्यमाना वा योधाः—परबलसुभटा यानि प्रति तान्ययोधानि, तथा 'अडयालकोट्ठगरइय'त्ति अष्टचत्वारिंशद्भेदभिन्नविचित्रच्छन्दगोपुररचितानि, अन्ये भणन्ति—अडयालिय (ल) शब्दः किल प्रशंसावाचकः, तथा अडयालकयवणमाल'त्ति अष्टचत्वारिंशद्भेदाभिन्नाः प्रशंसार्हाः कृता वनमाला—वनस्पतिपल्लवस्रजो येषु तानि तथा, 'लाइयं'ति यद्भूमेश्छगणादिनोपलेपनं 'उल्लोइयं'ति कुड्यमालानां सेटिकादिभिः सम्मृष्टीकरणं ततस्ताभ्यामिव महितानि,—पूजितानि लाउल्लोइयमहितानि, तथा गोशीर्ष—चन्दनविशेषः सरसं च—रसोपेतं यद्रक्तचन्दनं—चन्दनविशेषः ताभ्यां दर्दराभ्यां—घनाभ्यां दत्ताः पञ्चाङ्गुलयस्तला—हस्तकाः कुड्यादिषु येषु, अथवा गोशीर्षसरसरक्तचन्दनस्य सत्का दर्दरेण—चपेटाभिघातेन दर्दरेषु वा—सोपानवीथीषु दत्ताः-पञ्चाङ्गुलयस्तला येषु तानि गोशीर्षसरसरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलानि, तथा कालागुरुः—कृष्णागुरुर्गन्धद्रव्यविशेषः—प्रवरःप्रधानः कुन्दुरुकः—चीडा तुरुष्कः—सिल्हकं गन्धद्रव्यमेव एतानि च तानि 'डज्झंति'त्ति दह्यमानानि यानि तानि तथा तेषां यो धूमो 'मघमघेंत'त्ति अनुकरणशब्दोऽयं मघमघायमानो बहलगन्ध इत्यर्थः तेनोद्धुराणि—उत्कटानि यानि तानि तथा तानि च तान्यभिरामाणि-

जोयणसयाणि बहूणि जोयणसहस्साणि (बहूणि जोयणसयसहस्साणि) बहुइओ जोयणकोडीओ बहुइओ जोयणकोडाकोडीओ असंखेज्जाओ जोयणकोडाकोडीओ उड्ढं दूरं वीइवइत्ता एत्थ णं विमाणियाणं देवाणं सोहम्मीसाणसणकुमारमाहिंदबंभलंतगसुक्कसहस्सारआणयपाणयआरणअच्चुएसु गेवेज्जगमणुत्तरेसु य चउरासीई विमाणावाससयसहस्सा सत्ताणउइं च सहस्सा तेवीसं च विमाणा भवंतीतिमक्खाया, ते णं विमाणा अच्चिमालिप्पभा भासरासिवण्णाभा अरया नीरया णिम्मला वितिमिरा विसुद्धा सव्वरयणाम-या अच्छा सण्हा घट्ठा मट्ठा णिप्पंका णिक्कंकडच्छाया सप्पभा समरीया सउज्जोया पासाईया दरिसणिज्जा अभिरूवा पडिरूवा। सोहम्मे णं भंते! कप्पे केवइया विमाणावासा पण्णत्ता?, गोयमा! बत्तीसं विमाणावाससयसहस्सा पण्णत्ता, एवं ईसाणाइसु अट्ठावीसं बारस अट्ठ चत्तारि एयाइं सयसहस्साइं पण्णा स चत्तालीसं छ एयाइं सहस्साइं आणए पाणए चत्तारि आरणच्चुए तिन्नि सयाणि, सयाणि एवं गाहाहिं भाणियव्वं (सूत्र १५०)

'केवई'त्यादि सुगमं, नवरं तानि भवनानि बहिर्वृत्तानि वृत्तप्राकारावृतनगरवत् अन्तः समचतुरस्राणि तदवकाशदेशस्य चतुरस्रत्वात्, अधः पुष्करकर्णिकासंस्थानसंस्थितानि, पुष्करकर्णिका—पद्ममध्यभागः, सा चोन्नतसमचित्रबिन्दुकिनी भवतीति, तथा 'उत्कीर्णान्तर विपुलगम्भीरखातपरिखे'ति उत्कीर्णं—सम्मुत्कीर्य पालीरूपं कृतमन्तरं—अन्तरालं ययोस्ते उत्कीर्णान्तरे ते विपुलगम्भीरे खातपरिखे येषां तानि तथा, तत्र खातमध उपरि च समं परिखा तूपरि विशाला अधः सङ्कुचिता तयोरन्तरेषु पाली यत्रास्तीति भावः, तथा

प्पभाए चुलसीई नागकुमारावाससयसहस्सा भवन्तित्तिमक्खायंति, ते णं भवणा' इत्यादि. द्वीपकुमारादीनां तु षण्णां प्रत्येकं षट्सप्ततिर्वाच्येति। 'केवइया णं भंते! पुढवी' त्यादि गतार्थं, नवरं मनुष्याणां संख्यातानामेव गर्भव्युत्क्रान्तिकानां असंख्यातानामभावात् संख्याता एवावासाः सम्मूर्च्छिमानां त्वसंख्येयत्वेन प्रतिशरीरमावासभावादसंख्येयानि इति भावनीयमिति । 'केवइया णं भंते ! जोइसियाणं विमाणावासा' इत्यादि, 'अब्भुग्गयमुसियपहसिय' त्ति अभ्युद्गता-सञ्जाता उत्सृता-प्रबलतया सर्वासु दिक्षु प्रसृता या प्रभा-दीप्तिस्तया सिताः- शुक्ला इत्यभ्युद्गतोत्सृतप्रभासिताः, तथा विविधा-अनेकप्रकारा मणयः-चन्द्रकान्ताद्या रत्नानि-कर्केतनादीनि तेषां भक्तयो-विच्छित्तिविशेषास्ताभिश्चित्राः- चित्रवन्तः आश्चर्यवन्तो वेति विविधमणिरत्नभक्तिचित्राः, तथा वातोद्धूता-वातकम्पिता-विजयः-अभ्युदयस्तत्संसूचिका वैजयन्तीत्यभिधाना याः पताका अथवा विजया इति वैजयन्तीनां पार्श्वकर्णिका उच्यन्ते तत्प्रधाना या वैजयंत्यस्ताश्च तद्वर्जिताः पताकाश्च छत्रातिच्छत्राणि च-उपर्युपरिस्थितातपत्राणि तैः कलिता-युक्ता वातोद्धूतविजयवैजयन्तीपताका-छत्रातिच्छत्रकलिता इति, तुङ्गा-उच्चैस्त्वगुणयुक्ता, अत एव 'गगनतलमणुलिहंतसिहर' त्ति गगनतलं-अम्बरतलमनुलिखद्-अभिलङ्घयच्छिखरं येषां ते गगनतलानुलिखच्छिखराः, तथा जालान्तरेषु- जालकमध्यभागेषु रत्नानि येषां ते जालान्तररत्नाः, इह प्रथमाबहुवचनलोपो द्रष्टव्यः, जालकानि च भवनभित्तिषु लोके प्रतीतान्येव तदन्तरेषु च शोभार्थं रत्नानि सम्भवन्त्येवेति, तथा पञ्जरोन्मीलिता इव- पञ्जरबहिष्कृता इव, यथा किल किञ्चिद्वस्तु पञ्जराद्-वंशादिमयप्रच्छादनविशेषाद्बहिःकृतमत्यन्तमविनष्टच्छायत्वाच्छोभते एवं तेऽपीति भावः, तथा माणिकनकानां सम्बन्धिनी स्तूपिका-शिखरं येषां ते मणिकनकस्तूपिकाकाः, तथा विकसितानि यानि शतपत्रपुण्डरीकाणि द्वारादौ प्रतिकृतित्वेन तिलकाश्च भित्त्यादिषु पुण्ड्राणि रत्नमयाश्च ये अर्द्धचन्द्रा द्वाराग्रादिषु तैश्चित्रा ये ते विक-

रमणीयानीति समासः, तथा सुगन्धय-सुरभयो ये वरगन्धाः-प्रधानवासास्तेषां गन्धः-आमोदो येष्वस्ति तानि सुगन्धिवरगन्धकानि तथा गन्धवर्तिः-गन्धद्रव्याणां गन्धयुक्तिशास्त्रोपदेशेन निर्वर्तितगुटिका तद्भूतानि-तत्कल्पानीति गन्धवर्तिभूतानि प्रवरगन्धगुणानीत्यर्थः, तथा अच्छानि आकाशस्फटिकवत् 'सण्ह'त्ति श्लक्ष्णानि सूक्ष्मस्कन्धनिष्पन्नत्वात् श्लक्ष्णदलनिष्पन्नपटवत् 'लण्ह'त्ति श्लक्ष्णानि मसृणानीत्यर्थः, घुटितपटवत्, 'घट्ठ'त्ति घृष्टानीव घृष्टानि खरशाणया पाषाणप्रतिमावत् 'मट्ठ'त्ति मृष्टानीव मृष्टानि सुकुमारशाणया पाषाणप्रतिमेव शोधितानि वा प्रमार्जनिकयेव, अत एव 'नीरय'त्ति नीरजांसि रजोरहितत्वात् 'निम्मल'त्ति निर्मलानि कठिनमलाभावात् 'निप्पंक'त्ति निष्पङ्कानि निष्कलङ्कत्वात् 'वितिमिर'त्ति वितिमिराणि निरन्धकारत्वात् 'विसुद्ध'त्ति विशुद्धानि निष्कलङ्कत्वात् चन्द्रवत् सकलङ्कानीत्यर्थः तथा 'सप्पह'त्ति सप्रभाणि समप्रभाणि अथवा स्वेन-आत्मना प्रभान्ति-शोभन्ते प्रकाशन्त वेति सप्रभाणि यतः 'समिरीय'त्ति समरीचीनि-सकिरणानि, अत एव 'सउज्जोय'त्ति सहोद्योतेन-वस्त्वन्तरप्रकाशनेन वर्तन्ते इति सोद्योतानि 'पासाईय'त्ति प्रासादीयानि मनःप्रसत्तिकराणि 'दरिसणिज्ज'त्ति दर्शनीयानि, तानि हि पश्यतश्चक्षुषी न श्रमं गच्छतीति भावः, 'अभिरूव'त्ति अभिरूपाणि कमनीयानि 'पडिरूव'त्ति प्रतिरूपाणि द्रष्टारं द्रष्टारं प्रति रमणीयानि नैकस्य कस्यचिदेवेत्यर्थः, 'एत्थ' मित्यादि, यथाऽसुरकुमारावाससूत्रे तत्परिमाणमभिहितमेवमिति-तथा यद्भवनादिपरिमाणं यस्य नागकुमारादिनिकायस्य भवति-घटते तत्तस्य वाच्यमिति, किंविधं तस्य परिमाणमत आह-'जं जं गाहाहिं भणियं' यद्यद् गाथाभिः 'चउसट्ठिं असुराण'मित्यादिकाभिरभिहित, किं परिमाणमेव तथा वाच्यं नेत्याह 'तह चेव वण्णओ' त्ति यथा असुरकुमारभवनानां वर्णक उक्तस्तथा सर्वेषामसौ वाच्य इति, तथाहि 'कहि णं भंते! नागकुमारावाससयसहस्सा पण्णत्ता?, गोयमा! इमीसे णं रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एगं जोयणसहस्सं ओगाहेत्ता हेट्ठा चेगं जोयणसहस्सं वज्जेत्ता मज्झे अट्ठहत्तरे जोयणसयसहस्से एत्थ णं रयण-

य केवली। सुयसागरे य अरहा, आगमिस्साण होक्खई ॥ ८८ ॥ सिद्धत्थे पुण्णघोसे य, महाघोसे य केवली। सच्चसेणे य अरहा, आगमिस्साण होक्खई ॥८९॥ सूरसेणे य अरहा, महासेणे य केवली ॥ सव्वाणंदे य अरहा, देवउत्ते य होक्खई ॥ ९० ॥ सुपासे सुव्वए अरहा, अरहे य सुकोसले। अरहा अणंतविजए, आगमिस्सेण होक्खइ ॥९१॥ विमले उत्तरे अरहा, अरहा य महाबले। देवाणंदे य अरहा, आगमिस्सेण होक्खई ॥ ९२॥ एए वुत्ता चउव्वीसं, एरवयम्मि केवली। आगमिस्साण होक्खंति, धम्मतित्थस्स देसगा ॥ ९३ ॥ बारस चक्कवट्टिणो भविस्संति, बारस चक्कवट्टिपियरो भविस्संति, बारस मायरो भविस्संति, बारस इत्थीरयणा भविस्संति, नव बलदेववासुदेवपियरो भविस्संति, णव वासुदेवमायरो भविस्संति, णव बलदेवमायरो भविस्संति, णव दसारमंडला भविस्संति, उत्तमपुरिसा मज्झिमपुरिसा पहाणपुरिसा जाव दुवे दुवे रामकेसवा भायरो भविस्संति, णव पडिसत्तू भविस्संति, नव पुव्वभवणामधेज्जा णव धम्मायरिया णव णियाणभूमीओ, णव णियाणकारणा, आयाए एरवए आगमिस्साए भाणियव्वा, एवं दोसुंवि आगमिस्साए भाणियव्वा (सूत्रं १५८) इच्चेयं एवमाहिज्जंति, तंजहा–कुलगरवंसेइ य एवं तित्थगरवंसेइ य चक्कवट्टिवंसेइ य गणधरवंसेइ य इसिवंसेइ य जइवंसेइ य मुणिवंसेइ य सुएइ वा सुअंगेइ वा सुयसमासेइ वा सुयखंधेइ वा समवाएइ वा संखेइ वा सम्मत्तमंगमक्खायं अज्झयणन्तिबेमि ॥ (सूत्रं १५९) इति समवायं चउत्थमग समत्तम् ॥

'थविरे वेए'त्यादि, तत्र स्त्रीवेदः—पुंस्कामिता पुरुषवेदः—स्त्रीकामिता नपुंसकवेदः—स्त्रीपुंस्कामितेति, एते च पूर्वोदिता अर्थाः समवसरणस्थितेन भगवता देशिता इति समवसरणवक्तव्यतामाह—'तेणं कालेणं तेणं समएणं कप्पस्स समोसरणं णेयव्वं' इह गद्धारौ सप्तम्याः तृतीया भवत्ते इति प्राकृतत्वात् तस्मिन् काले सामान्येन दुष्षमसुषमालक्षणे तस्मिन् समये विशिष्टे यत्र भगवानेव विहरति स्मेति 'कप्पस्स समोसरणं नेयव्वं'ति इहावसरे कल्पभाष्यक्रमेण समवसरणवक्तव्यताऽभ्येया, सा चावश्यकोक्ताया न व्यतिरिच्यते, वाचनान्तरे तु पर्युषणाकल्पोक्तक्रमेणेत्यभिहितं, कियद्दूरमित्याह—'जाव गणे'त्यादि, तत्र गणधर' पञ्चमः सुधर्मास्यः सापत्यः शेषा निरपत्या—अविद्यमानशिष्यसन्ततय इत्यर्थः 'वोच्छिन्न'त्ति सिद्धा इति, तथाहि—'परिनिव्वुया गणहरा जीयन्ते नायए नव जणा उ। इन्दभूइ सुहम्मो य रायगिहे निव्वुए वीरे ॥ १ ॥' त्ति, अयं च समवसरणनायकः कुलकरवंशोत्पन्नो महा पुरुषश्चेति कुलकराणां वरपुरुषाणां च वक्तव्यतामाह—'जंबुद्दीवे' इत्यादि, सुगमं नवरं 'पढमेत्थ विमलवाहण चक्खुम जसम चउत्थमभिचंदे। तत्तो य पसेणइए मरुदेवे चेव नाभीय ॥ ३ ॥' त्ति तथा 'चंदजस चंदकंता सुरूव पडिरूव चक्खुकंता य। सिरिकंता मरुदेवी कुलगरपत्तीण नामाई ॥४॥' त्ति, तथा 'नाभी य जियसत्तू य जियारी संवरे इय। मेहे घरे पइट्ठे य, महसेणे य खत्तिए ॥५ सुग्गीवे दढरहे विण्हू वसुपुज्जे य खत्तिए। कयवम्मा सीहसेणे य भाणू विस्ससेणे इय ॥ ६ ॥ सूरे सुदंसणे कुंभे सुमित्तविजए समुद्दविजये य। राया य अस्ससेणे य सिद्धत्थे च्चिय खत्तिए ॥ ७ ॥' त्ति, तथा 'मरुदेवी विजयासेणा सिद्धत्था मंगला सुसीमा य पुहवी लक्खणा रामा नंदा विण्हू जया सामा ॥ ९ ॥ सुजसा सुव्वय अइरा, सिरिया देवी पभावई पउमा वप्पा सिवा य वामा तिसलादेवी य जिणमाया॥१०॥त्ति तथा 'सव्वोउगसमयाए छायाए'त्ति सर्वर्तुकया—सर्वेषु शरदादिषु ऋतुषु सुखदया

छायया प्रभया-आतपाभावलक्षणया युक्ता इति शेषः॥१७॥तथा 'सा हट्ठरोमकूवेहिं'ति सा शिविका यस्यां जिनोऽध्यारूढः हृष्टरोमकूपैः-उध्धुषितरोमभिरित्यर्थ ॥ १८ ॥ तथा 'चलचवलकुंडलधर'त्ति चलाश्च ते चपलकुण्डलधराश्चेति वाक्यं, तथा स्वच्छन्देन-स्वरुच्या विकुर्वितानि यान्याभरणानि-मुकुटादीनि तानि धारयन्ति ये ते तथेति ॥ १९ ॥ तथा असुरेन्द्रादय इति योगः 'गरुल'त्ति गरुड-ध्वजाः सुपर्णकुमारा इत्यर्थः ॥ २१ ॥ 'तथा सव्वेवि एगदूसेण निग्गया जिणवरा चउव्वीसं। न य णाम अण्णलिंगे नय गिहिलिंगे कुलिंगे य ॥ २२ ॥ त्ति 'दूसेण'त्ति एकेन वस्त्रेणेन्द्रसमर्प्पितेन नोपाधिभूतेन युक्ता निष्क्रान्ता इत्यर्थः न चान्यलिङ्गे-स्थविरकल्पि-कादिलिङ्गेन तीर्थकरलिङ्ग एवेत्यर्थः, कुलिङ्गे-शाक्यादिलिङ्गे, तथा 'एको भगवं वीरो पासो मल्ली य तिहि तिहि सएहिं। भयवंपि वासुपुज्जो छहिं पुरिससएहिं निक्खंतो ॥ २३ ॥ उग्गाणं भोगाणं राइण्णाणं च खत्तियाणं च। चउहिं सहस्सेहिं उसभो सेसा उ सहस्सपरिवारा ॥ २४ ॥ तथा 'सुमइत्थ निच्चभत्तेण निग्गओ वासुपुज्ज चोत्थेणं। पासो मल्लीविय अट्ठमेण सेसा उ छट्ठेणं ॥२५॥ ति, सुमतिरत्र नित्यभक्तेनानुपोषितो निष्क्रान्त इत्यर्थः, तथा 'संवच्छरेण भिक्खा लद्धा उसभेण लोगनाहेण। सेसेहि बीयदिवसे लद्धाओ पढमभिक्खाओ ॥ ३० ॥' त्ति तथा 'उसभस्स पढमभिक्खा खोयरसो आसि लोगनाहस्स। सेसाणं परमण्णं अमियरस-रसोवमं आसि ॥ ३१ ॥ 'सरीरमेत्तीओत्ति पुरुषमात्रा 'चेइयरुक्खे'ति बद्धपीठवृक्षा येषामधः केवलान्युत्पन्नानीति, 'बत्तीसं धणुयाइं' गाहा 'निच्चोउगो'त्ति नित्यं-सर्वदा ऋतुरेव-पुष्पादिकालो यस्य स नित्यर्तुकः 'असोगो'त्ति अशोकाभिधानो यः समवसरणभूमिमध्ये भवति, ओच्छन्नो सालरुक्खेणं'ति अवच्छन्नः शालवृक्षेणेत्यत एव वचनादशोकस्योपरि शालवृक्षोऽपि कथञ्चिदस्तीत्यवसीयत इति ॥ ३६ ॥ 'तिण्णेव गाउयाइं' गाहा, ऋषभस्वामिनो द्वादशगुण इत्यर्थः ॥ ३७ ॥ 'सवेइय'त्ति वेदिकायुक्ताः, एते चाशोकाः समवसरणसम्बन्धिनः सम्भाव्यन्त इति ॥ ३८ ॥ तथा 'भरहो सगरो मघवं सणंकुमारो य रायसद्दूलो। संती कुंथू य अरहो हवइ

परिमिते मञ्जुले—कोमले प्रलापश्च—आलापो हसितं च येषां ते मितमञ्जुलप्रलापहसिताः गम्भीरं-अदर्शितरोषतोषशोकादिविकारं मेघनादवद्रा मधुरं-श्रवणसुखकरं प्रतिपूर्णम्-अर्थप्रतीतिजनकं सत्यम्-अवितथं वचनं-वाक्यं येषां ते तथा, ततः पदद्वयस्य कर्म्म-धारयः अभ्युपगतवत्सलास्तत्समर्थनशीलत्वात् शरण्यास्त्राणकरणे साधुत्वात् लक्षणानि—मानादीनि वज्रस्वस्तिकचक्रादीनि वा व्यञ्ज-नानि-तिलकमषादीनि तेषां गुणा-महर्द्धिप्राप्त्यादयस्तैरुपेताः, शकन्ध्वादिदर्शनादुपपेताः—युक्ता लक्षणव्यञ्जनगुणोपपेता मानमुदकद्रो-णपरिमाणशरीरता, कथं?, उदकपूर्णायां द्रोण्या निविष्टे पुरुषे यज्जलं ततो निर्गच्छति तद्यदि द्रोणप्रमाणं स्यात् तदा स पुरुषो मानप्राप्त इत्य-भिधीयते, उन्मानं अर्द्धभारपरिमाणता, कथं?, तुलारोपितस्य पुरुषस्य यद्यर्द्धभारस्तौल्यं भवति तदाऽसावुन्मानप्राप्त उच्यते, प्रमाणमष्टोत्त-रशतमङ्गुलानामुच्छ्रयः, मानोन्मानप्रमाणैः प्रतिपूर्ण—अन्यूनं सुजातमागर्भाधानात् पालनविधिना सर्वाङ्गसुन्दरं - निखिलावयवप्रधानं अङ्गं शरीरं येषां ते तथा, शशिवत् सौम्याकारमरौद्रमबीभत्सं वा कान्तं-दीप्तं प्रियं जनानां प्रमोदोत्पादकं दर्शनं-रूपं येषां ते तथा, 'अमरिसण' त्ति अमसृणाः—प्रयोजनेष्वनलसाः अमर्षणा वा—अपराधेष्वपि कृतक्षमाः प्रकाण्ड—उत्कटो दण्डप्रकार-आज्ञाविशेषो नीतिभेदविशेषो वा येषां ते तथा, अथवा प्रचण्डो-दुःसाध्यसाधकत्वाद्दण्डप्रचारः-सैन्यविचरणं येषां ते तथा, गम्भीरा-अलक्ष्यमाणान्तर्वृत्तित्वेन दृश्यन्ते ये ते गम्भीरदर्शनीयाः, ततः पदद्वयस्य कर्म्मधारयः, प्रचण्डदण्डप्रचारेण वा ये गम्भीरा दृश्यन्ते तथा तालस्तलो वा वृक्षविशेषो ध्वजो येषां ते तालध्वजाः बलदेवा उद्विद्धः-उच्छ्रितो गरुडलक्षितः केतुः-ध्वजो येषां ते उद्विद्धगरुडकेतवो वासुदेवाः तालध्वजाश्च उद्विद्धगरुडके-तवश्च तालध्वजोद्विद्धगरुडकेतवः महाधनुर्विकर्षकाः महाप्राणत्वात् महासत्त्वलक्षणजलस्य सागरा इव सागरा आश्रयत्वान्महासत्त्वसागराः दुर्द्धरा रणाङ्गणे तेषां प्रहरतां केनापि धन्विना धारयितुमशक्यत्वात्, धनुर्धराः—कोदण्डप्रहरणाः, धीरेष्वेवैतेषु च ते पुरुषाः-पुरुषकारवन्तो न कातरेष्विति धीरपुरुषाः, युद्धजनिता या कीर्तिस्तत्प्रधानाः पुरुषा युद्धकीर्तिपुरुषाः, विपुलकुलसमुद्भवा इति प्रतीतं, महारत्नं—वज्रं

गस्य महाप्रमाणतया विघटका–अङ्गुष्ठतर्जनीभ्यां चूर्णका महारत्नविघटकाः, यत्र हि अधिकरण्यां धृत्वा अयोघनेनाऽऽस्फोट्यते न च भिद्यते तावेव भिन्दन्तीति, दुर्भेदं तदिति अथवा महती या रचना सागरशकटव्यूहादिना प्रकारेण सिसङ्ग्रामयिषोर्महासैन्यस्य रणरङ्गासिकतया महायत्नतया च विघटयन्ति— वियोजयन्ति ये ते महारचनाविघटकाः, पाठान्तरेण तु महारणविघटकाः, अर्द्धभरतस्वामिनः सौम्या नीरुजा राजकुलवंशतिलका अजिताः अजितरथाः, 'हलमुसलकणककपाणय' तत्र हलमुसले प्रतीते ते प्रहरणतया पाणौ-हस्ते येषां ते तथा बलदेवाः येषां तु कणका–बाणाः पाणौ ते शार्ङ्गधन्वानो वासुदेवाः, शंखश्च पाञ्चजन्याभिधानः चक्रं तु सुदर्शननामकं गदा च कौमोदकी संज्ञा लकुटविशेषः शक्तिश्च त्रिशूलविशेषो नन्दकश्च नन्दकाभिधानः खड्गस्तान् धारयन्तीति शङ्खचक्रगदाशक्तिनन्दकधराः वासुदेवाः, प्रवरो वरप्रभावयोगादुज्ज्वलः शुक्लत्वात् स्वच्छतया वा शुक्लकान्तः कान्तियोगात् पाठान्तरे सुकृतः–सुपरिकर्मितत्वात् विमलो मलवर्जितत्वात् कोत्थुभमपि–कौस्तुभाभिधानो यो मणिविशेषस्तं तिरीटमपि–किरीटञ्च मुकुटं धारयन्ति ये ते तथा, कुण्डलोद्योतिताननाः पुण्डरीकनयने येषां ते तथा, एकावली–आभरणविशेषः सा कण्ठे ग्रीवायां लगिता अवलम्बिता सती वक्षसि–उरसि वर्तते येषां ते एकावलीकण्ठलगितवक्षसः, श्रीवत्साभिधानं सुष्ठु लाञ्छनं महापुरुषत्वसूचकं वक्षसि येषां ते श्रीवत्सलाञ्छनाः, वरयशसः सर्वत्र विख्यातत्वात् सर्वर्तुकानि-सर्वर्तुसम्भवानि सुरभीणि–सुगन्धीनि यानि कुसुमानि तैः सुरचिता–कृता या प्रलम्बा आप्रदीपना सोभतपि–शोभमाना कान्ता कमनीया विकसन्ती–फुल्लन्ती चित्रा–पञ्चवर्णा वरा–प्रधाना माला–स्रक् रचिता–निहिता रचिता वा–मुरउक्खित्त वक्षसि येषां ते सर्वर्तुकसुरभिकुसुमरचितप्रलम्बशोभमानकान्तविकसच्चित्रवरमालारचितवक्षसः, तथा अष्टशतसङ्ख्यानि विभक्तानि–विविक्तरूपाणि यानि लक्षणानि–चक्रादीनि तैः प्रशस्तानि–माङ्गल्यानि सुन्दराणि च—मनोहराणि विरचितानि–विहितानि 'अंगमंग' त्ति अङ्गोपाङ्गानि शिरोऽङ्गुल्यादीनि येषां ते अष्टशतविभक्तलक्षणप्रशस्तसुन्दरविरचिताङ्गोपाङ्गाः,

तथा मत्तगजवरेन्द्रस्य यो ललितो—मनोहरो विक्रमः संचरणं तद्वद्विलासिता संजातविलासा गतिः—गमनं येषां ते मत्तगजवरेन्द्रललितविक्रमविलासितगतयः, तथा शरदि भवः शारदः स चासौ नवं स्तनितं-रसितं यस्मिन्निर्घोषे स नवस्तनितः स चेति समासः स चासौ मधुरो गम्भीरश्च यः क्रौञ्चनिर्घोषः—पक्षिविशेषनिनादस्तद्वद् दुन्दुभिस्वरो—वर्च स्वरो नादो येषां ते शारदनवस्तनितमधुरगम्भीरक्रौञ्चनिर्घोषदुन्दुभिस्वराः, इह च शरत्काले हि क्रौञ्चा माद्यन्ति मधुरध्वनयश्च भवन्तीति शारदग्रहणं, तथा पौनःपुन्येन शब्दप्रवृत्तौ तद्भङ्गादमनोज्ञता तस्य स्यादिति नवस्तनितग्रहणं स्वरूपोपदर्शनार्थं मधुरगभीरग्रहणमिति, तथा कटीसूत्रकं—आभरणविशेषस्तत्प्रधानानि नीलानि बलदेवानां पीतानि वासुदेवानां कौशेयकानि—वस्त्रविशेषभूतानि वासांसि-वसनानि येषां ते कटीसूत्रनीलपीतकौशेयवाससः, प्रवरदीप्ततेजसो वरप्रभावतया वरदीप्तितया च, नरसिंहा विक्रमयोगात् नरपतयः तन्नायकत्वात् नरेन्द्राः परमैश्वर्ययोगात् नरवृषभा उत्क्षिप्तकार्यभरनिर्वाहकत्वात् मरुद्वृषभकल्पाः-देवराजोपमा अभ्यधिकं शेषराजेभ्यः राजतेजोलक्ष्म्या दीप्यमानाः, नीलकपीतकवसना इति पुनर्भणनं निगमनार्थं, कथं ते नवेत्याह—'दुवे दुवे' इत्यादि, एवं च नव वासुदेवा नव बलदेवा इति, 'तिविट्ठे य'यावत्करणात् 'दुविट्ठे य, सयंभू पुरिसुत्तमे पुरिससीहे। तह पुरिसपुंडरीये दत्ते नारायणे कण्हे ॥ ५२ ॥ त्ति, 'अयले विजये भद्दे, सुप्पमे य सुदंसणे। आनंदे णंदणे पउमे रामे यावि अपच्छिमे ॥ ५३ ॥' त्ति कित्तीपुरिसाणं'ति कीर्त्तिप्रधानपुरुषाणामिति ॥ ५८ ॥ महुरा य कणगवत्थू सावत्थी पोयणं च रायगिहं। कायंदी कोसम्बी मिहिलपुरी हत्थिणपुरं च ॥ ५९ ॥ तथा 'गावि जुए संगामे तह इत्थी पराइओ रङ्गे। भज्जाणुराग गोट्ठी परइड्ढी माउया इय ॥ ६० ॥' त्ति तथा 'अस्सग्गीवे तारए मेरए महुकेढवे निसुंभे य। बलि पहराए तह रावणे य नवमे जरासंघे ॥ ६१ ॥' त्ति 'एए खलु पडिसत्तू कित्तीपुरिसाण वासुदेवाणं। सव्वेवि चक्क जोही सव्वेवि हया सचक्केहिं ॥ ६२ ॥' ति 'अणियाणकडा रामा सव्वेवि य केसवा नियाणकडा। उड्ढंगामी रामा केसव सव्वे अहोगामी

६४ ॥' ति 'आगमिस्साण'ति आगमिष्यता कालेन 'आगमेस्साण'ति पाठान्तरे आगमिष्यतां भविष्यतां मध्ये सेत्स्यन्ति ॥६५॥' त्ति जंबूद्वीपरवत अस्यामवसर्पिण्यां चतुर्विंशतिस्तीर्थकरा अभूवन्, तांश्च स्तुतिद्वारेणाह-तद्यथा-'चंदाणणं' गाहा० 'चन्द्रानन सुचन्द्रं अग्निसेन च नन्दिसेन च, ऋषिदासमसनोऽप्यय इष्यते, ऋषिदिन्न व्रतधारिण च वन्दामहे श्यामचन्द्रं च ॥ ६६ ॥ 'वन्दामि' गाहा, वन्दे युक्तिसेन क्वचिदय दीर्घबाहुर्दीर्घसेनो वोच्यते, अजितसेन कश्चिदयं शतायुरुच्यते, तथैव शिवसेन क्वचिदय सत्यसेनोऽभिधीयते, मस्यक्रियनि पूव पारगततत्त्व च देवशर्माण देवसनापरनामकं सतत सदा सद इति प्रकट निक्षिप्तशस्त्रं च नामान्तरतः श्रेयांस ॥ ६७ ॥ 'असंजल' गाहा, असंज्वल जिनवृषभं पाठान्तरेण स्वयंजल वंदे अनन्तकं जिनममितज्ञानीन सर्वज्ञमित्यर्थः, नामान्तरेणाय सिंहसेन इति,उपशान्तं च उपशान्तसंज्ञं धूतरजसं वन्दे खलु गुप्तिसेन च ॥६८॥'अइपासं' गाहा, अतिपार्श्वं च सुपार्श्वं देवेश्वरवन्दित च मरुदेव निर्वाणगत च धर-धरसंज्ञं प्रक्षीणदुःखं श्यामकोष्ठं च ॥ ६९ ॥ जिय' गाहा जितरागमग्निसेन महासेनमपरनामकं वन्दे धीभरजममप्रिपुत्र च व्यपकष्टप्रेमद्वेष च वारिषेण गतं सिद्धिमिति, स्थानान्तरे किञ्चिदन्यथाप्यानुपूर्वी नाम्नामुपलभ्यते ॥ ७० ॥ महापद्मादयो विजयान्तास्तु विंशति' ॥ ७५ ॥ एवमिद सर्वं सुगमं प्रपसमाप्ति यावत्, नवरं 'आयाए'त्ति बलदेवादेरायात देवलो कादभूतस्य मनुष्यभूतात् सिद्धिश्च यथा रामस्येति, एवं 'दोसुवि'त्ति भरतैरावतयोरागमिष्यन्तो वासुदेवादयो भणितव्या । इत्ये-पमनरूपापानुपदस्यापिकृतप्र यस यथापान्यभिधानानि दर्शयितुमाह—इत्येतदधिकृतशास्त्रमेवमनेनाभिधानप्रकारेणाऽऽख्यायते-अभिधीयते, तद्यथा—कुलकरवंशस्य-तस्प्रवाहस्य प्रतिपादकत्वात् कुलकरवंश इति च, इतिरुपदर्शने चशब्द समुच्चये, एवं तित्थगर वंसे यत्ति यथा दर्शन कुलकरवंशप्रतिपादकत्वात् कुलकरवंश इत्येतदाख्यायते एव दशसतीर्थकरवंशप्रतिपादकत्वात् तीर्थकरवंश इति च आम्नायत एतदिति, एव चक्रवर्तिवंश इति च तत्प्रतिपादकत्वात् दशारवंश इति च गणधरवंश इति च गणधरव्यतिरिक्ता:

शेषा जिनशिष्या ऋषयस्तद्वंशप्रतिपादकत्वादृषिवंश इति च तत्प्रतिपादनं चात्र पर्युषणाकल्पस्य ऋषिवंशपर्यवसानस्य समवसरण-प्रक्रमेण भणितत्वादत एव यतिवंशो मुनिवंशश्चैतदुच्यते, यतिमुनिशब्दयोः ऋषिपर्यायत्वात्, तथा श्रुतमिति चैतदाख्यायते, परोक्षतया त्रैकालिकार्थावबोधनसहत्वादस्य, तथा 'श्रुताङ्गमिति वा' श्रुतस्य-प्रवचनस्य पुरुषरूपस्याङ्ग-अवयव इतिकृत्वा, तथा 'श्रुतसमास इति वा, समस्तसूत्रार्थानामिह संक्षेपेणाभिधानात् 'श्रुतस्कन्ध इति वा,' श्रुतसमुदायरूपत्वादस्य 'समाए व' त्ति समवाय इति वा समस्तानां जीवानां-जीवादिपदार्थानामभिधेयतयेह समवायनात् मीलनादित्यर्थः, तथा एकादिसंख्याप्रधानतया पदार्थप्रतिपादनपरत्वादस्य संख्येति व्याख्यायते, तथा समस्तं-परिपूर्णं तदेतदङ्गमाख्यातं-भगवता, नेह श्रुतस्कन्धद्वयादिखण्डनेनाचारादिवदङ्गतेति भावः, तथा 'अज्झयणति'त्ति समस्तमेतदध्ययनमित्याख्यातं नेहोद्देशकादिखण्डनाऽस्ति शस्त्रपरिज्ञादिष्विवेति भावः, इति-शब्दः समाप्तौ 'ब्रवीमी'ति किल सुधर्म्मस्वामी जम्बूस्वामिनं प्रत्याह स, ब्रवीमि-प्रतिपादयामि, एतत् श्रीमन्महावीरवर्द्धमानस्वामिनः समीपे यदवधारितमित्यनेन गुरुपारम्पर्यमर्थस्य प्रतिपादितं भवति, एवं च शिष्यस्य ग्रन्थे गौरवबुद्धिरुपजनिता भवति, आत्मनश्च गुरुषु बहुमानो दर्शित औद्धत्यं च परिहृतं, अयमेवार्थः शिष्यस्य सम्पादितो भवति मुमुक्षूणां चायं मार्ग इत्यावेदितमिति समवायाख्यं चतुर्थमङ्गं वृत्तितः समाप्तम् ॥

नमः श्रीवीराय प्रवरवरपार्श्वाय च नमो, नमः श्री वाग्देव्यै वरकविसभाया अपि नमः ॥
नमः श्रीसङ्घाय स्फुटगुणगुरुभ्योऽपि च नमो, नमः सर्वस्मै च प्रकृतविधिसाहाय्यककृते ॥ १ ॥
यस्य ग्रन्थवरस्य वाक्यजलधेर्लक्षं सहस्राणि च, चत्वारिंशदहो चतुर्भिरधिका मानं पदानामभूत् ॥
तस्योच्चैश्चुलकाकृतिं निदधतः कालादिदोषात्तथा, दुर्लेखात् खिलतां गतस्य कुधियः कुर्वन्तु किं मादृशा. ? ॥२॥

गोण्ण समयकय वा ज वावि हविज्ज तदुभपण कय। त विंति नामपिण्ड ठवणापिण्ड अओ वोच्छ ॥३३४॥

तत्र नाम गोण्ण भवति यथा गुडपिण्ड इति, तथाऽन्यत् समयकृत भवति, समय–सिद्धान्तस्तेन कृत, यथा "से भिक्खू वा भिक्खुणी वा गाहावइकुल पिंडवायपडियाए पविट्ठे समाणे व जाणिज्जा असणं वा पाणग वा" इत्यादि यद्यप्यसौ पानकस्य ग्रहणमात्रस्य(कृते) प्रविष्टस्तथाऽप्यसौ पिण्डार्थे प्रविष्ट इत्युच्यते, एष समयसिद्धः पिण्डः, यद्वा नाम भवेदुभयेन कृत लोकलोकोत्तरकृत वा यन्नाम भवेत्, यथा "गाहावइकुलं पिंडवायपडियाए पविट्ठेण पिंडो चेव समुगाणं केरओ लद्धो' गुडपिंडो वा" तत्र लोके गुडपिण्डकः गुडपिण्डक एवोच्यते, समयेऽप्येवमेव पिण्डक एवोच्यते, तमेव गुणविशिष्ट सर्वमेव नामपिण्ड ब्रुवते, इत ऊर्ध्वं स्थापनापिण्डं वक्ष्ये इति ।

अक्खे वराडए वा कट्ठे पोत्थे व चित्तकम्मे वा। सब्भावमसब्भाव ठवणापिंड वियाणाहि ॥ ३३५ ॥

स्थापना द्विविधा–सद्भावस्थापना असद्भावस्थापना चेति, तत्राक्षविषया सद्भावस्थापना असद्भावस्थापना च भवति, कथं? यदा एक एवाक्षः पिण्डकल्पनया बुद्ध्या कल्प्यते तदाऽसद्भावस्थापना, यत्र पुनस्त एवाक्षास्त्रिप्रभृतय एकत्र स्थाप्यन्ते तदा सद्भावस्थापना, एव 'वराटकेषु' कपर्दकेषु, तथा काष्ठकर्मणि पुस्तकर्मणि चित्रकर्मणि चेति। यदेकमेव काष्ठ पिण्ड एव इत्येवं कल्प्यते तदाऽसद्भावस्थापना, यदा तु बहूनि एकत्र मिलितानि पिण्डत्वेन कल्प्यन्ते तदा सद्भावस्थापना, एव 'पुस्ते'

१ गोयरचर्य वा " क प १ भत्तपाणं वा क १। २ केरओ का प १। ३ पव्यावा भा । ४ चेति भा ।

पुत्तलिकादिष्वपि एवं चित्रकर्मण्यपि, यदैकचित्रकर्मणि पुत्तलकपिण्ड इति स्थाप्यते तदाऽसद्भावपिण्डस्थापना, [2]यत्र त्रिप्रभृति पिण्डबुद्ध्या कल्प्यते तदा सद्भावस्थापना, एवं सद्भावपिण्डमसद्भावपिण्डं च जानीहि । इदानीं द्रव्यपिण्डस्य ज्ञशरीरभव्यशरीरव्यतिरिक्तस्य प्रतिपादनायाह—

**तिविहो य दव्वपिंडो सच्चित्तो मीसओ य अच्चित्तो । अच्चित्तो य दसविहो सच्चित्तो मीसओ नवहा ॥३३६**

त्रिविधो द्रव्यपिण्डः—सचित्तोऽचित्तो मिश्रश्चेति । तत्र योऽसावचित्तः स दशविधः, सचित्तो नवप्रकारः, मिश्रश्च नवधा ॥ तत्राचित्तपिपिण्डप्रतिपादनायाह—

**पुढवी आउक्काए तेउवाऊवणस्सई चेव । बिअतिअचउरो पंचिंदिया य लेवो य दसमो उ ॥ ३३७ ॥**

पृथिवीकायपिण्डः अप्कायपिण्डस्तेजस्कायपिण्डः वायुकायपिण्डः वनस्पतिकायपिण्डः द्वीन्द्रियकायपिण्डः त्रीन्द्रियकायपिण्डः चतुरिन्द्रियकायपिण्डः पञ्चेन्द्रियकायपिण्डः पात्रकार्थं लेपपिण्डश्चेति दशमः । एवमयं दशप्रकारोऽचित्तपिण्डः, इदानीं योऽसौ अचित्तः पृथिवीकायादिपिण्डः स सचित्तपूर्वको भवतीति कृत्वा स एव प्रथमं सचित्तपिण्डः प्रतिपाद्यते, तथोपन्यासोऽपि सचित्तस्यैव प्रथमं कृतः, तथा योऽसौ सचित्तो मिश्रश्च एकैको नवप्रकार उक्तः सोऽप्य[3]नेन क्रमेण व्याख्यातो भवतीति कृत्वा पूर्वं सचित्तं व्याख्यानयन्नाह—

---

१ धीवल्लिकादौ पुत्त° आ. ल. २ पा २ । २ यदा आ. ब १ । ३ °प्यनेनैव क्रमेण आ. ल. २ ।

पुढविक्काओ तिविहो सच्चित्तो मीसओ य अचित्तो। सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥३३८॥

पृथिवीकायस्त्रिविधः सचित्तो मिश्रोऽचित्तश्च । तत्र सचित्तो द्विविधः—निश्चयसचित्तो व्यवहारसचित्तश्च ।

निच्छयओ सच्चित्तो पुढविमहापव्वयाण बहुमज्झे । अच्चित्तमीसवज्जो सेसो ववहारसच्चित्तो ॥ ३३९ ॥

निश्चयतः सचित्तः पृथिवीनां—रत्नशर्कराप्रभृतीनां संबन्धी यः 'महापर्वतानां' हिमवदादीनां च 'बहुमध्ये' मध्यदेशभागे । इदानीं व्यवहारसचित्तप्रतिपादनायाह—अचित्तवर्जो मिश्रवर्जश्च, एतदुक्तं भवति—योऽचित्तो न भवति न च मिश्रः स व्यवहारतः सचेतन इति, स चारण्यादौ भवति यत्र वा गोमयादिर्नास्ति । उक्तः सचित्तः पृथिवीकायः, इदानीं मिश्रपृथिवीकाय प्रतिपादनायाह—

खीरदुमहिट्ठ पथे कट्ठोल्ला इंधणे य मीसो य । पोरिसी एगदुगतिग बहुइंधणमज्झथोवे य ॥ ३४० ॥

'क्षीरद्रुमा'[1]—उदुम्बरादयस्तेषामधो यः पृथिवीकायः स मिश्रः, ते हि क्षीरद्रुमाः मधुरस्वभावा भवन्ति, पथि च मिश्रः पृथिवीकायः, 'कट्ठोल्ला'त्ति हलकृष्टो यः पृथिवीकायस्तस्य भावेन आर्द्रश्च शुष्कश्च कश्चिन्मिश्रः पृथिवीकायः 'इंधणे य'त्ति इन्धनं—गोमयो मण्यते, तस्य कुम्भकारेण सद्भावो आमिश्रो तेण मिश्रितो संतो पृथिवीकायो मिश्रो भवति, कियत्कालं यावत्? अत आह—'पोरिसीएगदुगतिग' यथासंख्येन 'बहुइंधणमज्झथोवेसु' (थोवे य) यदि बहु इन्धन स्वल्पः

१ भवन्ति क १-२ ।

पृथिवीकायस्ततः पौरुषीमात्रं यावत् मिश्रो भवति, मध्ये तु इन्धने अर्द्धमिन्धनस्य अर्द्धं पृथिवीकायस्य यत्र स पौरुषीद्वितयं यावन्मिश्रः, स्वल्पेन्धनस्तु पृथिवीकायः पौरुषीत्रयं यावन्मिश्रो भवति। उक्तो मिश्रः, इदानीमचित्त उच्यते, स चैवं भवति—

**सीउण्हखारखत्ते अग्गीलोणूसअंबिले नेहे। वक्कंतजोणिएणं पओयणं तेणिमं होइ[1] ॥ ३४१ ॥**

शीतशस्त्राभिहतः, उष्णशस्त्राभिहतः, क्षारः-तिलक्षारादिस्तेनाभिहतो यः, क्षत्रशस्त्रेणाभिहतः, क्षत्रं-करीषविशेषः, अग्निशस्त्राभिहतः, लवणशस्त्राभिहतः, ऊषशस्त्राभिहतः[2], काञ्जिकशस्त्राभिहतः, स्नेहेन-घृतादिना शस्त्रेणाभिहतः सन् यो व्युत्क्रान्तयोनः[3] अथवा वक्कंतजोणियेणं केचित्पठन्ति, तत्रायमर्थः-व्युत्क्रान्ता अपगता योनिः स्वयमेव यस्य पृथिवीकायस्य, तेन च 'इदं' वक्ष्यमाणं प्रयोजनं भवति। किं तत्प्रयोजनमित्यत आह—

**अवरद्धिग विसबंधे लवणेण व सुरभिउवलएणं वा। अच्चित्तस्स उ गहणं, पओयणं होइ जं चऽन्नं ॥३४२**

अवरद्धिगा-लूताफोडिआ तस्यां लूतास्फोटिकायामुत्थितायां दाहोपशमार्थमचेतनेन पृथिवीकायेन परिषेकः क्रियते, यदि वा अवरद्धिगा-सर्पदंशस्तस्मिन् परिषेकादि क्रियते, दंशे विषे वा पतिते सति तयाऽचेतनया मृत्तिकया बन्धो वा दीयते, लवणेन वा प्रयोजनमचित्तेन भवति, 'सुरभिउवलएणं व'त्ति गन्धारोहकेणापि किञ्चित्प्रयोजनं भवेत्पामादौ[4], एभिः प्रयोजनै-रचेतनस्य पृथिवीकायस्य ग्रहणं भवति-प्रयोजनं भवति। इदं च वक्ष्यमाणलक्षणमन्यत्—

१ होंति जा.। २ (अवस्यायशस्त्राभिहत) काञ्जिक° आ.। ३ °योनिकः, आ. क. १ पा. १-२। ४ भवत्यामादौ, आ.।

ठाणनिसीयणतुयट्टण उच्चाराईण चेव उस्सग्गो। घट्टगडगललेवो एमाइ पओयण बहुहा ॥ ३४३ ॥

स्थान—कायोत्सर्गः सोऽचेतने पृथिवीकाये क्रियते, निषीदनम्—उपवेशनम् त्वग्वर्तन च क्रियते उच्चारादीनां चोत्सर्गः क्रियते, 'घट्टग'त्ति घट्टका—पाषाणकः येन पात्रकं लेपितं सद् घृष्यते, तथा डगलकाः अपानप्रोञ्छनार्थं लेपश्च पात्रकाणां, एवमादि प्रयोजनमचित्तेन पृथिवीकायेन भवति। उक्तः पृथिवीकायः, इदानीमप्काय उच्यते, असावपि त्रिविधः सचित्त मिश्राचित्तभेदतः, तत्र सचित्तप्रतिपादनायाह—

घणउदहीघणवलया करगसमुद्द्दहाण बहुमज्झे। अह निच्छयसच्चित्तो ववहारनयस्स अगडाई ॥ ३४४

घनोदधयो रत्नप्रभापृथिव्यादीनां घनवलयानि च करकाश्च एतेषु निश्चयात् सचित्तोऽप्कायः समुद्रबहुमध्ये—मध्यप्रदेशे ह्रदमध्ये च निश्चयतः सचेतनः, व्यवहारनयतश्च पुनरगडोदो—कूपादौ योऽप्कायः स व्यवहारतः सचित्तः। इदानीं मिश्र प्रतिपादनायाह—

उसिणोदगमणुवत्ते दण्डे वासे य पडियमेत्ते य। मोत्तूणाएसतिग चाउलउदग बहुपसन्न ॥ ३४५ ॥

उष्णोदकमनुवृत्ते दण्डे मिश्र भवति, तत्थ य मज्झे जीवसंघाओ पिंडीभूओ अच्छइ पच्छा उवरि सो परिणमइ, सो जीव न

1-मिश्रमर्चे च आ. क २-आ १-२। २ विश्रवतः आ प १-२। ३ निश्चयतो आ. क २ पा २। ४ भवस्य आ क १ पा १-२। ५ चैतो कृपादी प. १-२। ६ चाप परि आ।

परिणमइ ताव मीसो,वासे य पडियमित्ते–वर्षे च पतितमात्रे मिश्रो भवत्यप्कायः,तन्दुलोदके व्यवस्था का ? इति चेत् तदुच्यते, 'मोत्तूण' इत्यादि,तदपि मिश्रं, चाउलोदगं बहु प्रसन्नं सदचेतनं भवति आदेशत्रितयं मुक्त्वा तदनेकान्तान् ॥ के च ते आदेशाः ?

**आएसतिगं बुब्बुय बिन्दू तह चाउला न सिज्झंति । मोत्तूण तिण्णि एए चाउलउदगं बहु पसण्णं ॥३४६**

केई भणंति–जाव बुब्बुया न फिट्टंति ताव तं मीसं, अण्णे भणंति–भंडयलग्गा बिंदुणो ण सुकंति जाव ताव मीसं, अण्णे भणंति–जाव चाउला न सिज्झंति ताव मीसं, एते अणाएसा, जम्हा एयाणि तिण्णि वत्थूणि कयाइ चिरेण होंति कयाइं सिग्घतरं चेवं होति आहारवसाओ, तम्हा चाउलोदगं जदा बहुपसन्नं होइ तदा तं अचित्तं भवइ, अथवा मुक्त्वा तन्दुलोदकं बहुप्रसन्नं यदन्यदादेशत्रितयं प्रतिपादितं तन्मिश्रं द्रष्टव्यमिति । उक्तो मिश्रोऽप्कायः, इदानीमचित्तप्रतिपादनायाह—

**सीउण्हखारखत्ते अग्गीलोणूसअंबिले नेहे । वक्कंतजोणिएणं पओयणं तेणिमं होंति ॥ ३४७ ॥**

पूर्ववत् । तेन चाचित्ताप्कायेन इदं प्रयोजनम्—

**परिसेयपियण हत्थाइधोवणे चीरधोवणा चेव । आयमण भाणधुवणं, एमाइ पओयणं बहुहा ॥३४८॥**

परिषेकः–सेचनं व्रणकुष्ठाद्युत्थिते सति क्रियते, तथा पानं हस्तादिधावनं चीरधावनं च क्रियते, तथा आचमनं भाजन–

---

१ का ?, तदु° आ क १–२ । २ बहु आ पा १–२ । ३ चेय आधारवशात्, तम्हा आ. क. १–२ पा. १ । ४ °वनं क्रियते–आ. । ५ कुष्ठा° आ पा १–२ ।

प्रक्षालन च क्रियते, एवमादीनि प्रयोजनानि बहुधा भवन्ति । इदानीं चीरप्रक्षालन क्रियत इत्युक्त तच्च ऋतुबद्धे न कर्तव्यं, अथ क्रियते तत एते दोषा भवन्ति—

✓उउबद्धधुवण बाउस बंभविणासो अठाणठवण च। संपाइमवाउवहो पलवण आतोपघातो य ॥३४९॥

ऋतुबद्धः—शीतकालोष्णकालौ मिलितावेव मण्येते, तत्र यदि चीवराणां धावन क्रियते ततो बाकुशिको भवति विभूषणशील इत्यर्थः, यदा च विभूषणशीलो भवति तदा ब्रह्मविनाशो भवति, तथा अस्थानस्थापन च भवति, यदुत नूनमय कामी तेनात्मन मण्डयति तत्मास्थानस्थापनम्—अयोग्यतास्थापनं भवतीति, तथा संपातिमसत्त्वानां वायोश्च वधो भवति तथा प्लवनेन च सत्त्ववधो भवति, तथाऽऽत्मोपघातश्च भवति हस्ते कण्टकपतनादिति । आह—यद्येव न धावितव्यान्येव चीवराणि, उच्यते, वर्षाकाले प्रक्षालयितव्यानि, अथ न प्रक्षाल्यन्ते तत एते दोषा भवन्ति—

✓अइभारचुडणपणए सीयलपाउरण अजीरगेलन्ने। ओभावणकायवहो वासासु अधोवणे दोसा॥३५०॥

मलेनातिगुरूणि भवन्ति तथा 'चुडण'त्ति जीर्यन्ते पनकश्च तत्र लगति पनकः—फुल्ली, शीतलप्रावरणे चाजीर्णं भवति, ततश्च ग्लानता भवति, तथा 'ओभावणा' परिभवो भवति कायवधश्च भवति, तानि हि आर्द्राणि अपोवन्ति सन्ति अप्कायादि विनाशयन्ति, एते वर्षास्वधावने दोषा भवन्तीति । कदा पुनस्तत्प्रक्षालन कार्यमित्याह—

1 शीतोष्णकालौ मिलितावपि नैव मण्यते खा.। 2 शीलस्तदा खा। 3 मध्यामन्न खा च 1 पु.।

**अप्पत्ते च्चिय वासे सव्वं उवहिं धुवंति जयणाए। असइए व दवस्स उ जहन्नओ पायनिज्जोगो।३५१।**

अप्राप्ते एव वर्षाकाले अर्द्धमासमात्रेण सर्वमुपधिं प्रक्षालयन्ति यतनया। अथोदकं प्रासुकं प्रचुरं नास्ति ततो जघन्येन 'पात्रनिर्योगं' पात्रकोपकरणं प्रक्षालनीयं येन गृहस्था भिक्षां प्रयच्छन्तो न जुगुप्सन्ते इति। आह—किं सर्वेषां वर्षपर्यन्त एवोपधिः प्रक्षाल्यते ?, न इत्यत आह—

**आयरियगिलाणाणं मइला मइला पुणोवि धोवंति। मा हु गुरूण अवन्नो लोगंमि अजीरणं इयरे ॥३५२**

सुगमा ॥ नवरं 'अजीरणं इयरे'त्ति इतरेषां ग्लानानां चीवराणि प्रक्षालनीयानि, यदि न प्रक्षाल्यन्ते ततोऽजीर्णं भवति। इदानीमुपधिप्रक्षालनकाले कानि न विश्रामणीयानि ? इत्येतत्प्रदर्शयन्नाह—

**पायस्स पडोयारं दुनिसिज्ज तिपट्टपोत्ति रयहरणं। एते ण उ विस्सामे जयणा संकामणा धुवणं ॥३५३॥**

पात्रकस्य 'पडोयारं' परिकरं पात्रबन्धादिकं न विश्रामयेत्, तथा 'दुन्निनि( दुनि )सिज्ज'त्ति रजोहरणनिषद्याद्वयं एका और्णिकी बाह्यनिषद्या द्वितीया मध्यवर्त्तिनी क्षौमी निषद्या, एतद्द्वयं न विश्रामणीयं। 'तिपट्ट'त्ति एकः संस्तारपट्टको द्वितीय उत्तरपट्टकः तृतीयश्चोलपट्टकः, 'पोत्ति'त्ति मुखवस्त्रिका 'रयहरणं'ति रजोहरणं प्रसिद्धमेव, एतानि न विश्रामयेत्, यतो

१ सर्वेषा आ। २ °जीरण ल १–२। ३ इत्याह–आ पा. १–२। ४ °करणं आ.। ५ क्षोमनिषद्या इद द्वय आ. पु पा. १–२।

ना चान्यत्नुपभोग्यानि सन्ति। तत्र च षट्पदसङ्क्रामणं कथं क्रियते इत्यत आह—'अथवा संकामणा' यतना मन्नान्तरितेन हस्तेनान्यस्मिन् वस्त्रे षट्पदीः सङ्क्रामयति ततो धावनं करोतीति। इदानीं शेषमुपधिं विश्रामयतः को विधिरित्यत आह—

अब्भिंतरपरिभोगं उवरिं पाउणइ णातिदूरे य। तिन्नि य तिन्नि य एक्कं निसिं तु काउं परिच्छिज्जा ॥३५४॥

'अभ्यन्तरपरिभोगं' क्षौमकल्पं शेषकल्पयोरुपरि प्रावृणोति, कति रात्रयः? तिस्र इति वक्ष्यति, तथा नातिदूरे धारमासन्ने स्मोपरि कीलकादौ तमेव कल्पं स्थापयति, 'तिन्नि य तिन्नि य' त्ति पदद्वयं योजितमेव द्रष्टव्य, 'एक्कं निसिं तु काउ'त्ति एकां रात्रिमा-सप्तरात्राः कृत्वा पुनश्च शरीरे मन्न—प्रावृत्य परीक्षणीयं, यदि षट्पदा न लगन्ति ततः प्रक्षालनीयमिति ॥ 'परिच्छिज्ज'त्ति एवं सप्त दिनानि परीक्षा कर्तव्या। अथवा 'परिच्छिज्ज'त्ति एवं

केई एक्केक्कनिसिं संवासेउं तिहा परिच्छंति। पाउणिय जइ ण लग्गंति छप्पया ताहे धोविज्जा ॥३५५॥

केचनाचार्या एवमाहुः—'एक्केक्कनिसिं संवासेउं'त्ति अयमत्रार्थः—तमभ्यन्तरं कल्पं क्षौममितरकल्पयोरुपरि एकां रात्रिं प्रावृणोति, पुनरपरस्यां रात्रावासन्ने करोति, पुनरपरस्यां रात्रौ मारमोपरि कीलकादौ लम्बमानं करोति, एवं त्रिरात्र पावत्परीक्ष्यते पश्चाच्च त कल्पं पुनः प्रावृणोति, प्रावृते च कल्पे यदि न लगन्ति षट्पदास्तदा धावयेत्—प्रक्षालयेत्। ते च

१ वस्त्रमर्थ आ.। २ कथमित्याह—आ. क २ पा १–२। ३ विधिमाह—आ। ४ न न एवं आ। ५ परिच्छेज्जा आ पा १। ६ मोचीयतः प्रा आ. पु.। ७ कतराः ? तिस्र आ। ८ नास्त्यासन्ने आ.। ९ च एव कल्पः स्थाप्यते आ पा १–२। १ आर्ट क १ आर्ट पु.। ११ पाउणिय जइ ण लग्गंति आ। १२ स्थापयति आ क १।

प्रक्षालयन्तः—

**निव्वोदगस्स गहणं केई भाणेसु असुइ पडिसेहो। गिहिभायणेसु गहणं ठियवासे मीसिअं छारो ॥३५६॥**

ते च साधवश्चीवरप्रक्षालनार्थं नीव्रोदकस्य ग्रहणं कुर्वन्ति, तत्राह[1]–'केई भाणेसु'त्ति केचनैवं ब्रुवते यदुत 'भाजनेषु' पात्रेषु नीव्रोदकग्रहणं कार्यं, आचार्य आह–'असुइ' लोका एवं भणन्ति, यदुत अशुचय एते, ततश्च प्रतिषेधं कुर्वन्ति। क्व पुनर्ग्राह्यमित्यत आह–'गिहिभायणेसु' गृहस्थसत्केषु भाजनेषु–कुण्डादिषु भाजनेषु गृह्यते, कदा?–'ठियवासे' स्थिते प्रवर्षणे–थक्के वरिसियव्वे, 'मीसगं(सिअं)'ति अथ तत्र प्रवर्षति पर्जन्ये गृह्यते ततो गृह्णतो मिश्रं भवत्यन्तरिक्षोदकपातात् तस्मात्स्थिते प्रवर्षणे ग्राह्यं, गृहीत्वा[2] च क्षारः क्षेपणीयो येन सचित्ततां न याति। कस्य पुनः प्रथममुपधिः प्रक्षालनीय इत्यत आह—

**गुरुपच्चक्खाणगिलाणसेहमाईण धोवणं पुव्वं। तो अप्पणो पुव्वमहाकडे य इतरे दुवे पच्छा ॥ ३५७ ॥**

प्रथमं गुरोरुपधिः प्रक्षालनीयः[3] ततः 'पच्चक्खाय'त्ति प्रत्याख्यानी[4] अनशनस्थस्तस्योपधिः प्रक्षाल्यते समाधानार्थं ततो ग्लानस्य पश्चात्सेहस्य[5]ावधिप्रक्षालनं मा भून्मलपरीषहपीडया चित्तभङ्गः, एवमेतेषां पूर्वमुपधिः प्रक्षाल्यते तत आत्मनः प्रक्षालयत्युपधिम्। इदानीं कानि प्रथमं प्रक्षालनीयानि? इत्यत आह–'पुव्वमहाकडे य'त्ति यानि एकखण्डानि अतूर्णितानि यथाकृतानि[6]

---

१ अथाऽत्र आ ल २ पा १। २ गृहीते च आ पा. १। ३ प्रक्षाल्यते आ क. २ पा. २। ४ °ख्याता आ क. २ पा. २। ५ °हस्य मा आ. ल. २ पा. १। ६ च तानि यथा° आ क २ पा १–२।

एवं प्रक्षालयति, 'इयरे इमे पच्छ'त्ति इतरौ द्वौ वस्त्रमेदौ पश्चात्प्रक्षालयति, एकान्यत्वपरिकर्माणि—यानि कचिन्मनाक् तूर्णितानि अन्यानि बहुपरिकर्माणि यानि द्विधा सीवितानि तूर्णितानि च, स्वल्पपरिकर्माणि च क्षालयित्वा ततो बहुपरिकर्माणि क्षालयति।

अच्छोडपिट्टणासु य ण धुवे धोते पतावण न करे। परिभोगमपरिभोगे छाया तव पेह कच्छाण ॥२५८॥

इदानीं स साधुः प्रक्षालयन् कर्पटानि नाच्छोटयति रजकवत्, नापि च पिट्टयति काष्ठपिट्टनेन स्त्रीवत्, किन्तु हस्तेन मनाग्पतनगा धावनं करोति, धौतानि च वस्त्राणि आतपे न प्रतापयति, मा भूत्तत्र काचित् षट्पदी स्यात्, कानि पुनरातपे कर्त्तव्यानि कानि वा न कर्त्तव्यानि? इत्याह 'परिभोगमपरिभोगे'त्ति तानि कर्पटानि द्विविधानि भवन्ति—परिभोग्यानि अपरिभोग्यानि च, तत्र यथासङ्ख्येन छायातपयोः कर्त्तव्यानि, परिभोग्यानि छायायां शोष्यन्ते, मा भूत्तत्र षट्पदी स्यात्, अपरिभोग्यान्यातपे शोषयति, 'पेह'त्ति तानि च कर्पटानि शुष्यन्ति सन्ति निरूपयत्यपहरणभयात्। 'कच्छाण'त्ति पश्चात्तस्य प्रक्षालनप्रत्ययमेककल्पायकं प्रायश्चित्तं दीयते उत्कोऽप्कायः, इदानीमग्निकाय उच्यते—

इट्टगपागाईण बहुमज्झे विज्जुयाइ निच्छइओ। इंगालाई इयरो मुम्मुरमाई य मीसो उ ॥ २५९ ॥

अग्नावपि त्रिविधः सचित्तादिभेदेन, तत्र सचित्त इष्टकापाकादीनां बहुमध्ये विद्युदादिको नैश्चयिको भवति, अङ्गारादिकेतरो व्यावहारिकः मुर्मुरादिकः—उल्मुकादिर्मिश्रो भवति। इदानीमचित्ताग्निकायस्योपयोगमचित्ताग्निशरीरोपयोगं च दर्शयन्नाह—

१ तवे पेह'त्ति का पा. १-२। २ 'कच्छाण' का.। ३ तत्र सचित्त इट' का पा १।

**ओदणवंजणपा[1]णगआयामुसिणोदगं च कुम्मासा । डगलगसरक्खसूई पिप्पलमाई य परिभोगो ॥३६०॥**

ओदनं–कूरादि व्यञ्जनं–तिम्मणं पानकं–आचाम्लं आयामं–अवश्रावणं उष्णोदकं कुल्माषाश्च, एतानि अग्नेर्निर्वर्त्यानि कार्याणि, ततश्चैभिरुपयोगः क्रियते । इदानीमग्निनिर्वर्त्तितशरीरोपभोगं दर्शयन्नाह–डगलका–इष्टकाखण्डा अतीव पक्वाः सरक्खो–भस्मसूच्यः पिप्पलकः–क्षुरकः, एवमादिभिश्चित्तैरग्निशरीरैरुपयोगः क्रियते, अग्निशरीराणि च द्विविधानि भवन्ति–बद्धेल्लयाणि मुक्किल्लयाणि च, तत्रात्र मुक्किल्लयाणि द्रष्टव्यानि । इदानीं वायुकाय उच्यते, असावपि त्रिविधः सचित्तादिरूपः, तत्र नैश्चयिकसचित्तप्रतिपादनायाह—

**सवलयघणतणुवाया अतिहिमअतिदुद्दिणे य निच्छइओ । ववहार पा[2]इणादी अक्कंतादी य अच्चित्तो॥३६१**

सह वलयैर्वर्त्तन्त इति सवलया घनवाताश्च तनुवाताश्च सवलयाश्च ते घनतनुवाताश्च सवलयघनतनुवाता निश्चयतः सचित्ताः । तथाऽतिहिमपाते यो वायुरतिदुर्दिने च यो वायुः स नैश्चयिकः सचित्तः, व्यवहारतः पुनः प्राच्यादि–पूर्वस्यां यो दिशि, आदिग्रहणादुत्तरादिग्रहणपरिग्रहः, एतदुक्तं भवति–अतिहिमअतिदुर्दिनरहितो यः प्राच्यादिवायुः स व्यवहारतः सचित्तः। इदानीमचित्तः 'अक्कंताई य अच्चित्तो' त्ति यः कर्दमादावाक्रान्ते सति भवति सोऽचित्तः, स च पञ्चधा–अक्कंते धंते पीलिए सरीराणुगए संमुच्छिमे, तत्थ अक्कंतो चिक्खिलाइसु, धंतो दतियाइसु, पीलिओ पोत्तचम्माईसु, सरीराणुगओ ऊसासनीसासवाऊ उदरत्था-

1 °कजिभआया° ल. २ । 2 पायमाई आ पा. १ ।

पूर्वं प्रक्षालयति, 'इयरे दुवे पच्छ'त्ति इतरौ द्वौ पात्रभेदौ पश्चात्प्रक्षालयति, एवमन्यस्यपरिकर्माणि—यानि कचिन्मनाक् तुर्णितानि अन्यानि बहुपरिकर्माणि यानि द्विधा सीवितानि तुर्णितानि च, स्वल्पपरिकर्माणि च क्षालयित्वा ततो बहुपरिकर्माणि क्षालयति।

अच्छोडपिट्टणासु य ण धुवे धोवे पतावण न करे। परिभोगमपरिभोगे छाया तव पेह कल्लाण ॥२५८॥

इदानीं स साधुः प्रक्षालयन् कर्पटानि नाच्छोटयति रजकवत्, नापि च पिट्टयति काष्ठपिट्टनेन स्त्रीवत्, किन्तु हस्तेन मनाग्यतनया धावनं करोति, धौतानि च वस्त्राणि आतपे न प्रतापयति, मा भूदत्र काचित् षट्पदी स्यात्, कानि पुनरातपे कर्त्तव्यानि कानि वा न कर्त्तव्यानि? इत्याह 'परिभोगमपरिभोगे'त्ति तानि कर्पटानि द्विविधानि भवन्ति—परिभोग्यानि अपरिभोग्यानि च, तत्र यथासङ्ख्येन छायातपयोः कर्त्तव्यानि, परिभोग्यानि छायायां शोष्यन्ते, मा भूदत्र षट्पदी स्यात्, अपरिभोग्यान्यातपे शोषयति, 'पेह'त्ति तानि च कर्पटानि शुष्यन्ति सन्ति निरूपयत्यपहरणभयात्। 'कल्लाणं'त्ति पश्चात्तस्य प्रक्षालनप्रत्ययमेककल्याणकं प्रायश्चित्तं दीयते उक्तोऽप्कायः, इदानीमग्निकाय उच्यते—

इट्टगपागाईणं बहुमज्झे विज्जुयाइ निच्छइओ। इंगालाई इयरो मुम्मुरमाई य मीसो उ ॥ २५९ ॥

अग्नावपि त्रिविधः सचित्तादिभेदेन, तत्र सचित्त इष्टकापाकादीनां बहुमध्ये विद्युदादिको नैश्चयिको भवति, अङ्गारादिकेतरो व्यावहारिकः मुर्मुरादिकः—उल्मुकादिर्मिश्रो भवति। इदानीमचित्ताग्निकायस्योपयोगमचित्ताग्निशरीरोपयोगं च दर्शयन्नाह—

---

१ वेव 'पेह'त्ति खा. पा. १–२। २ 'कल्लाणं' खा.। ३ तत्र सचित्त इट खा पा १।

जहण्णे निद्धे काले बत्थी वाउणाऽऽपूरिओ तिण्णि पहरे जाव अचित्तो होइ, तदुवरिं सो चेव चउत्थे पहरे मिस्सो होइ, तदुवरिं पंचमे पहरे सो चेव सचित्तो होइ। एवं निद्धकाले माणं भणिअं, इदाणिं रुक्खकाले दिणेहिं परूवणा किज्जइ, तत्थ लुक्खकालोऽवि तिविहो–जहन्नलुक्खो मज्झिमलुक्खो उक्कोसलुक्खो य, तत्थ जहन्नलुक्खे काले वत्थी वाउणाऽऽपूरिओ एगदिवसं जाव अचित्तो होइ, तदुवरिं सो चेव बिईयदिवसे मिस्सो होइ तदुवरिं सो चेव ततिए दिवसे सचित्तो होइ, मज्झिमलुक्खे काले बत्थी वाउणाऽऽपूरिओ दो दिणाणि जाव अचित्तो होइ, तदुवरिं सो चेव तइए दिवसे मिस्सो होइ, तदुवरिं चउत्थे दिवसे सचित्तो, एवं सो चेव वाऊ उक्कोसलुक्खकाले दिवसतिगं जाव अचित्तो होइ, तदुवरिं सो चेव चउत्थे दिवसे मिस्सो होइ, तदुवरिं सो चेव पंचमे दिवसे सचित्तो भवति। एवं एगदुगतिसंखा पोरिसिदिणेसुं अणुवट्टावणीआ इति। इदानीमचित्तेन वायुना यत्प्रयोजनं भवति तत्प्रदर्शयन्नाह[3]—

**दइएण वत्थिणा वा पओयणं होज्ज वाउणा मुणिणो। गेलन्नंमि [4]वि होज्जा सचित्तमीसे परिहरिज्जा ।३६३**

सुगमा ॥ नवरं दतिएणं तरणं कीरति, गेलन्ने बत्थिणा कज्जं होइ। उक्तो वायुः, इदानीं वनस्पतिकाय उच्यते, असावपि सचित्तादिभेदात्रिधा, तत्र निश्चयसचित्तप्रतिपादनायाह—

**सव्वो वऽणंतकाओ सच्चित्तो होइ निच्छयनयस्स। ववहाराउ अ सेसो मीसो य पव्वायरोट्टाई ॥३६४॥**

---

१ अच्छइ आ. ल २ पा. १. २. पु.। २ होइ, सो आ. पा १। ३ तत्प्रतिपादयन्नाह–आ. पा. १. २.। ४ य. रु. २, च. आ.।

पीओ, संमुच्छिमो वालिपदार्हिं अपिओ। इदानीं मिश्र उच्यते, आह–किं पुनः कारणमिह मिश्रः पश्चात्प्रारुयायते ?, उच्यते, अचित्तेनैव माधुर्यव्यवहारं करोति, स च गृहीतः सन्नेव मिश्रीभवति, अस्यार्थस्य प्रदर्शनार्थं पश्चान्मिश्र उच्यते।

हत्थसयमेग गंता दइओ अचित्तो विइए समीसो। तइयमि उ सच्चित्तो वत्थी पुण पोरिसिदिणेहिं।२६२

अचित्तमधुरको व्यवस्तरमार्यं गृह्यते, स च क्षेत्रतो हस्तशतमेक पाबद्गत्वाऽपि अचित्त एव, तोय तीर्त्वाऽपि ततो हस्त शतादूर्ध्वं द्वितीयहस्तशतप्रारम्भे मिश्रो भवति, तृतीयहस्तशतप्रारम्भे सचित्तो भवति, क्षेत्रमङ्गीकृत्य यावता क्षेत्रेण मिश्रो भवति तथोक्त, इदानीं कालमङ्गीकृत्य यावता कालेनाचित्तः सन् मिश्रः सचित्तो वा भवति तत्प्रदर्शयन्नाह–'वत्थी पुण पोरिसि दिणेहिं'ति तत्र वस्तिः–चर्ममयी सा प्रोच्यते, सा चाचित्तवायोरापूरिता उत्कृष्टस्निग्धकाले पौरुषीमात्र काल यावदचित्तस्यो वायुरचित्त एवास्ते, अयमत्र भावार्थः–कालो हि द्विविधः–निद्धो लुक्खो य, तत्थ निद्धो कालो सपाणितो इयरो लुक्खो, तत्थ निद्धो तिविहो उक्कोसो मज्झिमो जहन्नो य, तत्थ उक्कोसनिद्धे काले एगं पोरिसीं जाव वत्थी वाउपूरितो अचित्तो होइ तदुवरिं सो चेव बिइए पहरे मिस्सो होइ तदुवरिं सो चेव तइए पहरे सचित्तो होइ, मज्झिमनिद्धे काले वत्थी वाउणाऽऽपूरि-ओ दो पोरसीओ जाव अचित्तो होइ तदुवरिं सो चेव तइयपहरे मीसो भवति तदुवरिं सो चेव चउत्थे पहरे सचित्तो होइ,

१ मार्गे मिश्रः आ.। २ मिश्र आ. क २-३। ३ प्रारम्भेऽपि मिश्रो आ. पा १। ४ क्षणेन आ। ५ नातिस्निग्धकाले आ। ६ तत्र स्निग्धो आ क २ पा. १। ७ पौरुषीमात्रं काल यावत् वत्थी आ पा १। ८ वायुनाऽऽपूरितो आ क पा १२। ९ तइए पहरे आ पा १-३। १ चउत्थे पहरे आ।

द्वीन्द्रियाणां परिभोगः 'अक्षाणां' चन्दनकानां सशङ्खा या शुक्तयः तदादीनां, शङ्खेषु शुक्तिषु च औषधानि क्रियन्ते। त्रीन्द्रियाणां मध्ये उद्देहिकया, आदिशब्दादन्येन वा त्रीन्द्रियेण, यद्वा वैद्यो ब्रूयाद्, उद्देहिकायाः सत्कया मृत्तिकया प्रयोजनं, स सर्वस्त्रीन्द्रियपरिभोगः। इदानीं चतुरिन्द्रियपरिभोग उच्यते—

**चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव। पंचिंदिअपिंडम्मि उ अव्ववहारा उ नेरइया ॥३६८॥**

चतुरिन्द्रियाणां मध्ये 'मक्षिकापरिहारेण' मक्षिकापुरीषेण ऊर्ध्वविरेकः क्रियते शरीरपाटवार्थं, अश्वमक्षिकोपयोगश्च तयाऽक्ष्णोरक्षराः पतिता उद्ध्रियंते। अयं चतुरिन्द्रियपिण्डे[1]परिभोगः, पञ्चेन्द्रियपिण्डे तु यदि परं नारकैर्व्यवहारः—उपयोगो न कश्चित्क्रियते। शेषास्तु तिर्यञ्चो मनुष्या देवाश्चोपयुज्यन्ते, तत्र तिरश्चां पञ्चेन्द्रियाणां सत्कमुपयोगं दर्शयन्नाह—

**चम्मट्ठिदंतनहरोमसिंगअ[2]विलाइच्छगणगोमुत्ते। खीरदहिमाइयाणं पंचिंदिअतिरिअपरिभोगो ॥३६९॥**

तत्र चर्मणा कुष्ठिनः [3]प्रयोजनं भवति, अस्थ्ना—गृध्रनलकेन प्रयोजनं भवति वार्य्व[4]पहरणार्थं पादे बध्यते, दन्तेन सूकरादेः संबन्धिना प्रयोजनं नखेन वा, रोमभिः प्रयोजनमुरभ्रादीनां सत्कैस्तैः कम्बलिका भवति, शृङ्गेण किञ्चित्प्रयोजनं भवेत्, [5]अविला उरभ्रा तत्पुरीषं पामादावुपयु[6]ज्यते पामा मर्द्यते, तेन गोमूत्रेण चोपयोगः। शेषं सुगमम्। इदानीं मनुष्योपयोगः प्रदर्श्यते—

---

१ °पिण्ड, पञ्चे° आ। २ °अभिलाइ° आ. पा १ पु। ३ कार्यं आ. पा. १। ४ वाय्वायप° आ. पा. १। ५ अभिला आ. पा. १–२ पु.। ६ °युज्यते तेन आ.।

सर्व एवानन्तवनस्पतिकायो निश्चयनयेन सचित्तः, शेषः परित्तवनस्पतिर्व्यवहारनयमतेन सचित्तः, 'मीसो पलंबमाई' ति मिश्रस्तु प्रम्लानानि फलानि यानि कुसुमानि पर्णानि च रोट्टो–लोट्टो तन्दुलाः क्षुण्णाः, तत्थ तंदुलमुहाइ अच्छति तेण कारणेन सो मिस्सो भण्णइ। इदानीमचित्तवनस्पतिकाय तदुपयोग च दर्शयन्नाह—

संथारपायदंडगखोमिअकप्पाइ पीढफलगाई। ओसहभेसज्जाणि य एमाइ पओयण तरुसु ॥३९५॥

तत्र संस्तारकः मशुषिरतृणैः क्रियते, कल्पद्वय च कार्पासिक भवति, औषधमन्तरुपयुज्यते, भेषजं तु बहिर्लेपः। उक्तो वनस्पतिकायः, इदानीं द्वीन्द्रियादिप्रतिपादयन्नाह—

बियतियचउरो पंचिंदिया य तिप्पभिइ जत्थ उ समिति। सट्ठाणे सट्ठाणे सो पिंडो तेण कज्जमिण ॥३९६॥

द्वित्रिचतुष्पञ्चेन्द्रिया एकैके त्रिप्रभृतयो यत्र समवाय गच्छन्ति स द्वीन्द्रियादिपिण्डः, ते चैव समवाय गच्छन्ति स्वस्थाने स्वस्थान, एतदुक्त भवति–द्वीन्द्रिया द्वीन्द्रियैरेव मिलितैर्द्वीन्द्रियपिण्ड उच्यते, तथा त्रीन्द्रियास्त्रीन्द्रियैरेव त्रिप्रभृतिभिर्मिलितैस्त्रीन्द्रियपिण्ड उच्यत, एव स्वजातीयैर्मिलितैः पिण्डो वक्तव्यो यावत्पञ्चेन्द्रिया इति स्वस्थान स्वस्थाने स पिण्डः। अथ तावद् द्वीन्द्रियादिः पञ्चेन्द्रियपर्यन्तः सचित्तादिपिण्डो भवति, यथाचित्तपिण्डो द्वीन्द्रियादिसत्कस्तेन चैतत्कार्यम्—

बेइंदियपरिभोगो अक्खाण ससरक्ख [4]सिप्पिमाईण। तेइंदियाण उद्देहिगाइ अ वा वए विज्जो ॥३९७॥

---

१ भवति खा। २ कल्पास च १ पु.। ३ बहिः। कज्जे खा। ४ सिप्पम" खा।

द्वीन्द्रियाणां परिभोगः 'अक्षाणां' चन्दनकानां सशङ्खा या शुक्तयः तदादीनां, शङ्खेषु शुक्तिषु च औषधानि क्रियन्ते। त्रीन्द्रियाणां मध्ये उद्देहिकया, आदिशब्दादन्येन वा त्रीन्द्रियेण, यद्वा वैद्यो ब्रूयाद्, उद्देहिकायाः सत्कया मृत्तिकया प्रयोजनं, स सर्वस्त्रीन्द्रियपरिभोगः। इदानीं चतुरिन्द्रियपरिभोग उच्यते—

**चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव। पंचिंदिअपिंडम्मि उ अववहारा उ नेरइया ॥३६८॥**

चतुरिन्द्रियाणां मध्ये 'मक्षिकापरिहारेण' मक्षिकापुरीषेण ऊर्ध्वविरेकः क्रियते शरीरपाटवार्थं, अश्वमक्षिकोपयोगश्च तयाऽक्ष्णोरक्षराः पतिता उद्ध्रियंते। अयं चतुरिन्द्रियपिण्डपरिभोगः, पञ्चेन्द्रियपिण्डे तु यदि परं नारकैर्व्यवहारः—उपयोगो न कश्चित्क्रियते। शेषास्तु तिर्यञ्चो मनुष्या देवाश्चोपयुज्यन्ते, तत्र तिरश्चां पञ्चेन्द्रियाणां सत्कमुपयोगं दर्शयन्नाह—

**चम्मट्ठिदंतनहरोमसिंगअविलाइच्छगणगोमुत्ते। खीरदहिमाइयाणं पंचिंदिअतिरिअपरिभोगो ॥३६९॥**

तत्र चर्मणा कुष्ठिनः प्रयोजनं भवति, अस्थ्ना—गृध्रनलकेन प्रयोजनं भवति वार्ध्रपहरणार्थं पादे बध्यते, दन्तेन सूकरादेः संबन्धिना प्रयोजनं नखेन वा, रोमभिः प्रयोजनमुरभ्रादीनां सत्कैस्तैः कम्बलिका भवति, शृङ्गेण किञ्चित्प्रयोजनं भवेत्, अविला उरभ्रा तत्पुरीषं पामादावुपयुज्यते पामा मर्द्यते, तेन गोमूत्रेण चोपयोगः। शेषं सुगमम्। इदानीं मनुष्योपयोगः प्रदर्श्यते—

---

१ °पिण्ड, पञ्चे° आ.। २ °अभिलाइ° आ. पा १ पु.। ३ कार्यं आ. पा. १। ४ वाय्वायप° आ. पा. १। ५ अभिला आ. पा. १–२ पु.। ६ °युज्यते तेन आ.।

सेच्चिते पवासण पधुवेदेसे य भिक्खदाणाई । सीसट्ठियअच्चित्ते मीसट्ठिसरक्खपहपुच्छा ॥ ३७० ॥

प्रथमार्द्धं सुगम, सचित्तमनुष्यप्रयोजनमुक्तम्, इदानीमचित्तमनुष्यपिण्डप्रतिपादनायाह–'सीसट्ठिय अचित्ते'त्ति अचित्तेन शिरःकपालेन प्रयोजन भवति, पिशाचस्तु पतितस्य विजाद, सेपपरावर्त्तादि क्रियते। इदानीं मिश्रमनुष्यपिण्ड उच्यते–'मीसट्ठि सरक्खपहपुच्छा' मिश्रोऽस्थियुक्तो यः सरजस्कः कापालिकस्तस्य मिश्रस्य पथि पृच्छनोपयोगः। इदानीं देशोपयोगप्रतिपादनायाह—

खमगाइकालकज्जातिएसु पुच्छिज्ज देवय किंचि। पथे सुभासुभे वा पुच्छिज्ज य दिव्वमुवओगो ॥ ३७१ ॥

क्षपकादिः कश्चित्, आदिशब्दादाचार्यादयः कालकार्यादौ भाविग्रहमासक्षणादिकार्ये वा उत्पन्ने पृच्छति अर्थयते काञ्चिद्देवतां, पथि वा गच्छन् शुभाशुभ पृच्छेत्, अथवा शुभाशुभं–दुर्भिक्षादि पृच्छेत्, ततश्चाय दिव्यपिण्डोपयोगः। एवं तावत्सचित्तो नवप्रकारः पिण्ड उक्तः, तदनन्तरं मिश्रोऽपि पिण्डो नवप्रकारः प्रतिपादितः, अचित्तोऽपि नवप्रकारः प्रतिपादित एव। इदानीं दशमो भेदोऽचित्तो लेपपिण्ड उच्यते, स चैतेषामेव पृथिव्यादीनां नवानां भेदानां संयोगेन भवति, एतदेव प्रदर्शयन्नाह—

---

१ °वत्तिले ला ल २। २ वरेवाद स १। ३ मिश्र इत्यन्य भा पा १। ४ दर्शनायाह भा पा १–२। ५ पृच्छनोप° ला पा १। ६ °वरी खमगपुरप्पयारी–आदि° ला। ७ ' पृच्छेद् अर्थयेत् ला. ल. २. पा. १–२।

**अह होइ लेवपिंडो संजोगेण नवण्ह पिंडाणं । नायव्वो निप्फन्नो परूवणा तस्य कायव्वा ॥ ३७२ ॥**

अथ भवति लेपपिण्डः संयोगेन नवानां पिण्डानां निष्पन्नो ज्ञातव्यः, कथं ? दुचक्का गड्डिआ, तत्थ अक्खे मक्खिए पुढविकायस्स रजो लग्गति, आउकाओ नदीए उत्तरओ लग्गइ, तेउकाओ तत्थ लोहं फंसइति, वायु तत्थेव, यत्राग्निस्तत्र वायुना भवितव्यम् । वणस्सई अक्खो बितिचउ संपातिमा पाणा पडंति, पंचिंदियाणवि वरत्ता घससति । एवं संजोएण निप्फन्नो लेवो, इदानीं तस्य प्ररूपणा कर्त्तव्या ।

**अवक्कालिअलेवं भणंति लेवेसणा नवि अ दिट्ठा । ते वत्तव्वा लेवो दिट्ठो तेलोक्कदंसीहिं ॥ ३७३ ॥**

पर आह–अर्वाकालिकं लेपं केचन प्रतिपादयन्ति, सदोषत्वाल्लेपस्य, तथा लेपैषणा च समये न क्वचिद् दृष्टा, यतो द्विविधैव एषणा प्रतिपादिता–वस्त्रैषणा पात्रैषणा च, ततश्चायमर्वाकालिको यतो न युक्त्या घटते नाऽपि समये दृष्ट इति एवमुक्ते आचार्य आह–'ते वत्तव्वा' त एवं भणनीयाः–इदं वक्तव्याः, यदुत लेपो दृष्टस्त्रैलोक्यदर्शिभिः–जिनैः, एतदुक्तं भवति–पात्रैषणां प्रतिपादयता लेपैषणाऽपि उक्तैव द्रष्टव्या, अन्यथा तद्व्यतिरेकेण पात्रग्रहणानुपपत्तेः, पात्रं हि लेपादिसंस्कृतमेवोपयोगभाग् भवति नान्यथेति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह—

**आयापवयणसंजमउवघाओ दीसई जओ तिविहो । तम्हा वदंति केई न लेवगहणं जिणा बिंति॥१९२ भा०**

१ घसति आ क २ पा. १–२ । २ भाव्यम् आ. पा १–२ । ३ °षणा उक्तैव आ. क, १–२ पा. १–२ ।

सेचित्ते पव्वावण पधुवेदेसे य भिक्खदाणाई । सीसट्ठियअच्चित्ते मीसट्ठिसरक्खपहपुच्छा ॥ ३७० ॥

प्रथमार्द्धं सुगम, सचित्तमनुष्यप्रयोजनमुक्तम्, इदानीमचित्तमनुष्यपिण्डप्रतिपादनायाह–'सीसट्ठिगअचित्ते'त्ति अचित्तेन शिरःकपालेन प्रयोजन भवति, पिशाचस्तु घसितुम दिसइ, वेषपरावर्त्तादि क्रियते। इदानीं मिश्रमनुष्यपिण्ड उच्यते–'मीसट्ठि सरक्खपहपुच्छा' मिश्रोऽस्थियुक्तो यः सरजस्कः कापालिकस्तस्य मिश्रस्य पथि पृच्छनोपयोगः। इदानीं देवोपयोगप्रतिपादनायाह—

खमगाइकालकज्जातिएसु पुच्छिज्ज देवय किंचि। पये सुभासुभे वा पुच्छिज्ज व दिव्वमुवओगो ॥ ३७१ ॥

क्षपकादिः क्षपिर, आदिशब्दादाचार्यादयः कालकार्यादौ आदिग्रहणात्सङ्घादिकार्ये वा उत्पन्ने पृच्छति अर्थयते कामिदेवतां, पथि वा गच्छन् शुभाशुभ पृच्छत्, अथवा शुभाशुभ–दुर्भिक्षादि पृच्छेत्, तदेवाय दिव्यपिण्डोपयोगः। एव तावन्मिश्रो नवप्रकारः पिण्ड उक्तः, तदनन्तरं मिश्रोऽपि पिण्डो नवप्रकारः प्रतिपादितः, अचित्तोऽपि नवप्रकारः प्रतिपादित एव। इदानीं दशमो भेदोऽचित्तो लेपपिण्ड उच्यते, स चैतेषामेव पृथिव्यादीनां नवानां भेदानां सयोगेन भवति, एतदेव प्रदर्शयन्नाह—

---

१ वच्चित्ते भा ब. २ । २ वरेवाइ क १. । ३ मिस्स दाणाइ भा पा १ । ४ दर्शनायाह भा पा १–२ । ५ पृच्छनोप० भा पा १ । ६ वीरो खमगुवरयमरो–भारि° भा । ७ पृच्छेत् अथवेत् भा. ब. २. पा. १–२ ।

चिद्वर्षति ततश्चाप्कायविराधना भवति । अथ रजःसंपातो भवति ततश्च पृथिवीकायविराधना भवति, एवमुक्ते सत्याह सूरिः—

**दोसाणं परिहारो चोयग ! जयणाए कीरए[3] तेसिं । पाए उ अलिप्पंते ते दोसा होंति[4] णेगगुणा॥१९५॥ भा.**

दोषाणां परिहारस्तेषां चोदकोक्तानां क्रियत इति संबन्धः, कथं क्रियते ? इत्यत आह—हे चोदक ! यतनया लेपस्य ग्रहणं क्रियते, ततश्च यतनया ग्रहणे सत्यात्मोपघातादयो दोषा न भवन्ति, पात्रे चालिप्यमाने त एव दोषा यत्त्वयोदिता आत्मोपघातादयोऽनेकगुणा—अनेकप्रकारा भवन्ति । इदानीं आचार्य एवात्मोपघातादि दर्शयन्नाह—

**उड्डाई विरसंमी भुंजमाणस्स हुंति आयाए । दुग्गंधि भायणंमि य गरहइ लोगो पवयणंमि ॥१९६॥ भा.**

ऊर्ध्वादि-छर्दनादि दोषो भवति विरसे तस्मिन् पात्रे भुञ्जतः ततश्चात्मविराधनैव भवति । तथा 'दुग्गंधि' तस्मिन् भाजने भिक्षां गृह्णतो लोको गर्हां करोति ततश्च 'प्रवचने' प्रवचनविषये उपघातो भवति । यच्चोक्तं चोदकेन "जक्खुल्लिहणे पवयणंमि" तत्रेदमुच्यते—

**पवयणघाया अन्नेवि अत्थि जयणा उ कीरई तेसिं । आयमणभोयणाई लेवे तव मच्छरो को णु॥१९७ भा.**

प्रवचनोपघातोऽन्योऽप्यस्ति किन्तु यतना[5] क्रियते तेषां, के च ते प्रवचनोपघाताः ? अत आह—'आचमनभोजनादयः' आचमनं-निर्लेपनादि भोजनं चैकमण्डल्यां, एतानि प्रवचनोपघातानि कुर्वन्ति यदि प्रकटानि क्रियन्ते, किन्तु यतनया करणान्न

१ 'दर्षं भवति तत' आ पा. १-२ । २ सूरिराह आ पा. २ । ३ कीरई आ. पा. १ । ४ होंति आ पा १-पु. । ५ यतनया आ. क १-२ ।

पर आह—आरमप्रवचनसंयमोपघातो दृश्यते यतस्त्रिविधस्तस्माद्वदन्ति केचन न लेपग्रहणं जिना ब्रुवते। इदानीं पर एवारमोपघातादि प्रदर्शयन्नाह—

रहपडणउत्तिमगाइभजण घट्टणे य करघाओ। अह आयविराहणया जक्खुच्छिहणे पवयणमि १९३ भा०

तस्य साधोर्लेपं गृह्णतो दुःस्थितरथपतनेनोत्तमाङ्गादिभङ्गो भवति, घट्टने च—चलने सति रथस्य करस्य—हस्तस्य घातो भवति—संपीडनं भवतीत्यर्थः, अथैषाऽऽत्मविराधनोक्ता, इदानीं प्रवचनोपघातं प्रदर्शयन्नाह—'जक्खुच्छिहणे पवयणमि' यक्षः—या स हि यक्षोऽभ्रप्रदेशग्रहणच्छिरति ततश्च तस्मिन् यक्षोच्छिरने सति 'प्रवचने' प्रवचनविषये उपघातो भवति। इदानीं संयम विराधनां प्रदर्शनायाह—

गमणागमणे गेहणे तिट्ठाणे सयमे विराहणया। महिसरिउम्मुगहरिआ कुंथू वास रओ व सिया॥१९४भा

लेपार्थं गमने च आगमने च ग्रहणे च लेपस्य संयमविराधना भवति, कथं? 'महिसरिउम्मुगहरिआ कुंथु'त्ति तत्र गच्छतो मही सचित्ता भवति, तथा सरिदुत्तरणेऽप्कायविराधना भवति, तथा ग्रहणे चाग्निविराधना भवति, स हि गृह्णन् कदाचिदुल्मुक चालयति ततश्चाग्निविराधना, यत्राग्निस्तत्र वायुना भवितव्यं, तथा कदाचिदसौ यन्त्री हरितकुन्थुकादिमध्ये व्यवस्थितो भवति ततश्चासौ लेपं गृह्णन् तानि विराधयति, अथवाऽनया भङ्ग्या संयमविराधना भवति—'वासं रओ व सिया' तत्र गतस्य कदा

१ स्त स्तमे क। २ महाणाति क। ३ च विराधना ख १-२ पा. १-२।

चिद्वर्षति ततश्चाप्कायविराधना भवति । अथ रजःसंपातो भवति ततश्च पृथिवीकायविराधना भवति, एवमुक्ते सत्याह सूरिः—

**दोसाणं परिहारो चोयग ! जयणाए कीरए[3] तेसिं । पाए उ अलिप्पंते ते दोसा होंति णेगगुणा ॥१९५॥ भा.**

दोषाणां परिहारस्तेषां चोदकोक्तानां क्रियत इति संबन्धः, कथं क्रियते ? इत्यत आह–हे चोदक ! यतनया लेपस्य ग्रहणं क्रियते, ततश्च यतनया ग्रहणे सत्यात्मोपघातादयो दोषा न भवन्ति, पात्रे चालिप्यमाने त एव दोषा यत्त्वयोदिता आत्मोपघातादयोऽनेकगुणा–अनेकप्रकारा भवन्ति । इदानीं आचार्य एवात्मोपघातादि दर्शयन्नाह—

**उड्डाई विरसंमी भुंजमाणस्स हुंति आयाए । दुग्गंधि भायणंमि य गरहइ लोगो पवयणंमि ॥१९६॥ भा.**

ऊर्ध्वादि–छर्दनादि दोषो भवति विरसे तस्मिन् पात्रे भुञ्जतः ततश्चात्मविराधनैव भवति । तथा 'दुग्गंधि' तस्मिन् भाजने भिक्षां गृह्णतो लोको गर्हां करोति ततश्च 'प्रवचने' प्रवचनविषये उपघातो भवति । यच्चोक्तं चोदकेन "जक्खुल्लिहणे पवयणंमि" तत्रेदमुच्यते—

**पवयणघाया अन्नेवि अत्थि[4] जयणा उ कीरई तेसिं । आयमणभोयणाई लेवे तव मच्छरो को णु ॥१९७ भा.**

प्रवचनोपघातोऽन्योऽप्यस्ति किन्तु यतना[5] क्रियते तेषां, के च ते प्रवचनोपघाताः ? अत आह–'आचमनभोजनादयः' आचमनं–निर्लेपनादि भोजनं चैकमण्डल्यां, एतानि प्रवचनोपघातानि कुर्वन्ति यदि प्रकटानि क्रियन्ते, किन्तु यतनया करणान्न

---

१ 'द्वर्षं भवति तत' आ पा. १–२ । २ सूरिराह आ पा. २ । ३ कीरई आ. पा १ । ४ होंति आ पा. १–पु । ५ यतनया आ. ऌ. १–२ ।

प्रवचनोपघातो भवतीति, ततश्च लेपे तत्र को मत्सरः ? इति । इदानीं पात्रस्यालेपने संयमविराधना प्रतिपादयन्नाह—

**खडमि भग्गिअम्मी लोणे दिन्नमि अवयवविणासो । अणुकंपाई पाणामि होइ उदगस्स उ विणासो ॥३७४**

एगेण साहुणा गिलाणट्ठ खड मग्गिअं, तम्मि य विसए लोणंपि खड भण्णइ, ततो तेण भावएण लोणं मग्गियंति काउ भायणे लोणं दिण्णं, पच्छा पविस्सय मएण दिट्ठ जाव स लोणं, ततो तेण पुढविकाउत्ति काऊण परिट्ठविअं, ततो परिट्ठवियमिति तंमि लोणंमि तस्स खरफरुसे भायणे लग्गा राइसु य पसिट्ठा लोणावयवा, ततो जदि तत्थ अण्णपाणगाइ घेप्पइ ततो ताण लोणावयवाण विणासो होइ, अह न भिज्जइ लोणखरडिए भायणे तत आत्मादिविराधना भवति, अहवा कम्मिअपाणे मग्गियंमि गिहत्थीए अणुकंपाए आउकाओ दिण्णो, आदिग्रहणात्पडिणीयत्तणेण अणाभोएण वा तओ तमि कडुयभायणंमि सो विणस्सइ-विराध्यते ततो संजमविराधना भवति । अथवा इमो दोसो हवइ पायस्स अलेवणे—

**पूयलिअलग्गअगणीपलीवण गाममाइण होज्जा । रोहपणगा तरुमी भिग्गुकुथादी ये छट्ठमि ॥३७५॥**

एगेण साहुणा फणिअमंडढिमा लद्धा, तीए हेट्ठा सुहुमो अंगारो लग्गो दिण्णो, सो उ साहुणा न दिट्ठो, ततो भमतस्स त पय पडलेहिं सम पेलिअं ततो तेण पलित्तपाय दट्ठूण पवियं तंपि बाढीए पट्ठियं गामपलीवण जाय, यत्राग्निस्तत्र वायुरपि । अहवा रोहो पाडलरोही लद्धो, सो अपरिभवो होइ, 'पणगा तरुमि'त्ति पणमो उल्ली राइसु होइ, ततो तविणासो—तरुविणासो,

1 एवंजणाइ—भा क १-२ । 2 केणचित् साहुणा क १ । 3 पुढविक्क भा । 4 भमी° पा २ । 5 य भा क. २ । 6 पलित्तपायं पा । 7 तस्सींमि भा. ।

वणस्सइविणासोत्ति भणिअं होइ, भिगु–राजिर्भण्यते, तत्र कुंथाईआ पाणिणो हवंति, तेतो एवं छट्ठो तसकाओ विणासिओ होइ, एवं अलित्ते पत्ते छज्जीवणिकायविराधना अवस्सं होइ ॥ यच्चोक्तं 'त्रैलोक्यदर्शिभिः समये लेपैषणा नोक्ता' तत्रेदमुच्यते—

**पायग्गहणंमि य देसिअंमि लेवेसणावि खलु वुत्ता। तम्हा उ आणणं लिंपणा य जयणाए कायव्वं॥३७६॥**

पात्रग्रहणे दर्शिते–उपदिष्टे सति लेपैषणाऽपि खलूक्तैव द्रष्टव्या, तस्मादानयनं लेपस्य लिम्पनं च यतनया कर्त्तव्यम् ।

अत्राह परः—

**हत्थोवघाय गंतूण लिंपणा सोसणा य हत्थंमि। सागारिए पभुंजिघणा य छक्कायजयणा य ॥ ३७७ ॥**

यदि नाम पात्रं लिप्यते लिप्यतां नाम, किन्तु तत्रैव शकटसमीपे नीत्वा लिप्यतां यतो लेपानयने हस्तस्योपघातो–बाधा भवति, अथवा हस्तेन यदि लेप आनीयते ततः संपातिमसत्त्वानामुपघातो भवति, तस्माद्गत्वा पात्रलेपनं कार्यं, एवमुक्ते आचार्या भणिष्यन्ति, यदुत त्वदीयेऽपि पक्षे आत्मोपघातादि भवत्येव । तथा पुनरपि पर एवं भणति तत्पात्रकं लेपयित्वा पुनश्च शोषणा हस्तव्यवस्थितस्यैव पात्रकस्यैव कर्त्तव्या, येन सार्द्रनिक्षेपदोषः परिहृतो भवति, आचार्योऽप्यत्र प्रत्युत्तरं दास्यति, यदुत हस्ते ध्रियमाणेन पात्रेण आत्मोपघातादयो दोषा भवन्ति तस्मात्पात्रकं हस्ते न शोषणीयं लेपश्च

१ ज भणिअ, भिगु आ पा १–२ । २ एव आ । ३ अलेविए पाए आ. पा. १–२ । ४ आणयना लिंप° आ ल २, आणणा पु पा १ । ५ पायस्य जयणाए आ ल २ पा. १ । ६ लेपन पात्रस्य यत° आ, लेपन च पात्रस्य यत° पा १–२ । ७ °समीप गत्वा आ । ८ यथा आ । ९ ददाति आ ।

मानयनीयः, तत्र च लेपार्थं गच्छन् स साधुः क्वाचिदासन्न एव 'सागारिए'त्ति सागारिकः—शय्यातरस्तच्छकटानि यदि पश्यति ततस्तेष्वेव लेपं गृह्णाति, न तत्र गृह्णतः शय्यातरपिण्डदोषो भवति, 'पहु'त्ति तेन साधुना लेपं गृह्णता यस्तेषां शकटानां प्रभुः स प्रच्छनीयः, अप्रच्छने तु दोषा भवन्ति। तथा लेपस्य जिघ्रणं कर्तव्यं, किमयं कटुरकटुर्वा? तथा षट्काय-यतना च कार्या, इत्येतत्सर्वं पश्यति। इदानीं एतामेव गाथां भाष्यकारो व्याख्यानयति, तत्राऽऽद्यावयवव्याचिख्यासयाऽऽह—

चोदगवयणं गंतूण लिंपणा आणणे बहू दोसा। संपाइमाइघाओ अतिउण्हरिए य उस्सग्गो ॥१९८ भा०

चोदकस्य वचनं, किं तत्?, गत्वा लेपना पात्रकस्य कर्तव्या, यत आनयने लेपस्य बहवो दोषा भवन्ति, कथं?, यदि यावदस्तेनानीयते लेपस्ततो हस्तस्य तापोपजायते तथा संपातिमसत्त्वघातो भवति, अत्युद्धरिते च तस्मिन् लेपे 'उत्सर्गः' परिष्ठापनं भवति, तत्र चार्द्रवर्षं इत्यतस्तत्रैव गत्वा लिम्पतु। एवमुक्ते सत्याचार्य आह—

एवंपि भाणभेओ विआवडे अत्तणो य उवघाओ। नीसंकियं च पायंमि गिण्हणे इहरहा लक्का ॥ १९९ भा०

एवमपि गत्वा भाजनं लिम्पतो भाजनभेदो भवति, व्यापृतस्य च—आकुलस्य पात्रकलेपने गन्ध्यामलने तस्यात्मोपघातो भवति तथा प्रकटं तत्रैव पात्रे लेपग्रहणं कुर्वतो निःशङ्कितं लोकस्य भवति यदुतैतेऽशुचयः येनाशुचिना लेपेन पात्रकलेपनं कुर्वन्ति। 'इहरहा लक्क'त्ति इतरथा यदि तत् पात्रं तत्र प्रकटं न लिम्पते ततो लोकस्य शङ्कैव केवला भवति यदुत न

---

१ पृच्छनीयः आ.। २ तत्र आ. म. १-२। ३ °सेवमसत्स्यमनेन आ म १-२। ४ सत्याह गुरुः आ म १-२। ५ °मिमि पायंमि आ क २ म १। ६ लिम्पई आ।

दयेत्, पादुकाप छेदानिद् दतौ रियत स्थन्ती म्पोपादयेत्, तयोपरि विर्यग्व्यवस्थिताः फलवल्लीवृक्षशाला:-शाखा रोपयति, तथा तिर्यगनुज्ञान्-जातमात्रबालकान् तिरश्च:-अश्वत्समादीन् सञ्चयेत् । अथ चैते दोषाः—

फटगमाई य अहे उप्पि अहिमादिलघणे आया । तस्स सरीरविणासो मिच्छत्तुड्डाह वोच्छेओ ॥२५०॥

स्कन्दकादयो बाऽधो भवन्ति, उपरि अश्वादि-मर्यादिलम्बने आत्मविराधना दातु, तस्य च-दातुः शरीरविनाशे मिथ्यात्व गच्छा पश्य वा भवति, 'उड्डाह' प्रवचनोपघातश्च भवति यतुत एवेषामेवावानपि प्रमाणो नास्ति येन दातारं रक्षन्ति । व्याख्यात गमनद्वारम्, इदानीं ग्रहणद्वारप्रतिपादनायाह—

नीयदुवारुग्घाडकवाडठिय देह दारमाइन्ने । ईङ्करपरिथपलिंदे गहण पत्तस्सऽपडिलेहा ॥ ४७८ ॥

'नीयदुवार' गाहा, नीचद्वारं यदि भवति तत्र चक्षुषा निरूपण कर्तुं न शक्नोति अतो न गृह्यते भिक्षा, तयोद्घाटक-पाट-मनर्गलितकपाटे न किन्तु पिहितकपाट, तत्रापि न गृह्णाति, तथा दातुः समन्धिना स्ववेदेन द्वारे रुद्धे सति न गृह्यते, प्राकीर्णे वा पपुरुषैर्गमागम इत्यादिः तथा इतुरं-गन्त्या संपच्य तेन तिरोहिते, परियका-प्रवती 'पिठिका तया वा तिरो'-हित अलिन्द-कण्टकजन वा तिरोहिते द्वारे सति, एवमेतेषु दोषेषु मस्तु 'ग्रहणं प्राप्तस्य' गृहस्थस्य गृह्यतेऽस्मिन्निति ग्रहण,

१ रो भा । २ ता री पात्र भ १-२ । ३ पीर भा । ४ पाग्म' भा । ५ सिद्धिम भा. पिद्धिम स १ । ६ पिहिते द्वारे भा. पा. १. २ । ७ एसे भा स १ पा. १ ।

यस्मात्प्रदेशाद्भण्डकं गृह्णाति तं प्रदेशं प्राप्तस्य 'अपडिलेह'त्ति यतः प्रत्युपेक्षणा न शुद्ध्यति अनन्तरोदितैर्दोषैरतो न गृह्यते भिक्षा, यद्येभिरनन्तरोदितैर्दोषैर्भवद्भिर्न ग्रहणं ततो ग्रहणप्रदेशं प्राप्तस्य गृहस्थस्य प्रत्युपेक्षणा कर्त्तव्या—श्रोत्रादिभिरुपयोगं करोति यदि श्रोत्राद्युपयोगेन शुद्धा ततो ग्रहीष्यति, अथ न शुद्धा श्रोत्राद्युपयोगेन ततो न ग्रहीष्यति ॥ इदानीं भाष्यकारः प्रतिपदमेनामेव गाथां व्याख्यानयति, तत्र कथं जिनकल्पिकादयो गृह्णन्ति कथं वा स्थविराः ? इत्येतत्प्रदर्शयन्नाह—

**नियमा उ दिट्ठगाही जिणमाई गच्छनिग्गया होंति। थेरावि दिट्ठगाही अदिट्ठि करेंति उवओगं ॥२५१॥**

'नियमात्' अवश्यन्तयैव दृष्टग्राहिणः जिना—जिनकल्पिका न नीचद्वारादितिरोहिते गृहद्वारे ते गृह्णन्ति यतस्ते जिनकल्पिकादयो 'गच्छनिर्गताः'[1] परित्यक्तगच्छा भवन्ति, 'स्थविराः' स्थविरकल्पिका अपि 'दृष्टग्राहिण एव' अतिरोहितद्वार एव गृहे गृह्णन्ति, किमयमेव नियमः ?, नेत्याह 'अदृष्टे' तिरोहिते गृहद्वारे कपाटादिना उपयोगं श्रोत्रादिभिरिन्द्रियैर्दत्त्वा ततः परिशुद्धं[2] गृह्णन्ति । इदानीं 'नीयदुवारुग्घाडकवाडे'त्ति व्याख्यानयन्नाह—

**नीयदुवारुवओगे उड्डाह अवाउडा पदोसो य। हियनट्ठंमि अ संका एमेव कवाडउग्घाडे ॥२५२॥ (भा०)**

नीचद्वारे गृहे न ग्राह्यं यतस्तत्र नीचद्वारे निकुंटनं[3] कृत्वोपयोगं निरीक्षणं कुर्वत उड्डाहः पश्चाद्भागदर्शने अपानपेलादि[4]-दर्शने सति कदाचित्तत्राप्रावृताः स्त्रियस्तिष्ठन्ति ततश्च निरूपयतः प्रद्वेषं[5] तदुपरि कुर्वन्ति, तथा हृते चौरादिना नष्टे—स्वयमेवा-

१ जिनकल्पिकादयो 'गच्छ॰' आ । २ ॰शुद्धे आ. । ३ निष्कुटनं आ । ४ पेलादि॰ आ ल. २ पा. १ । ५ ॰प्रद्वेषमुपरि आ. ल २ पा २ ।

दृश्यमाने कस्मिंश्चिद्वस्तुनि समुपजायते गृहस्थानां मैथुन पश्यन्त निर्गच्छत निरुविय आसी जदि तेर्णाहिय मवे ?, 'एवमेव' एते एव दोषाः पिहितकपाटे निरर्गलमवुघाध्यतोऽप्रावृतिकाख्यः ॥

असरीरेण व दार पिहिअ जणाउल वावि। इङ्गुरपात्थियलिंदेण वावि पिहिय भेवे दव ॥२५३॥ (भा०)

दातुरेहेन पिहित स्थूलत्वादस्य अन्यस्य वा पार्श्वस्थस्य शरीरेण द्वारं पिहित । द्वारम् । आकीर्णं व्याख्यानयति– जनाकुल वा द्वारं निर्गच्छता प्रविशता वा लोकेन, तथा 'इङ्गुरेण' गन्त्रीसम्बन्धिना 'पत्थिकया' वंशपिटिकया 'अलिन्देन' कुण्डकेन वा 'पिहित द्वारं भवेत्, 'तर्हि वानि'त्ति तस्मिन् वा इङ्गुरादौ स्थगितं द्रव्य भवेत्तत्र न गृह्यते ॥

पेतेहिं अदीसमाणे अगहण अहव कुज्ज उवभोग। सोतेण चक्खुणा घाणओ य जीहाए फासेण। २५४।

अनन्तरोदितैः। 'अदृश्यमाने' चक्षुर्दर्शने सत्यग्रहण भवति, अथवा दृश्यमानेऽप्युपयोग कुर्यात्, कैरित्याह– श्रोत्रेण चक्षुषा घ्राणतो जिह्वया स्पर्शेन चेति ॥ कथ श्रोत्राद्युपयोग करोति ?—

सुवे सद्दो उदकस्स अहम मत्तस्स। गधेण कुलिंगाई तस्थेव रसो फरिसाविंदू ॥२५५॥ (भा०)

इह मात्र वा कुण्डेलिका वा गृहस्था प्रक्षालयेतत्योदकस्य खलुक्खलाशब्दो भवति, अथवा मात्रकस्य–कुण्डेलिकादेः

१ स्वाविर' आ. पा. १–२। २ अग तेव पा° आ. ला. १। ३ निस्तिइकत आ निस्तिपिहित क १ पा १–२। ४ तेव व हिमे अप तेणावहितं क १ ५ तर्हि वाति अप। ६ स्थगितं आ। ७ तत्र आ.। ८ तत्कृत्यं आ.। ९ एवोवदीस° आ क २ पु। १ कुम्भिकादि अप पा १–२।

प्रक्षाल्यमानस्य खसखसाशब्दो भवति, तथा घ्राणेनोपयोगं करोति, कदाचित्कुलिङ्गः–द्वित्रीन्द्रियादिर्मर्दितो[1] भवेदागच्छन्त्या, एतच्च गन्धेन जानाति अशोभनेन, ततश्च न गृह्णाति, यत्र गन्धस्तत्र रसोऽपीति रसेन जानाति, तथा स्पर्शेन चोपयोगं ददाति, कदाचिदुदकबिन्दुर्लगति शीतलः चक्षुषा तूपयोगं ददाति गमनागमने प्राप्तस्य च द्रव्यस्य हस्तस्य भाजनस्य वा, मा भूदुदकसंस्पृष्टं स्यात् ।

**सो होइ दिट्ठगाही जो एते जुंजई पदे सवे । निस्संकिय निग्गमणं आसंकपयांमि संचिक्खे ॥२५६॥(भा.)**

स एवंविधो दृष्टग्राही भवति य एतानि पदानि स्थानान्तराणि पूर्वोक्तानि प्रयुङ्क्ते उपयोगपूर्वकं सर्वाणि, अथ निःशङ्कितमेव भवति यदुतानेन गृहस्थेन पुरःकर्मादि कृतं तत्र वारयित्वा निर्गच्छति, अथाऽऽशङ्कितं भवति किमनेन पुरःकर्मादि कृतं न वेतीत्थमाशङ्कायां निरूपयति प्राप्तां सतीं गृहस्थाम् । उक्तं ग्रहणद्वारम्, इदानीं आगमनद्वारप्रतिपादनायाह—

**आगमणदायगस्सा हिट्ठा उवरिं च होइ जह पुर्विं । संजमआयाविराहण दिट्ठंतो होइ[2] वच्छंमि[3] ॥४७९॥**

'आगमनं' भिक्षां गृहीत्वा साध्वभिमुखमागच्छन्त्या अधस्तादुपरि च निरूपणीयमागमनं यथा पूर्वं गमने संयमात्मविराधने निरूपिते एवमत्रापि संयमात्मविराधने निरूपणीये । उक्तमागमनद्वारं, इदानीं 'पत्ते'त्ति द्वारप्रतिपादनायाह–'दिट्ठंतो होइ वच्छंमि[4]' अत्र प्राप्तायां भिक्षायां दात्र्यां वत्सकेन दृष्टान्तो वेदितव्यः । जहा एगस्स वाणियस्स वच्छओ

१ तया आ । २ वणियवच्छेण पु । ३ वच्छेण आ. ल २ पा १ । ४ वत्थमि आ वत्थेण पा १ ।

तरिसर्त तस्स ससढी न काइ तस्स मयपाभिय देइ, मज्झम्हे मच्छएण रडिय, सुण्हाए से अलकियविभूसियाए दिण्ण मत्त पाय, जहा तस्स मच्छस्स पारीए दिट्ठी य महिलाए, एवं साहुमावि कायवं । अहना—

पत्तस्स उ पडिलेहा हत्थे मत्ते तहेय दवे य । उदउल्ले ससिणिद्धे ससत्ते चेव परियत्ते ॥ ४८० ॥

प्राप्तस्य गृहस्थस्य प्रत्युपेक्षणा कार्या हस्ते, किमय हस्तोऽस्य उदकाया्द्रों न वेति, तथा मात्रक च–कुण्डेलिकादि गृहस्थसत्क निरूपयति यत्र गृहस्था भिक्षामादाय निर्गता, द्रव्यं च–मण्डकादि निरूपयति संसक्त न वेति । एवं पश्चदार निर्युक्तिकारेण व्याख्यातम्, इदानीं निर्युक्तिकार एव परियत्तेपिद्वारं व्याख्यानयन्नाह–परिवर्तिते[1] पर्यस्तिते सति गृहस्थेन मात्रक कुण्डेलिकादौ यदुदकार्द्रं दृश्यते सस्निग्ध वोदकेनैव संसक्त वा मात्रकं ततस्तस्मिन्नेवविधे मात्रके परिवृत्ते सति दृष्टा न गृह्यते । इदानीं भाष्यकारः 'पत्ते'त्ति व्याख्यानयन्नाह—

तिरिय उड्डमहेवि य भायणपडिलेहण तु कायव्व । हत्थ मत्त दव्व तिन्नि उ पत्तस्स पडिलेहा ।२५७। (भा०)

गृहस्थभाजनस्य भागच्छत एव तिर्यक्–पार्श्वतो भाजनस्य ऊर्ध्वं कर्णेषु भाजनस्य अधो–बुध्ने प्रत्युपेक्षणा कर्तव्या, तथा 'प्राप्तस्य' आसन्नीभूतस्य गृहस्थस्य हस्त मात्रकं द्रव्यं त्रीण्यप्येतानि गृहस्थसत्कानि प्रत्युपेक्षयेत्–निरूपयेत्, किम् ?–

ससिणिद्धोदउल्ले तसाउल मा गिण्ह पगतर दट्ठु । परियत्तिय च मत्त ससिणिद्धाईसु पडिलेहा ॥२५८ भा

1 परिवर्तेति' आ । 2 अधोमुखे इत्ये सति आ पा 1 । 3 अनिच्छती आ म 2 पा 1 । 4 च–प्रत्युपे तत° आ म 2 पा 1–2 ।

सस्निग्धं तोयेन उदकार्द्रे[1] त्रसाकुलं च हस्तं मात्रं द्रव्यं वा दृष्ट्वा एकतरमपि तन्मा गृहाण । 'पत्ते'त्ति द्वारमुक्तं, इदानीं भाष्यकार एव 'परियत्ते'[2]त्ति व्याख्यानयन्नाह—'परियट्टियं च मत्तं' परावर्त्तितं[3] सत् गृहस्थमात्रकं कदाचित्सस्निग्धादिसमन्वितं भवति ततश्च सस्निग्धादिषु सत्सु प्रत्युपेक्षणा कर्त्तव्या । उक्तं परावर्त्तितद्वारं, इदानीं 'पाडिय'त्ति द्वारं व्याचिख्यासुराह—

**पडिओ खलु दट्ठव्वो कित्तिमसाभाविओ व जो पिंडो। संजमआयविराहण दिट्ठंतो सेट्ठिकॅप्पट्ठो[4] । ४८१ ।**

पतितः पात्रके पिण्डो द्रष्टव्यः किमयं कृत्रिमः ?–योगेन निष्पन्नः सक्तुमुद्गपिण्ड इव सिद्धपिण्डो वा किं स्वाभा[5]विककूरखोट्ट इव, तत्र यदि कृत्रिमं पिण्डं स्फोटयित्वा तं न निरूपयति ततः संयमात्मविराधना भवति, यथा सेट्ठिकप्पट्ठस्स[6] हूँता[7] काष्ठेन कुण्डिका[8] इत्येतत्कथानकमनुसरणीयं, तेन हि संयोगपिण्डो न निरूपितस्तत्र च संकलिकाऽऽसीत्, तत्र राजकुले व्यवहारस्तेन च काष्ठर्षिणा भगवता निर्व्यूढम्, अन्यश्च कदाचित्तादृशो न भवति ततश्च निरूपणीय इति । तत्रात्मविराधनादिप्रतिपादनायाह—

**गरविस अट्ठिय कंटा विरुद्धदव्वंमि होइ आयाए। संजमओ छक्काया तम्हा पडियं विगिंचिज्जा ॥ ४८२ ॥**

स गर उच्यते य आहारं स्तम्भयति कार्मणं वा गरः, स कदाचित्तत्र पिण्डे भवति, तथा विषमस्थीनि कण्टकाश्च कदाचिद्भवन्ति, विरुद्धं वा किंचिद्द्रव्यं तत्र भवति, ततश्चानिरूपणे एभिरात्मविराधना भवति, तथा संयमतश्च षट्काया

---

१ °कार्द्रमुदके त्रसा° आ । २ 'परियत्तिय'त्ति आ, °यत्तिए'त्ति ल १ पा. १ । ३ तत् गृह° आ. । ४ °कव्वट्ठो आ. । ५ स्वाभा° आ. पा. १ । ६ °कव्व° आ पा १ । ७ हता ल १–२ पा २ । ८ कन्थिका आ. ।

विराध्यन्ते, कथं ?, कदाचिदत्र पृथिवी उदकं वनस्पतिरग्निर्वा लग्नो भवति, यत्राग्निस्तत्र वायुरपि, द्वीन्द्रियादयश्च कदाचिद्भवन्ति, ततश्च 'पडिय विगिंचिआ' विभागेन विभजेत्–निरूपयेदित्यर्थः । अथवाऽनाभोगेन कदाचिदत्र सुवर्णादि स्थापयित्वा ददाति, एतदेवाह—

अणभोगेण भएण व पडिणी उम्मीस भत्तपाणंमि । दिज्जा हिरण्णमाई आवज्जणसकणादिट्ठे ॥४८३॥

अनाभोगेन ददाति–तन्दुलादिमध्ये व्यवस्थितं सुवर्णादि पुनश्च रन्धयित्वा ददात्यनाभोगेन प्रदानं भवति, भयेन वा ददाति, कथं ?, कयापि कस्यचित्परसत्कं सुवर्णमपहृतं पुनश्च प्रत्याकलिता सती कलिकलङ्कभयात्साधोर्वेष्टयित्वा ओदनादिना ददाति, प्रत्यनीकत्वेन वा 'उन्मिश्र्य' एकीकृत्य भक्तपानादिना सह हिरण्यादि ददाति, ततश्च तस्य साधोरेवदोषविनाऽपि यदि न निरूपयति ततः 'आवज्जण'त्ति आपतनं पूर्वोक्तं संयमविराधनादिदोषाणां भवति, प्रमादपरत्वात्तस्य, तथा शङ्कना–दृष्टे तस्मिन् सुवर्णादौ राजप्रभृतीनां शङ्का भवति, यदुत न विद्मः किं तावदयं साधुरेवंविधः आहोस्विदन्यथा दावेति । तस्मात्पतितः सन् पिण्डो निरूपणीयः । इत्युक्तं पतितद्वारं, इदानीं गुरुकद्वारप्रतिपादनायाह—

उक्खेवे निक्खेवे महल्लया लुद्धया वहो दाहो । अवियत्ते वोच्छेओ छक्कायवहो य गुरुमत्ते ॥ ४८४॥

पात्रपानादिविषयेन दत्तं तस्योत्क्षेपे सति निक्षेपे वा–मोक्षणे सति तस्य गुरुस्यस्य कटिभङ्गो वा पादस्योपरि पतनं वा

१ क्वचित् पर. ना. प. १ ।

भवति 'महल्लया' इति महत्प्रमाणं वा तद्गृहस्थभाजनं तस्योत्क्षेपे निक्षेपे सति दोषा भवन्ति, अथवा 'महल्लया' इति महता भाण्डकेन दीयतामित्येवं कदाचिदसौ साधुर्भणति, ततश्चैवं लुब्धता साधोरुपजायते, तथा वधश्च–तस्यैव साधोः पादस्योपरि पतितेन भाण्डकेन वधो भवति, गृहस्थस्य वा पादस्योपरि पतितेन वधो भवति, तथा 'दाहो'त्ति दाहो वा भवति यदि तदुष्णं भण्डकं भवति, अचियत्तं वा भवति तस्यैव गृहस्थस्य तद्गृहपतेर्वा 'अचियत्तं वा' अप्रीतिर्वा भवति, महाप्रमाणकेन भण्डकेन दीयमाने सति व्यवच्छेदो वा तद्द्रव्यस्यान्यद्रव्यस्य वा भवति, षट्कायवधश्च भण्डकपतने सति भवति, एवं गुरुके भण्डके एते दोषा भवन्ति। इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयति, तत्राद्यावयवव्याचिख्यासयाऽऽह—

गुरुदव्वेण व पिहिअं सयं व गुरुयं हवेज्ज जं दव्वं। उक्खेवे निक्खेवे कडिभंजण पाय उवरिं वा ॥२५९॥ भा.

गुरुद्रव्येण वा 'पिहितं' घट्टितं भवेत् तद्द्रव्यं, स्वयं वा तद्द्रव्यं गुडपिण्डकादि गुरुकं भवेत्, ततश्च तस्य 'उत्क्षेपे' उत्पाटने निक्षेपे च पुनर्मोचने सति कटिभङ्गो भवति, पादस्य वा उपरि पतेत्ततश्चात्मविराधना भवति। इदानीं 'महल्लया'-दीनि व्याख्यानयन्नाह—

महल्लेण देहि मा डहरएण भिन्ने अहो इमो लुद्धो। उभएगयरे व वहो दाहो अच्चुण्हि एमेव ॥२६०॥ भा०

कश्चित्साधुः कडुच्छुकिकया ददतीं स्त्रियं एवं ब्रूते–यदुत 'महल्लेण' बृहता भाजनेन स्थाल्यादिना देहि, मा डहरकेण'

---

१ तथा 'दाहो' आ.। २ अचियत्तं भवति ल १–२ पा. २। ३ °कृदाह, तत्राद्यावयवमाह–आ। ४ एगतरवहो आ.। ५ °च्छिकया आ.।

लघुना प्रपञ्च कडुच्छुकादिना, ततः सा तथैव करोति, अप्रकनुषन्त्याश्च कदाचिद्भाजनं भज्यते ततश्च भिन्ने सति तस्मिन् भाजने गृहस्थ एव भवति-पश्चात्तापो ! अथ साधुर्महालुब्धः येन पृथुना भाजनेन दीयमानं गृह्णाति, तत 'उभयस्य' योर्गृहस्थस्य पादस्योपरि पतितेन भाजकेन वधो भवति, एकतरस्य वा वधो भवति, तथा दाहश्च अदत्तुष्मे तस्मिन् द्रव्ये वेत भवति भवति, 'एमेव'त्ति उभयोरन्यतरस्य वा ॥ इदानीं 'अचियत्ते'त्ति व्याख्यानयन्नाह—

पहुगहणे अचियत्त वोच्छेओ तदन्न दव तस्स वावि । छक्कायाण य वहण अइमत्ते तम्मि भत्तम्मि ॥२६१ भा०

पहुग्रहणे सति तस्य घृतादिद्रव्यस्य 'अचियत्त' अप्रीतिर्भवति तस्य तद्गृहपतेर्वा, व्यवच्छेदो वा, तदन्यद्रव्यस्य भवति-तस्य घृतादेः, अन्यद्-तदन्यक्षीरगुडादि तस्य व्यवच्छेदो भवति, तस्य वा-घृतादेर्द्रव्यस्य वा व्यवच्छेदो भवतीति, तथा षट्कायानां वधनं भवति 'अतिमात्रे' प्रचुरमात्रे 'मात्रके' स्थाल्यादौ गृहीते सति । उक्तं गुरुकद्वारं, इदानीं त्रिविधेतिद्वारं प्रतिपादनायाह—

तिविहो य होइ कालो गिम्हो हेमंत तह य वासासु । तिविहो य दायगो खलु थी पुरिस नपुंसओ चेव ॥

त्रिविधो भवति, तद्यथा-ग्रीष्मो हेमन्तो वर्षा च, तत्र त्रिविधेऽपि काले दाता त्रिविध एव भवति, तद्यथा-स्त्री चेति ।

१ भाजनं भ० । २ भा हननं भवति भा पा १ ।

**एक्केक्कोवि अ तिविहो तरुणो तह मज्झिमो य थेरो य। सीयतणुओ नपुंसो सोम्हित्थी मज्झिमो पुरिसो॥४८६**

स पुन एकैकः स्त्र्यादिदाता त्रिविधो भवति–तरुणो मध्यमः स्थविरश्च । इदानीं नपुंसकादीनां स्वरूपप्रतिपादनायाह–शीतलतनुर्नपुंसको भवति, 'सोम्हित्थि'त्ति सोष्मा स्त्री भवति, मध्यमश्च पुरुषो भवति–नात्युष्णो नातिशीतल इति ॥

**पुरकम्मं उदउल्लं ससिणिद्धं तंपि होइ तिविहं तु। इक्किक्कंपि य तिविहं सच्चित्ताचित्तमीसं तु ॥४८७॥**

न केवलं कालादयस्त्रिविधाः यच्च पुरःकर्मादि तदपि त्रिविधं, तद्यथा–पुरःकर्म उदकार्द्रं सस्निग्धं चेति, तत्पुनरेकैकं त्रिविधं सचित्ताचित्तमिश्रभेदभिन्नं भवति, एतदुक्तं भवति–यत्पुरःकर्म तत्सचित्तमचित्तं मिश्रं चेति, तत्राचित्तं स्थाप्यं, यदपि उदकार्द्रं तदपि सचित्तमचित्तं मिश्रं चेति, यदपि सस्निग्धं तदपि सचित्तमचित्तं मिश्रं चेति । इदानीं यदुक्तं पुरःकर्मादित्रितयं तत्राद्यद्वयस्य प्रतिषेधं कुर्वन्नाह—

**आइदुवे पडिसेहो पुरओ कयं जं तु तं पुरेकम्मं। उदउल्लबिंदुसहिअं ससणिद्धे मग्गणा होइ ॥४८८॥**

आद्यद्वयस्य पुरःकर्मण उदकार्द्रस्य च प्रतिषेधो द्रष्टव्यः, यतस्ताभ्यां सदोषत्वान्नैव व्यवहार इति । इदानीं पुरःकर्मादीनां लक्षणप्रतिपादनायाह–'पुरओ कयं जं तु तं पुरेकम्मं' भिक्षायाः पुरतः–प्रथममेव यत्कृतं कर्म–कडुच्छुकादिप्रक्षालनादि तत्पुरःकर्माभिधीयते, उदकार्द्रं पुनरुच्यते यद्बिन्दुसहितं भाजनादि गलद्बिन्दुरित्यर्थः, सस्निग्धं पुनरुच्यते यद्बिन्दुरहि-

1 यदपि तत्पुर° आ पा १–२ । 2 यदपि आ. ल. २ पा १–२ । 3 ज कीरई तं पु । 4 जं कीरइ त पु.

तमोर्द्र च, तत्रेह सस्निग्ध 'मार्गणा' अन्वेषणा कर्तव्या यतः सस्निग्धे हस्तादौ ग्रहण भविष्यत्यपि ॥

सासिणिद्धपि य तिविह सचित्ताचित्तमीसग चेव। अचित्त पुण ठप्प अहिगारो मीससच्चित्ते ॥ ४८९ ॥

यथसस्निग्ध तत्त्रिविधं-सचित्तमचित्त मिश्र चेति। तत्राचित्त स्थाप्य यतस्तत्राचित्तसस्निग्धे ग्रहण क्रियत एव न तत्र निरूपणा, अधिकारः पुनः-निरूपण मिश्रसचित्तयोः कर्तव्यं। इदानीं मिश्रसचित्तसस्निग्धे हस्ते सति ग्रहणविधिं प्रतिपादनायाह—

पव्वाण किंचि अव्वाणमेव किंचिव्व होअणुव्वाण। पाएण हि त सव पक्कक्कहाणी य वुड्ढी य॥ ४९० ॥

तत्र हस्ते सस्निग्ध किञ्चित् प्रम्लान-मनाक्शुष्कं तथा 'अव्वाण'ति आम्लानमुव्वानं किञ्चित्स्निग्ध 'किञ्चिच होअणु व्वाणं'ति किञ्चिच स्निग्धमनाम्लानमनुव्वान च, त्रिविधमप्येतत्सर्वं प्रायेण सस्निग्धमुच्यते, एवमेतद्विभाज्य तत एकैकशु शुष्कभागवृद्ध्या ग्रहण कर्तव्यं पूर्वानुपूर्व्या, तथा एकैकशुष्कभागहान्या पश्चानुपूर्व्या ग्रहाति भिक्षां। सा एकैकभाग वृद्धिः कथ कर्तव्येत्यत आह—

सत्तविभागे उ कर विभइत्ताण इत्थिमाईण। निच्छुभंपयेरवि य पव्वे रेहा करतले य ॥ ४९१ ॥

'सप्त विभागान्' सप्तधा वा 'करं' हस्तं 'विभज्य' विभागीकृत्य, केषां ?-स्त्र्यादीनां, एते विभागा एतानशीकस्य

१ °मार्ग भा । २ °विभागेस कं भा प १ । ३ अमक्ष° भा प १ । ४ ते न वि° भा पा २ ।

कर्त्तव्याः, के च ते ?–'निम्नोन्नतेतरान्' तत्र निम्नं त्वङ्गुलिपर्वरेखा उन्नतमङ्गुलिपर्वाणि इतरत्–करतलं नोन्नतं नापि निम्नं। इदानीं केन शुष्केण प्रदेशेन कः प्रदेशः प्रम्लानो भवति ? केन वा प्रम्लानेन प्रदेशेन कः सार्द्रः प्रदेशो भवतीत्यस्यार्थस्य ज्ञापनार्थमाह—

**जाहे य उन्नयाइं उव्वाणाइं हवंति हत्थस्स। ताहे तलपव्वाणा लेहा पुण होंतऽणुव्वाणा ॥ ४९२ ॥**

यदा उन्नतानि हस्तस्थानानि उद्वानानि भवन्ति तदा हस्ततलं प्रम्लानं–मनाक् शुष्कं भवति रेखास्तु भवन्त्यनुद्वानाः।

इदानीं शुष्कहस्तस्थानानामेकैकवृद्ध्या यथा यस्मिन् काले ग्रहणं भवति तथा प्रदर्शयन्नाह—

**तरुणित्थि एक्कभागे पव्वाणे होइ गहण गिम्हासु। हेमंते दोसु भवे तिसु पव्वाणेसु वासासु ॥४९३॥**

तरुण्याः स्त्रिय उन्नतसप्तमैकभागे प्रम्लाने शुष्के सति उष्णकाले गृह्यते भिक्षा यतः स्वोष्मतया कालस्य चोष्णतया यावता कालेन असावुन्नतप्रदेशः शोषमुपगतस्तावता कालेन इतरेऽपि निम्नप्रदेशाः सार्द्रा अपि अचित्ताः संजाता अतः कल्पते भिक्षाग्रहणं, हेमन्तकाले तस्या एव तरुण्या द्वयोः सप्तमभागयोः शुष्कयोः सतोर्भिक्षाग्रहणं भवेदिति, तस्या एव तरुण्या वर्षाकाले त्रिषु सप्तमभागेषु शुष्केषु सत्सु भिक्षाग्रहणं भवति।

**एमेव मज्झिमाए आढत्तं दोसु ठायए चउसु। तिसु आढत्तं थेरी य नवरि ठाणेसु पंचसु उ ॥४९४॥**

१ निम्नोन्नतेतरे आ पा १–२। २ शोष्म° आ पा १–२–पु।

एवमेव मध्यमायाः स्त्रिया उष्णकाले द्वयोर्भागयोः प्रारभ्य चतुर्षु भागेषु संतिष्ठते, एतदुक्तं भवति–मध्यमायाः स्त्रिया उष्णकाले द्वयोः सप्तमभागयोः शुष्कयोः सतोर्ग्रहण भवति, तथा तस्या एव मध्यमायाः स्त्रिया हेमन्ते काले त्रिषु सप्तमभागेषु शुष्केषु सत्सु ग्रहण भवति, तस्या एव च मध्यमस्त्रिया वर्षाकाले चतुर्षु सप्तमभागेषु शुष्केषु सत्सु भिक्षाग्रहण कर्तव्य, एवं स्थविराया अपि उष्णकाले त्रिषु भागेषु प्रारभ्य पञ्चसु भागेषु संतिष्ठते, एतदुक्तं भवति–उष्णकाले स्थविर्याख्रिषु सप्तम भागेषु शुष्केषु सत्सु ग्रहण भवति, तथा तस्या एव स्थविर्या हेमन्तकाले चतुर्षु सप्तमभागेषु शुष्केषु सत्सु भिक्षाग्रहण मेवति, तथा तस्या एव स्थविर्या वर्षाकाले पञ्चसु सप्तमभागेषु शुष्केषु सत्सु भिक्षाग्रहण कर्तव्यम् ।

एमेव होइ पुरिसे दुगाइछट्ठाण पज्जवसिएसु। अपुम तु तिभागाई सत्तमभागे अवसिते उ ॥ ४९५ ॥

एवमेव पुरुषस्य द्वयोर्भागयोः प्रारभ्य षट्स्थानपर्यवसितेषु भागेषु संतिष्ठते, एतदुक्तं भवति–तरुणपुरुषस्योष्णकाले भागद्वये शुष्के सति गृह्यते, तथा तस्यैव तरुणस्य शीतकाले त्रिषु भागेषु शुष्केषु सत्सु भिक्षा गृह्यते, तथा तस्यैव तरुणस्य वर्षाकाले चतुर्षु भागेषु शुष्केषु सत्सु ग्रहण, तथा मध्यमपुरुषस्योष्णकाले त्रिषु भागेषु शुष्केषु सत्सु ग्रहण भवति, तस्यैव मध्यमस्य हेमन्तकाले चतुर्षु भागेषु शुष्केषु सत्सु ग्रहण, तथा तस्यैव मध्यमस्य वर्षाकाले पञ्चसु भागेषु शुष्केषु सत्सु भिक्षाग्रहण कर्तव्य, तथा वृद्धपुरुषस्योष्णकाले चतुर्षु भागेषु शुष्केषु सत्सु ग्रहण कर्तव्य तथा तस्यैव वृद्धस्य हेमन्तकाले पञ्चसु भागेषु शुष्केषु सत्सु ग्रहण, तस्यैव वृद्धस्य वर्षाकाले षट्सु भागेषु शुष्केषु सत्सु भिक्षाग्रहण कर्तव्य । नपुंसकस्य पुनस्त्रिभागेष्वारभ्य

१ कर्तव्ये तस्या भा ।

सप्तमभागे अवसिते सति संतिष्ठते, एतदुक्तं भवति–सर्वस्मिन् हस्ते शुष्के सति ग्रहणं कर्त्तव्यं भवति, अत्र चेयं भावना–तरुणनपुंसकस्योष्णकाले त्रिषु भागेषु शुष्केषु भिक्षाग्रहणं कल्पते, तस्यैव तरुणनपुंसकस्य हेमन्तकाले चतुर्षु भागेषु शुष्केषु भिक्षाग्रहणं, तस्यैव च वर्षाकाले पञ्चसु भागेषु शुष्केषु ग्रहणं, मध्यमनपुंसकस्योष्णकाले चतुर्षु भागेषु शुष्केषु सत्सु ग्रहणं, तस्यैव च हेमन्तकाले पञ्चसु भागेषु शुष्केषु ग्रहणं, तस्यैव च वर्षाकाले षट्सु विभागेषु शुष्केषु ग्रहणं, वृद्धनपुंसकस्योष्णकाले पञ्चसु भागेषु शुष्केषु सत्सु भिक्षाग्रहणं, तस्यैव हेमन्तकाले षट्सु भागेषु शुष्केषु भिक्षाग्रहणं, तस्यैव च वृद्धनपुंसकस्य वर्षाकाले सप्तस्वपि सप्तमभागेषु शुष्केषु सत्सु भिक्षाग्रहणं कर्त्तव्यमिति। एवमेकैकवृद्ध्या ग्रहणमुक्तं, पश्चानुपूर्व्या तु एकैकभागहान्या भिक्षाग्रहणं वेदितव्यं, तच्चैवं–स्थविरनपुंसकस्य वर्षाकाले सप्तभिरपि हस्त( सप्तम )भागैः शुष्कैर्गृह्यते भिक्षा, तस्यैव च शीतकाले षड्भिर्भागैः शुष्कैर्गृह्यते भिक्षा, तस्यैवोष्णकाले पञ्चभिर्भागैः शुष्कैर्गृह्यते, एवमनया हान्या तावन्नेतव्यं यावत्तरुणी स्त्रीति। उक्तं त्रिधा द्वारं, भावद्वारप्रतिपादनायाह—

**दुविहो य होइ भावो लोइयलोउत्तरो समासेणं। एक्किक्को वि य दुविहो पसत्थओ अप्पसत्थो य ।४९६।**

द्विविधो भवति भावः–लौकिको लोकोत्तरश्चेति, समासतः पुनरेकैको द्विविधः–प्रशस्तोऽप्रशस्तश्च, लौकिकः प्रशस्तोऽप्रशस्तश्च, एवं लोकोत्तरोऽपि। तत्रोदाहरणमुच्यते–एगंमि सन्निवेसे दो भाउया वणिया, ते य परोप्परं विरिक्का, तत्थ एगो गामे गंतूण करिसणं करेइ, अण्णोवि तहेव, तत्थ एकस्स सुमहिला अण्णस्स दुम्महिला, जा सा दुम्महिला सा गोसे उट्ठिया मुहो-

१ °भागेषु संति° आ, °भागेऽप्यपगतें सति सति° ल. १ ।

दगदतपक्खालणअरागफलिहमाईहिं मडती अच्छइ कम्मारगाईण न किंचि जोगक्खेम वहइ, कडेज्जय च करेइ, अण्णस्स य जा सा महिला कम्मारमाईण जोगक्खेम वहइ अप्पणो य सकज्जं महणादि करेइ, तत्थ जा सा अप्पणो चेव महणे लग्गा अच्छइ तीए अचिरेण कालेण परिक्खीण घरं, इयरीए घरं धणधण्णेण समिद्धं जायं। एव च जो साहू वण्णहेउ रूवहेउ वा रसहेउं वा आहारं आहारेइ, नवि आयरिए णवि बालवुड्ढगिलाणदुब्बले य पडियग्गति अप्पणो य गहाय पज्जत्त निवचइ, एय सो मप्पपोसओ, जहा सा लुद्धा हिरण्णाईण एव इमोवि जो निज्जरालाभो तस्स चुक्किहिइ, एतस्पो इमो जो णो वण्णहेउ णो रूवहेउ वा रसहेउं वा आहारं आहारेइ, बालाईण दाउ पच्छा आहारेइ, सो नाणदसणचरित्ताण आभागी भवति। एवं पसत्थेण भावेण आहारेयव्वो सो पिंडो। इदानीमेतदेवार्थजात गाथाभिरुपसंहरन्नाह—

सज्जिलगा दो वणिया गाम गतूंण करिसणारम्भो। एगस्स देहमंडणधाउसिआ भारिया अलसा ॥४९७॥

मुहधोवण दंतवण अद्दागाईण कच्छ आवास। पुंव्वाणिहकरणमप्पण उक्कोसयर च मज्जणहे ॥ ४९८ ॥

तणकट्ठहारगाण न देइ न य दासपेसवग्गस्स। न य पेसणे निउजइ पलाण हिय हाणि गेहस्स ॥४९९॥

बिइयस्स पेसवग्ग वावारेऊण पेसणे कम्मे। काले देइआहार सय च उवजीवई इड्ढी ॥ ५०० ॥

सुगमाः नवरं 'धाउसिआ' विहूमणसीला ॥ मुखधावन करोति तथा 'कच्छ'त्ति कल्पपूपकम् आवश्यक पूर्वाह्णे करो

1 भार२ आ.। २ छोरि मिश्र आ. पा १।३ नमेवार्थ आ. पा १.२। ४ पमयो ग क १ पु.। ५ पुव्वव° आ। ६ कवपेसणे आ।

त्यात्मन उत्कृष्टतरं च घृतपूर्णादि मध्याह्ने भक्षयत्येकाकिनी । तृणकाष्ठहारकाणां न किञ्चिद्ददाति दासवर्गस्य तथा प्रेष्यो यः कश्चित्प्रेष्यते तद्वर्गस्य च न किञ्चिद्ददाति, न च 'प्रेषणे कार्ये, नियुङ्क्ते कर्मकरान्, ततश्च भोजनादिना विना 'पलाणा' नष्टा हृतं च यत्किञ्चिद्गृहे रिक्थमासीत्, एवं हानिर्जाता गेहस्य, तत्रायं लौकिकोऽप्रशस्तो भावः । इदानीं लौकिकप्रश-स्तभावप्रतिपादनायाह–द्वितीयस्य या भार्या सा प्रेष्यवर्गं प्रेषणे कार्ये व्यापार्य कर्मणि च त्रिविधे काले च तेषामाहारं ददाति स्वयं च काले आहारमुपजीवति ऋद्धिं च उपजीवति । अयं च लौकिकोऽत्र प्रशस्तो भाव उक्तः, इदानीं लोकोत्तरा-प्रशस्तभावप्रतिपादनायाह—

वन्नबलरूवहेउं आहारे जो तु लाभि लब्भंते। अतिरेगं न उ गिण्हइ पाउग्गगिलाणमाईणं ॥५०१॥
जह सा हिरण्णमाईपरिहीणा होइ दुक्खआभागी । एवं तिगपरिहीणो साहू दुक्खस्स आभागी ॥५०२
आयरियगिलाणट्ठा गिण्हइ न महंति एव जो साहू। नो वन्नरूवहेउं आहारे एस उ पसत्थो ॥५०३॥

वर्णबलरूपहेतुमाहारयति यश्च लाभे क्षीरादौ लभ्यमाने सति प्रायोग्यं ग्लानादीनामतिरिक्तं न गृह्णाति । यथा सा गृहस्था हिरण्यादिपरिहीणा संजाता दुःखभागिनी च जाता एवं साधुरपि त्रिकेण–ज्ञानदर्शनचारित्रलक्षणेन हीनो दुःखस्य

१ 'रमना चोरऊ' आ पा. १। २ स्थितमा° ल १। ३ व्यापारयित्वा प्रेषणा कार्ये कर्मणि च विविधे आ. । ४ °जीवति । अय आ. । ५ °माईङ परि° आ. पा. १।

भागी भवति। उक्तो लोकोत्तरोऽप्रशस्तः, इदानीं लोकोत्तरप्रशस्तभावप्रदर्शनायाह–आचार्यादीनामर्थाय गृह्णाति, न ममेदं योग्यं किन्त्वाचार्यादेः, एवं यः साधुर्गृह्णाति, शेषं सुगमं। उक्तो लोकोत्तरः प्रशस्तो भावः, उक्तं भावद्वारम् ॥

उग्गमउप्पायणएसणाए बायाल होंति अवराहा। सोहेउ समुयाणं पज्जुप्पन्ने वच्चए वसहिं ॥ ५०४ ॥

सुन्नघरदेउले वा असई य उवस्सयस्स वा दारे। ससत्तकंटगाई सोहेउमुवस्सगं पविसे ॥ ५०५ ॥

एवं साधुरुद्गमोत्पादनैषणाभिर्द्विचत्वारिंशदपराधा भवन्ति तैः समुदानं भैक्ष 'शोधयित्वा' विविच्य ततः 'पज्जुप्पन्ने वच्चए वसहिं' लब्धे सति भक्तादौ वसतिं प्रयाति। इदानीं तद्भक्तं गृहीतं सन्शोधयित्वा वसतिं प्रविशति, केषु स्थानेषु?, अत आह–गृहीत्वा भक्तमुपाश्रयाभिमुखो व्रजन् शून्यगृहे तद्भक्तं प्रत्युपेक्ष्य ततो वसतिं प्रविशति, तदभावे देवकुले वा, 'असई य' गृहादीनामभावे उपाश्रयद्वारे संसक्तं भक्तं कण्टकैर्वा यद्व्याप्तं तत् शोधयित्वा–प्रोज्झ्य संसक्तादिभक्तं तत उपाश्रयं प्रविशति। एवं तस्य प्रत्युपेक्ष्यमाणस्य कदाचित्संसक्तं भवति ततः किं करोतीत्यत आह—

ससत्त तच्चोच्चिअ परिट्ठवित्ता पुणो दव गिण्हे। कारण मत्तय गहिअ पॅडिग्गहे छोढु पविसणया॥५०६॥

यदि तत्र संसक्तं भक्तं पानकं वा भवेत्ततोऽस्मादेव स्थानात्परिस्थाप्य पुनरप्यन्यद्द्रव्यं गृह्णाति, तथा ग्लानादिकारणेन च मात्रके यद्गृहीतमासीत्तत्पतद्ग्रहे प्रक्षिप्य प्रविशति, यतस्तस्य साधुभिरागच्छतो यद्युत ग्लानस्यान्यद्गृहमतो निष्कारणं

१ "एवमर्हि" भ. २। २ साधोरु" क. १–२। ३ भवेद्, एवं" भा. क २। ४ उपाश्रय क १ पु.। ५ प्रतिस्थाप्य भा।

मात्रकोपयोगं परिहरन् पतद्ग्रहे प्रक्षिप्य प्रविशति, निष्कारणमात्रकोपयोगे च प्रमादी भवति। एवमसौ परिशुद्धे सति भक्ते प्रविशति उपाश्रयं। अथाशुद्धं भवति ततः परिष्ठाप्य किं करोतीत्यत आह—

**गामे य कालभाणे पहुवमाणे हवंति भंगट्ठा। काले अपहुप्पंते नियत्तई सेसए भयणा ॥ ५०७ ॥**

यदा ग्रामः पर्याप्यते कालश्च यदा पर्याप्यते भाजनं च पर्याप्यते एवमस्मिंस्त्रये पर्याप्यमाणे सति पदत्रयनिष्पन्ना अष्टौ भङ्गका भवन्ति, तेषां च भङ्गकानां मध्ये यस्मिन् भङ्गके कालो न पर्याप्यते तस्मिन्निवर्त्तेत एव, शेषेषु च चतुर्षु भङ्गकेषु 'भजनां' विकल्पनां करोति। इदानीं भजनां दर्शयन्नाह—

**अण्णं च वए गामं अण्णं भाणं व गिण्ह सइ काले। पढमे बीए छप्पंचमे य भय सेस य नियत्ते ॥५०८॥**

अन्यं ग्रामं वा व्रजति काले पर्याप्यमाणे, [2]अन्यच्च भाजनं गृह्णाति पर्याप्यमाणे काले सति एवं प्रथमे भङ्गके द्वितीये च षष्ठे पञ्चमभङ्गके च 'भजनां' सेवनां करोति काले सति, शेषभङ्गकेषु येषु कालो न पर्याप्यते तेषु '[3]निवर्त्तेत' न गन्तव्यं भिक्षाया इत्यर्थः। स च पर्याप्यमाणः कालो द्विविधः—जघन्य उत्कृष्टश्च तत्र जघन्यप्रतिपादनायाह—

**वोसिट्ठु[4]मागयाणं [5]उव्वासिअ मत्तए य भूमितिअं। पडिलेहे[6]अणत्थमिए सेसत्थमिए जहन्नो उ ॥५०९॥**

---

१ करोति सेवना वा करोति आ.। २ अन्य च आ। ३ 'निवर्त्तन' गन्त° आ. पा. १। ४ वोसिट्ठु° आ, वोसिचमा° पु। ५ उव्वसिअ ल. १ पु। ६ °लेहियमत्यमणं आ. पा. १।

सन्ध्यां व्युत्सृजन्त्यागतानां मात्रकं च यस्मिन् तोयं गृहीत्वा मत आसीन्निर्लेपनार्थं तस्मिन्नुद्वासिते—शोषिते सति भूमित्रिके च—कायिकीभूमौ द्वादश स्थण्डिलानि सञ्ज्ञाभूमौ द्वादश स्थण्डिलानि कालभूमौ त्रीणि स्थण्डिलानि, एवमस्मिन् भूमित्रिके प्रत्युपेक्षिते सति यदाऽस्तमनं भवति तस्मिन् प्रदेशे 'सेसस्थमिए'त्ति शेषार्धं अस्तमिते आदित्ये प्रत्युपेक्षते एवा भयमित्यम्भूतो जघन्यः काल इति । इदानीमुत्कृष्टकालप्रतिपादनायाह—

भुत्ते वियारभूमिं गयागयाण तु जइ य ओगाहे । चरमाए पोरिसीए उक्कोसो सेस मज्झिमओ ॥५१०॥

भुक्ते सति विचारभूमिं—सञ्ज्ञाभूमिं गत्वाऽऽगतानां यदा 'ओगाहे' आगच्छति चरमा पौरुषी—चतुर्थः प्रहरः, अथवा चरमपौरुषी—पादोनचतुर्थप्रहरो यदाऽऽगच्छति अस्यां वेलायामयमुत्कृष्टः कालः, शेषस्त्वन्यो मध्यमः काल इति । तेन च भिक्षामटित्वा विनिवृत्य प्रविशता वसतौ किं कर्तव्यमत आह—

पायपमज्जण बाहिं निसीहि तिन्नि उ करे पवेसम्मि । अजलि ठाणविसोही दंडग उवहिस्स निक्खेवो ॥

बहिरेव वसतेः पादौ प्रमार्जयति निषीधिका( नैषेधिकी )त्रितयं करोति, प्रविशन् पुनश्च गुरोः पुरस्तादञ्जलिना नमस्कारं करोति " नमो खमासमणाणं "ति, तथा प्रविश्य स्थानं विशोधयति यत्र दण्डकस्योपधेश्च निक्षेपं करोति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह—

१ भूमी आ. ब १ । २ गत्ता° आ पा. २ । ३ °निसीहिआ य तिन्नि आ. ।

**एवं पडुपन्ने पविसओ उ तिन्नि उ[1] निसीहिया होंति । अग्गद्दारे मज्झे पवेस पाए [2]असागरिए ॥२६२॥ भा०**

एवं प्रत्युत्पन्ने–लब्धे सति भक्ते प्रविशतस्तिस्रो निषीधिका[3](नैषेधिक्यः) भवन्ति, क? अग्रद्वारे प्रथमा द्वितीया मध्य-प्रदेशे वसतेः प्रवेशे च मूलद्वारस्य तृतीयां निषीधिकां[4](नैषेधिकीं) करोति पादौ च प्रमार्जयति यदि कश्चित्सागारिको न भवति, अथ तत्र सागारिको भवति ततो वरण्डकाभ्यन्तरे प्रमार्जनं करोति, अथ म[5]ध्येऽपि भवति–द्वितीयनिषीधिका (नैषेधिकी) स्थानेऽपि भवति [6]सागारिकः ततो मध्ये प्रविश्य प्रमार्जयति पादौ, [7]अनेनैव कारणेन पश्चाद्धाष्यकारेण पादप्रमार्जनं व्याख्यातं येन तदनियतं वर्त्तते, निषीधिकासु (नैषेधिकीषु) [8]कृतास्वपि कारणवशात्संभवतीति । इदानीमञ्जल्यवयवं व्याख्यानयन्नाह—

**हत्थुस्सेहो सीसप्पणामणं वाइओ नमोक्कारो । गुरुभायणे पणामो वायाए नमो न उस्सेहो ॥२६३॥ भा०**

[9]हस्तस्योत्सेधं नमस्कारार्थं करोति, शीर्षप्रणमनं करोति, वाचा च "नमो खमासमणाणं"ति, इत्येवं नमस्कारं करोति, अथ तद्गुरु भिक्षाभाजनं भवति मात्रकं च गुरु गृहीतमङ्गुलीभिः ततश्चैवं गुरुणि भाजने सति शिरसा प्रणामं करोति वाचा च नम इत्येवं ब्रूते, न हस्तस्योच्छ्रयं करोति, यतोऽसौ गुरोर्मात्रिकस्याधो हस्तो दत्तः सं[10]धारणार्थमतोऽक्षणिकस्ततश्च नोच्छ्रयं करोति । इदानीं स्थानविशोधिं व्याख्यानयन्नाह—

---

१ व आ ल. १–२, पा. २ । २ य सागरिए आ ल १–२ पा १–२ । ३ निषेधिका ल. १–२ । ४ निषेधिका ल. १–२ । ५ मध्यमेऽपि आ. । ६ ततो आ । ७ तेन च कार° आ पा १, २ । ८ अकृता° आ । ९ हस्तोच्छ्रयं ल १ । १० साधारणा° आ. ।

उवरिं हिट्ठा य पमज्जिऊण लट्ठिं ठवेज्ज सट्ठाणे। पट्ट उवहिस्सुवरिं भायणवत्थाणि भाणेसु ॥२६४॥(भा)

उपरि–स्वस्थाने अधस्ताच्च–भुव प्रमृज्य पुनश्च स्वस्थाने यष्टिं स्थापयेत्, पुनश्च 'पट्टकं' चोलपट्टकमुपधेरुपरि स्थापयति–मुञ्चति 'भाजनवस्त्राणि च' पटलानि 'भाजनेषु' पात्रकोपरि स्थापयति ॥

अह पुण पासवण से हविज्ज सो उग्गह सपच्छाग। दाउ अन्नस्स सचोलपट्टओ काइय निसिरे ॥२६५॥

यदि पुनस्तस्य साधोः 'प्रश्रवणं' कायिकाविधिर्भवति ततश्च 'अवग्रहं' पतद्ग्रहं 'सपच्छागं' सपटलं 'दाउ' अर्पयित्वा अन्यस्य साधोः पुनश्च सह चोलपट्टकेन–चोलपट्टकद्वितीयः कायिकां व्युत्सृजति। कायिकां व्युत्सृज्य कायोत्सर्गं करोति, तत्र च यो विधिरित्यत आह–

चउरङ्गुलमुहपत्ती उज्जुए वामहत्थि रयहरण। वोसट्ठचत्तदेहो काउस्सग्ग करिज्जाहि ॥५१२॥

चतुर्भिरङ्गुलैर्जानुनोरुपरि चोलपट्टं करोति नाभेश्चाधश्चतुर्भिरङ्गुलैः पादयोश्चान्तरं चतुरङ्गुलं कर्तव्यं, तथा मुखवस्त्रिका दक्षिणहस्तेन गृह्णाति वामहस्तेन च रजोहरणं गृह्णाति, पुनरसौ व्युत्सृष्टदेहः–प्रलम्बितबाहुस्त्यक्तदेहः सर्पादिप्रयोगेऽपि नोत्सारयति कायोत्सर्गं, अथवा व्युत्सृष्टदेहो दिव्योपसर्गेष्वपि न कायोत्सर्गभङ्गं करोति, त्यक्तदेहोऽक्षिमलदूषिकामपि नापनयति, स एवंविधः कायोत्सर्गं कुर्यात्। इदानीमेनामेव गाथां भाष्यकारो व्याख्यानयन्नाह–

1 उम्मास व. १ २।

चउरंगुलमप्पत्तं जाणुं[1]गहिट्ठा छिवोवरिं नाहिं । उभओ कोप्परधरिअं करिज्ज पट्टं च पडलं वा २६६ भा०
पुव्वुद्दिट्ठे ठाणे ठाउं चउरंगुलंतरं[2] काउं । मुहपोत्ति उज्जुहत्थे वामंमि य पायपुंछणयं ॥ ५१३ ॥
काउस्सग्गंमि ठिओ चिंते समुयाणिए अईयारे । जा निग्गमप्पवेसो तत्थ उ दोसे मणे कुज्जा ॥५१४॥

चतुर्भिरङ्गुलैरधो जानुनी अप्राप्तश्चोलपट्टको यथा भवति तथा नाभिं चोपरि चतुर्भिरङ्गुलैर्यथा न स्पृशति, उभयतो-बाहुकूर्पराभ्यां धृतं करोति 'पट्टकं' चोलपट्टकं पडलं वा उभयकूर्परधृतं करोति, यदा चोलपट्टकः सच्छिद्रो भवति तदा पटलं गृह्णाति । पूर्वोद्दिष्टमेव कायोत्सर्गस्थानं तस्मिन् स्थित्वा, तथा पादस्य पादस्य चान्तरं चतुरङ्गुलं कृत्वा मुखवस्त्रिकां च दक्षिणहस्ते कृत्वा वामहस्ते च पादपुञ्छनकं-रजोहरणं कृत्वा कायोत्सर्गेण[3] तिष्ठति । पुनश्च कायोत्सर्गे च स्थितश्चिन्तयेत्, 'सामुदानिकानतिचारान्' भिक्षातिचारानित्यर्थः, कस्मादारभ्य चिन्तयत्यतिचारान् ?-निर्गमादारभ्य यावत्प्रवेशो वसतौ जातः, अस्मिन्नन्तराले तत्र ये दोषा जातास्तान् 'मनसि करोति' स्थापयति चेतसि ॥

ते उ पडिसेवणाए अणुलोमा होंति वियडणाए य । पडिसेववियडणाए एत्थ उ चउरो भवे भंगा ॥५१५॥

तांश्चातिचारान् प्रतिसेवनानुलोम्येन-यथैव प्रतिसेवितास्तेनैवानुक्रमेण कदाचिच्चिन्तयति, तथा 'वियडणाए'त्ति विकटना-आलोचना तस्यां चानुलोमानेव चिन्तयति, एतदुक्तं भवति-पढमं लहुओ दोसो पडिसेविओ पुणो वड्डो वड्डयरो,

१ जाणूद्दिट्ठां पा २ । २ पाय चउ° ल. २ । ३ °त्सर्गेण व्यवस्थित° आ. ।

वितेइ एवमेव, ततश्च प्रतिसेवनायां अनुकूलम्, आलोचनायामप्यनुकूलमेव, यतः प्रथम लघुको दोष आलोच्यते पुनर्गुरुतरः पुनर्गुरुतम इत्येष प्रथमो भङ्गक इति, अण्णो पडिसेवणाए अणुकूलो न उण वियडणाए, एतदुक्तं भवति–आसेविअं पढम गुरुं पुणो लहुअं पुणो गरुयरं, वितेइ एवमेव, ततश्च प्रतिसेवनाया अनुकूल न त्वालोचनायाः, यतस्तत्र प्रथम लघुतर आलोच्यते पुनर्गुरुतरः पुनर्गुरुतम इत्येष द्वितीयो भङ्गकः, अण्णो पडिसेवणाए अणणुकूलो आलोयणाए पुण अणुकूलो, एतदुक्तं भवति–गुरुविवज्ञा पडिसेविआ वितेइ पुण आलोयणाणुकूलेणं, एसो तइओ भंगो, अण्णो उण पडिसेवणाएवि अणणुकूलो आलोयणाएवि अणणुकूलो, एतदुक्तं भवति–पढम गुरुं पडिसेविओ पुणो लहुओ पुणो गरुओ पुणो गरुयरो, वितेइ पुण व जहा संभरइ, पढम गरुं पुणो लहुओ पुणो गरुं पुणो गरुयरो एस अइविपरीअं वितहस्स य पडिसेवणाणुकूलो णालोयणाणुकूलो, एस चउत्थो, एसो य वज्जेयव्वो। इदानीमप्रमेयार्थं भावार्थेनोपसंहरन्नाह–'पडिसेवणावियडणाए य होंति एएवि चउभंगा' (एत्थ उ चउरो भवे भंगा) इद व्याख्यातमेवेति। इदानीं साम्प्रतानिकमनविचारानालोचयति यदि व्याक्षेपादिरहितो गुरुर्भवेत्, अथ व्याक्षिप्तो भवति तदा नालोचयति, एतदेवाह—

वक्खित्तपराहुत्ते पमत्ते मा कयाइ आलोए। आहार च करिंतो नीहार वा जइ करेइ ॥ ५१६ ॥

कहणाईवक्खित्ते विकहाइ पमत्ते अन्नओ व मुहे। अतरमकारए वा नीहारे सक मरण वा ॥२९७॥(भा)

व्याक्षिप्तो धर्मकथनादिना स्वाध्यायेन, 'पराहुत्तो'त्ति पराङ्मुखः पराभिमुख इत्यर्थः, प्रमत्त इति विकथयति, एवंविधे

1 एत कल्पचूर्णौ, प्रमत्त ब. 1-2।

गुरौ न कदाचिदालोचयेत्, तथाऽऽहारं कुर्वति सति, तथा नीहारं वा यदि करोति ततो नालोचयति । इदानीमेतामेव गाथां भाष्यकारो व्याख्यानयन्नाह–धर्मकथादिना व्याक्षिप्तः कदाचिद् गुरुर्भवति, त्रिकथादिना वा प्रमत्तोऽन्यतोऽभिमुखो वा भवति, भुञ्जतोऽपि वा नालोचनीयं, किं कारणं ? 'अंतर'ति अन्तरायं भवति यावदालोचनां शृणोति, अकारकं वा–शीतलं भवति यावदालोचनां शृणोति । तथा नीहारमपि कुर्वतो नालोचनीयं, किं कारणं ?, यत आशङ्कया साधुजनितया न कायिकादि निर्गच्छति, अथ धारयति ततो मरणं वा भवति । यस्मादेते दोषास्तस्मात्—

**अव्वक्खित्ताउत्तं उवसंतमुवट्ठिअं च नाऊणं । अणुन्नवित्तु मेहावी आलोएज्ज सुसंजए ॥ ५१७ ॥**

**कहणाइ अवक्खित्ते कोहाइ अणाउले तदुवउत्ते । संदिसहात्ति अणुन्नं काऊण विदिन्नमालोए ॥२६८॥**

धर्मकथादिनाऽव्याक्षिप्ते गुरौ आलोचयेत्, आयुक्तं–उपयोगतत्परं 'उपशान्तं' अनाकुलं गुरुं दृष्ट्वा 'उपस्थितं' उद्यतं च ज्ञात्वा, एवंविधं गुरुमनुज्ञाप्य मेधावी आलोचयेत् 'सुसंयतः' साधुः । इदानीमेतामेव गाथां व्याख्यानयन् भाष्यकृदाह–धर्मकथादिनाऽव्याक्षिप्ते क्रोधादिभिरनाकुले तदुपयुक्ते–भिक्षालोचनोपयुक्ते च 'संदिसहत्ति अणुन्नं काऊण' संदिशत आलोचयामीत्येवमनुज्ञां कृत्वा मार्गयित्वेत्यर्थः, 'विदिण्ण'त्ति आचार्येण विदिन्नायामनुज्ञायां भणत इत्येवंलक्षणायां तत आलोचयेत् । तेन च साधुनाऽऽलोचयता एतानि वर्जनीयानि—

---

१ भुञ्जानस्य यावदा° पा. २ ।

चनीयमिति 'सुयारियाउ' इत्येवमादि, मूकस्वरं मनाक् ढड्ढरं च महान्तं स्वरं वर्जयन्नालोचयति, किमालोचयति ?—'व्यापारं' गृहस्थायाः सम्बन्धिनं, तथा 'संसृष्टम्' उदकार्द्रादि, इतरं असंसृष्टं, किं तत् ?—करं संसृष्टमसंसृष्टं च उदकेन, तथा 'मात्रकं' गृहस्थसत्कं कुण्डेलिकादि उदकसंसृष्टमसंसृष्टं चेति, एतदालोचयेत् ।

**एयद्दोसविमुक्कं गुरुणो गुरुसम्मयस्स वाऽऽलोए। जं जह गहियं तु भवे पढमाए[2] जा भवे चरिमा ।५१९।**

एभिर्दोषैर्विमुक्तमनन्तरोक्तैर्भैक्षमालोचयेद्गुरोः समीपे वा यो गुरोः संमतो—बहुमतस्तस्य समीपे आलोचयेत्, कथमालोचनीयं ?, यद्यथा गृहीतं भवेत्—येन क्रमेण यद्गृहीतं प्रथमभिक्षाया आरभ्य यावच्चरमा—पश्चिमा भिक्षा तावदालोचयेदिति । एष तावदुत्सर्गेणालोचनाविधिः । यदा पुनरेतानि कारणानि भवन्ति तदा ओघत आलोचयतीत्येतदेवाह—

**काले अपहुप्पंते[3] उच्चाओ आवि ओहमालोए। वेला गिलाणस्स व अइच्छई गुरू व उच्चाओ ॥ ५२० ॥**

यदा तु पुनः काल एव न पर्याप्यते यावदनेन क्रमेणालोचयति तावदस्तं गच्छत्यादित्यः तदा तस्मिन् काले ओघतः—संक्षेपेणालोचयति, यदि वा श्रान्तः कदाचिद्भवति तदाप्योघत एव आलोचयति, वेला वा ग्लानस्यातिक्रामति यावत्क्रमेणालोचयति अत ओघत आलोचयति, अथवा गुरुः उच्चातो—श्रान्तः कुलादिकार्येण केनचित् तत ओघत आलोचयति एभिः[4] कारणैरिति। का चासावोघालोचना ?—

१ °स्थयो आ । २ पढमाओ जा आ. । ३ य पहु° आ ल २. पा १ । ४ एवं कार° आ. ।

पुरकम्मपच्छकम्मे अप्पऽसुद्धे य ओहमालोए। तुरियकरणामि ज से न सुज्झई तत्तिअ कहए ॥५२१॥

आकुसरे आपचे सस्येवमोघालोचनयाऽऽलोचयति–पुरःकर्म पश्चात्कर्म च अल्पं–नास्ति किञ्चिदिस्पर्शः, 'असुद्धे य' ति–अशुद्ध चास्य, अशुद्धमाधाकर्मायभिधीयते तदल्प–नास्तीति, एवमोघतः–संक्षेपेणालोचयेत्। 'तुरियकरणमि'त्ति त्वरिते कार्ये जाते मति येन शुद्ध्यति उक्तेन प्रकारेण तावन्मात्रमेव कथयति, एषा ओघालोचनेति ॥

आलोएत्ता सव्वं सीसं सपडिग्गहं पमज्जित्ता। उड्ढमहे तिरियम्मि य पडिलेहे सव्वओ सव्वं ॥५२२॥

एवमेषा मानसी आलोचना वाचिकी चाऽऽलोचनोक्ता, इदानीं कायिकी आलोचना भण्यते–आचार्यस्य भिक्षा दर्शयेत्, एत मनसा वाचा कायेनालोचयित्वा 'सर्वं' निरवशेष, तथा मुखवस्त्रिकया शिरः प्रमृज्य पतद्ग्रहं च सपटलं प्रमृज्य 'ऊर्ध्वं' पीठी' 'अधो' भुवि 'तिर्यक्' तिरश्चीन 'प्रत्युपेक्षेत' निरूपयेत् 'सर्वतः' समन्तात्तत्स्वपि दिक्षु सर्वं नैरन्तर्येण, ततः पतद्ग्रहं हस्ते कृत्वा भक्तादि गुरोर्दर्शयतीति वक्ष्यति भाष्यकृत्। इदानीमेतामेव गाथां भाष्यकृद् व्याख्यानयति, अत्र गुरुर्दोषस्था प्रथममूर्ध्वादीनि त्रीणि पदानि व्याख्यानयन्नाह—

उड्ढ पुप्फफलाई तिरियं मज्जारसाणडिंभाई। खीलगदारुगआवडणरक्खणट्ठा अहो पेहे ॥२७१॥ भा

उद्यानादौ आरामिकानां मर्ता पुष्पफलादिपातमूर्ध्वे निरूप्य ततो गुरवे दर्शयति, तिर्यक् मार्जारमक्षिकमानालोचया-

१ दर्शित धत्से भा २। २ मयूरं उक्तेन प्रकारेण क. १। ३ भाष्यमे" भा। ४ व्याख्याति क १। ५ आह तत्र भा भा १।

लोचयति मा भूत्ते आगच्छन्तस्तत्पात्रमुत्प्रेर्य पातयिष्यन्ति, आदिशब्दात्काण्डं वा केनचिद्विक्षिप्तमायाति अतस्तिर्यग् निरूप्यते, तथाऽधो निरूपयति, किमर्थं ? कदाचित्कीलको भवति दारुकाष्ठं वा भवति, तत्रापतनम्–आस्खलनं मा भूदिति, अतोऽधो निरूप्य ततो भक्तादि दर्शयति । इदानीं 'सीसं सपडिग्गहं पमज्जित्त'त्ति व्याख्यानयति—

**ओणमओ पवडिज्जा सिरँओ पाणा सिरं पमज्जेज्जा । एवमेव उग्गहंमिवि मा संकुडणे तसविणासो ॥२७२॥**

हस्तस्थे पतद्ग्रहेऽवनमतः शिरसः प्रपतेयुः प्राणिनः कदाचिदतः शिरः प्रथममेव प्रमार्जयेत्, एवमेव पतद्ग्रहे प्रमार्जनं कृत्वा प्रदर्शयेद्भक्तादि, किं कारणं ? मा संकुडणे तसविणासो'त्ति मा भूत्सङ्कोचने सति पटलानां त्रसादिविनाशो भविष्यत्यतः प्रमृज्य पतद्ग्रहं भक्तं प्रदर्शयतीति ॥

**काउं पडिग्गहं करयलंमि अद्धं च ओणमित्ताणं । भत्तं वा पाणं वा पडिदंसिज्जा गुरुसगासे ॥२७३॥ भा०**

कृत्वा पतद्ग्रहं करतले अर्धं च शरीरस्यावनम्य पुनर्भक्तं वा पानं वा प्रदर्शयेत् गुरुसकाश इति—

**ताहे उ दुरालोइय भत्तपाण एसणमणेसणाए उ । अट्ठुस्सासे अहवा अणुग्गहादीउ झाएज्जा ।२७४। भा०**

ततः कदाचिद्दुरालोचितं भक्तपानं भवति, 'नट्टं वलं चलं' इत्येवमादिना प्रकारेण, तथैषणादोषः कदाचित्सूक्ष्मः कृतो भवति, अनेषणादोषो वा कश्चिदजानता कृतः, ततश्चैतेषां विशुद्ध्यर्थमष्टोच्छ्वासं–नमस्कारं ध्यायेत्, अथवा 'अनुग्गहादीउ'त्ति

१ तत्रा° आ. । २ पमज्जेज'त्ति ल २ आ पा. १ । ३ पुरओ ल १ पु ।

अथवाऽनुप्रहादि ध्यायेत्, 'जइ मे अणुग्गहं कुज्जा साहू होज्जामि तारिओ' इत्येवमादि गाथाद्वय ( दशवै. अध्य ५ उद्दे १ गा ९४-९५) कायोत्सर्गस्थो चिन्तयेत् ध्यायेत्, उत्सार्य च कायोत्सर्गं ततः स्वाध्याय प्रस्थापयेत् । एतदेवाह—

विणएण पट्ठवित्ता सज्झाय कुणइ तो मुहुत्ताग । पुव्वभणिया य दोसा परिस्समाई जढा एव ॥५२३॥

विनयेन प्रस्थाप्य स्वाध्याय मुहूर्तमात्रं करोति, अथ यतो मायात्रय पठति, उत्कृष्टतश्चतुर्दशापि पूर्वाणि सूक्ष्मानप्राण लब्धिसपन्नोऽन्तर्मुहूर्तेन परावर्तयति, एव च कुर्वता पूर्वमभिहिता दोषा 'धातुक्षोभे मरण' मित्येवमादयः तथा परिश्रमादयश्च दोषा 'जढाः' त्यक्ता भवन्तीति ॥

दुविहो य सोवि साहू मडलिउवजीवओ य इयरो य । मडलिमुवजीवतो अच्छइ जा पिंडिया सव्वे ॥५२४॥

स च साधुर्द्विप्रकारो—मण्डल्युपजीवकः इतरश्च—मण्डल्यनुपजीवकः, तत्र यो मण्डल्युपजीवकः साधुः सोऽटित्वा भिक्षां तावत्प्रतिपालयति यावत् 'पिण्डिताः' एकीभूताः सर्वेऽपि साधवो भवन्ति, पुनश्च स तैः सह भुङ्क्ते ।

इयरो वि गुरुसगास गतूण भणइ सदिसह भते ।। पाहुणगखवगअतरतबालवुड्ढाण सेहाण ॥५२५॥

'इतरोऽपि' श्रमणस्त्वनुपजीवकः साधुर्गुरुसकाशं गत्वा तमेव गुरु भणति—येयुत हे आचार्याः ! संदिशत—ददत यूयमिदं

१ योगविमुक्तिव ठा स्वाध्यायं मुहू° खा क २. इ. पा २ । २ सुक्ष्मा° खा । ३ सेह खा पा १ छे न क २ । ४ तत्र यो मण्डल्युपजीवकः स साधु खा क. २ । ५ यथा खा. पा १-२ ।

भोजनं प्राघूर्णकक्षपकअतरन्तबालवृद्धशिक्षकेभ्यः साधुभ्य इति । पुनश्च—

दिण्णे गुरूहिं तेसिं सेसं भुंजिज्ज गुरुअणुन्नाए। गुरुणा संदिट्ठो वा दाउं सेसं तओ भुंजे ॥ ५२६ ॥

एवमुक्तेन सता गुरुणा दत्ते सति तेभ्यः–प्राघूर्णकादिभ्यो यच्छेषं तद् भुञ्जीत गुरुणाऽनुज्ञाते सति, यदिवा गुरुणा[1] 'सन्दिष्टः' उक्त यदुत त्वमेव प्राघूर्णकादिभ्यः प्रयच्छ, एवमसौ साधुर्भणितः सन् दत्त्वा प्राघूर्णकादिभ्यस्ततः शेषं यद् भक्तं तद्भुङ्क्ते। एवं न केवलमसौ प्राघूर्णकादिभ्यो ददाति अन्यानपि साधून्निमन्त्रयति, तत्र यदि ते गृह्णन्ति ततो निर्जरा, अथ न गृह्णन्ति तथाऽपि विशुद्धपरिणामस्य निर्जरैवेति ॥ एतदेवाह—

इच्छिज्ज न इच्छिज्ज व तहविय पयओ निमंतए साहू। परिणामविसुद्धीए अ निज्जरा होअगहिएवि।५२७।

इच्छेत् कश्चित्साधुर्नेच्छेद्वा तथापि प्रयत्नेन–सद्भावेन निमन्त्रयेत्साधून्, एवं सद्भावेन निमन्त्रयमाणस्य 'परिणामविशुद्ध्या' चित्तनैर्मल्यान्निर्जरा भवति–कर्मक्षयलक्षणाऽगृहीतेऽपि भक्ते भवतीति। अथावज्ञया निमन्त्रयति ततश्चायं दोषः।

भरहेरवयविदेहे पन्नरसवि कम्मभूमिगा साहू। एक्कंमि हीलियंमी सव्वे ते हीलिया होंति ॥ ५२८ ॥

भरहेरवयविदेहे पन्नरसवि कम्मभूमिगा साहू। एक्कंमि पूइयंमी सव्वे ते पूइया होंति ॥ ५२९ ॥

अह को पुणाइ नियमो एक्कंमि वेमाणियंमि[2] ते सव्वे। होंति अवमन्निया[3] पूइए[4] य संपूइया सव्वे ॥ ५३०

१ °णैवासौ 'सन्दिष्ट' ल १–२, °णैव 'सन्दिष्ट.' पु. पा १–२। २ °वि हीलियंमि ते आ पा १–२। ३ °माणिया आ पा १। ४ पूईयंमि सपू° पा. १।

नाण व दसण धा तवो य तह सजमो य साहुगुणा। एक्के सव्वेसुवि हीलिएसु ते हीलिया होंति ॥५२१
एमेव पूइयमिवि एक्कमिवि पूइया जइगुणा उ। थोव बहूनिवेसं ईइ नच्चा पूयए मइम ॥ ५३२ ॥
तम्हा जइ एस गुणो एक्कमिवि पूइयमि ते सवे। भत्त वा पाण वा सवपयत्तेण दायव ॥ ५३३ ॥

सुगमा ॥ यदा पुनरादरेण निमन्त्रयते तदायं महान् गुणः—सुगमा ॥ अत्राह परः—अथ कः पुनरयं नियमः ? यदुत एकस्मिन्नपमानिते सति सर्वे एवापमानिता भवन्ति, तथैकस्मिन् संपूजिते सर्व एव संपूजिता भवन्ति, न ह्येकस्मिन् संपूजिते सर्वे संपूजिता भवन्ति, न हि यज्ञदत्ते भुक्ते देवदत्तो भुक्तो भवतीति। आचार्य आह—ज्ञानं दर्शनं च तपस्तथा संयमश्च एते साधुगुणा वर्तन्ते, एते च गुणा यथैकस्मिन् साधौ व्यवस्थिता एवं सर्वेष्वपि, एकस्वरूपत्वात्तेषां, यतश्चैवमत एकस्मिन् साधौ हीलिते—अपमानिते सर्वेषु वा साधुषु हीलितेषु 'ते' ज्ञानादयो गुणा 'हीलिताः' अपमानिता भवन्ति ॥ एवमेकस्मिन् पूजिते पूजिता यतिगुणाः सर्वे भवन्ति, यस्मादेवं तस्मात्स्तोकमेतत्कल्पनादि 'बहुनिवेसं' बह्वायमित्यर्थः निर्जराहेतुरिति, तस्मादेवं ज्ञात्वा पूजयेत्साधून् मतिमानिति, यतश्चैवमत एवमेव कर्तव्यम्। एतदेवाह—'तम्हे' त्यादि, सुगमा ॥

वेयावच्च नियय करेह उत्तमगुणे धरिन्ताण। सव किल पडिवाई वेयावच्च अपडिवाई ॥ ५३४ ॥
पडिभग्गस्स मयस्स व नासइ चरणं सुय अगुणणाए। न हु वेयावच्चचियं सुहोदय नासए कम्म॥५३५॥

१ हि मवा क. १। २ बहेइ' आ प. १–२। ३ 'सामादि क १। ४ सत्त आ क २। ५ सर्व क १–२।

लाभेण जोजयंतो जइणो लाभंतराइयं हणइ[1]। कुणमाणो य समाहिं[2] सव्वसमाहिं लहइ साहू ॥५३६॥
भरहो बाहुबलीवि य दसारकुलनंदणो य वसुदेवो। वेयावच्चाहरणा तम्हा पडितप्पह जईणं ॥५३७॥
होज्ज न व होज्ज लंभो फासुगआहारउवहिमाईणं। लाभो उ[3] निज्जराए नियमेण अओ उ[4] कायव्वं ॥५३८॥
वेयावच्चे अब्भुट्ठियस्स सद्धाए काउकामस्स। लाभो चेव तवस्सिस्स अद्दीणमणसस्स ॥५३९॥

वैयावृत्त्यं 'नियतं' सततं कुरुत, केषाम्?–उत्तमान् गुणान् धारयतां साधूनां कुरुत। शेषं सुगमम्। किञ्च–'प्रतिभग्नस्य' उन्निष्क्रान्तस्य मृतस्य वा नश्यति चरणं श्रुतमगुणनया न तु वैयावृत्त्यचितं–बद्धं शुभोदयं नश्यति कर्म। किञ्च–'लाभेन' प्राप्त्या घृतादेः 'योजयन्' घृतादिलाभेन योजयन् कान्?–यतीन्, लाभान्तरायं कर्म हन्ति। तथा पादप्रक्षालनादिना कुर्वन् समाधिं 'सर्वसमाधिं' मनसः स्वस्थतां वाचो माधुर्यादिकं कायस्य निरुपद्रवताम्, एवं कुर्वंस्त्रिरूपमपि सर्वसमाधिं लभते॥ सुगमा, नवरं 'पडितप्पह'त्ति वैयावृत्त्यं कुरुत। किञ्च–भवेद्वा न वा लाभः, केषां?–प्रासुकानामाहारोपध्यादीनां तथापि तस्य वैयावृत्त्यार्थमभ्युद्यतस्य साधोर्विशुद्धपरिणामस्य लाभ एव निर्जरायाः[5], न अवश्यं लाभे एव सति निर्जरा भवति, यस्मादेवं तस्मात्कर्त्तव्यं वैयावृत्त्यम्। सुगमा, नवरं वैयावृत्त्ये 'अभ्युत्थितस्य' उद्यतस्य श्रद्धया कर्त्तुकामस्य लाभ एव॥

---

१ हरइ ल १। २ समाही ल १। ३ लंभो य निज° आ.। ४ य होइ का° ल १। ५ °राया अवश्यं, अलाभेऽपि सति आ।

एसा गहणेसणविही कहिया भे धीरपुरिसपन्नत्ता। घासेसणंपि इत्तो वोच्छं अप्पक्खरमहत्थं ॥५४०॥

सुगमा ॥ उक्ता ग्रहणैषणा साम्प्रतं ग्रासैषणोच्यते, तथा चाह—

दव्वे भावे घासेसणा उ दव्वंमि मच्छआहरणं। गलमसुडगभक्खण गलस्स पुच्छेण घट्टणया ॥ ५४१ ॥

सा च ग्रासैषणा द्विविधा-द्रव्यतो भावतश्च, तत्र द्रव्ये मत्स्योदाहरणं, स यथा-एगो किर मच्छवधो गले मसपिंडं दाऊण दहे छुहइ, तं च एगो मच्छो जाणइ, जहा एस गलोत्ति, सो परिपेरंतेण मंसं खाऊण ताहे पराहुत्तो छिप्पंए गलमाहणइ, मच्छबंधो जाणइ-एस गहिओत्ति, एवं तेण सव्वं खइयं मंसं, सो य मच्छवधो खइएण मसेण अच्छिइए तओ वच्चइ। एत्थ य माहरणं दुविहं-चरिअं कप्पियं च, तं एवं मच्छबंधं ओहयमणसंकप्पं झायंतं दट्ठुं मच्छो भणइ-अहं पमत्तो चरन्तो गहिओ बलागाए, ताहे सा उक्खिविया पच्छा गिलइ, ताहे अहं मओ तीसे मुहे पडामि, एवं बितियं तइयं पि उच्छालिओ ताहे मुक्को, अण्णया समुद्दे अहं गओ तत्थ मच्छबधा वलयामुहाइं करेंति करएहिं, ताहे समुद्दवेलापाणिएणं सह अहं तत्थ वलीकए कडे पविट्ठो, ताहे तस्स कडमस्स अणुसारेण अतिगओ, एवं तिण्णि वारा वलयामुहाओ मुक्को, कालाओ एक्वीसं वारा फिडिओ, किह पुण ?, जाहे जालं छुब्भइ ताहे अहं भूमिं चिपूय अच्छामि, तहा एक्कंमि छिण्णोदयम्मि दहम्मि अच्छिया, अन्नेहिं किंचि न नायं जहा इमो दहो

1 इम्म्मोहरण-मत्स्ये भ। 2 छप्पाए ला पा 2 पु। 3 तो से मच्छो ला पा 1। 4 बितियं ला पक्खिया प 2। 5 च मं पा 1। 6 पडिमे ला.। 7 भूमी ला. पा 1। 8 °हए दहे छिण्णा अन्नेहिं ला. पा 1-2।

सुकिहिइ, ताहे सो दहो सुको, मच्छाणं[1] थले गई णत्थि, ते सव्वे सुकंते पाणिए मया, केई[2] जीवंति, तत्थ कोइ मच्छबंधो आगओ, सो हत्थेण गहाय सूलाए पोएति, ताहे मए नायं, अहंपि अचिरा विज्झीहामि जाव न विज्झामि ताव उपायं चिंतेमि, ताहे तेसिं मच्छाणं अंतरालं सूलं मुहेण[3] गहिऊण ठिओ, सो जाणइ–एते सव्वे पोइयल्लया, ततो सो गंतूण अण्णहिं दहे धोवइ, तत्थ अहं मच्छुवत्तं करिंतो चेवुड्डीणो पाणिए पविट्ठो, तं एयारिसं मम सत्तं, तहवि इच्छसि गलेण घित्तुं ?, अहो ! ते निल्लज्जत्तणंति ॥ अमुमेवार्थं गाथाभिरुपसंहरन्नाह–'गलमंसुंडगं' गाहद्धं, गलमांसपिंडभक्खणं, शेषं सुगमं ॥

अह मंसंमि पहीणे झायंतं मच्छियं भणइ मच्छो। किं झायासि तं एवं! सुण ताव जहा अहिरिओऽसि॥ ५४२

चरियं व कप्पियं वा आहरणं दुविहमेव नायव्वं। अत्थस्स साहणत्था इंधणमिव ओयणट्ठाए॥ ५४३ ॥

तिबलागमुहुम्मुक्को[4] तिखुत्तो वलयामुहे। तिसत्तखुत्तो जालेणं सइं[5] छिन्नोदए दहे ॥ ५४४ ॥

एयारिसं ममं सत्तं, सढं घट्टिअघट्टणं। इच्छसि गलेण घित्तुं, अहो ते अहिरीयया ॥ ५४५ ॥

अह होइ भावघासेसणा उ अप्पाणमप्पणा चेव। साहू भुंजिउकामो अणुसासइ निज्जरट्ठाए ॥ ५४६ ॥

बायालीसेसणसंकडंमि गहणंमि जीव ! नहु छलिओ। इण्हिं जह न छलिज्जसि भुंजंतो रागदोसेहिं।५४७।

---

१ मच्छाणंपि थले आ पा १–२। २ कइवि आ पा. १–२। ३ डसिउ मुहेग ठिओ आ. पा. १–२। ४ °मुहा मुक्को आ ल २ पा. १। ५ सयं आ. पा. १।

जह अब्भंगणलेवा सगडक्खवणाण जुत्तिओ होंति। इय संजमभरवहणट्ठयाए साहूण आहारो ॥५१८॥

सुगमाः, तिस्रो धारा घृतादेर्या मुखेनो मुक्ताः—ऊर्ध्वं क्षिप्ताः त्रिकृत्वो 'गलपामुखे' कटाहमके आवर्तवत्प्रथिते, तथा त्रयः सप्तका वालास्तम्भुतः 'संकट' पश्चार्द्धे छिन्नोदके ग्रहे छुटितः ॥ एवंविध मम मत्स्य शठ मां तथा 'घटितघट्टन' घटितानि-संबद्धानि घट्टनानि-वालादीनि चलनानि यस्य सोऽहं घटितघट्टनः, तमेवंविधं इच्छसि गलेन ग्रहीतुं ?, अहो ते निर्लज्जता ॥ उक्ता द्रव्यग्रासैषणा यतोऽसौ ग्रासं दृष्ट्वैव कथिञ्चलित इति। इदानीं भावग्रासैषणां प्रतिपादयन्नाह—अथ भवति भावग्रासैषणा, कथं ?, यदाऽऽत्मानमात्मनैव साधुरनुशास्ति, कदा पुनः ?—'मोक्तुकामः' मोक्तुमभिलषन्, निर्जरार्थं न तु वर्णाद्यर्थम्। किं पुनरसौ चिन्तयन्नात्मानमनुशास्तीत्यत आह—द्विचत्वारिंशद्दोषगहनदोषैः संकटे-दुष्प्रवेशे यद्वदन गह्वरे तस्मिन् हे जीव ! न त्वं छलितः, शेषं सुगमं, यथा न व्यस्यसे तथा कर्तव्यं। यथाऽभ्यङ्गलेपौ यथासङ्ख्येन शकटाक्षस्य व्रणानां च युक्तितो भवन्ति, एतदुक्तं भवति—यथाऽभ्यङ्गः शकटाक्षे युक्त्या दीयते न चातिबहुर्न चातिस्तोको भारवहनार्थं, तथा व्रणानां च लेपो युक्त्या दीयते नातिबहुर्नातिस्तोकः, एवं संयमभरवहनार्थं साधूनामाहारः ॥

उवजीवि अणुवजीवी मंडलि पुव्ववण्णिओ साहू। मंडलिअसमुद्दिसगाण ताण इणमो विहिं वुच्छं॥५१९॥

तत्र मण्डल्युपजीवी अनुपजीवी च पूर्वमेव द्विविधो व्यावर्णितः साधुरेकः, इदानीं बहूनां मण्डल्यामसमुद्दिशकानां यो

१ अवर्तं इव चिते खा.। २ वक्रच खा.। ३ °एमिको° खा। ४ °वहि° खा.। ५ °वहि° खा। ६ °वहि° खा। ७ यथा खा. ख २।

विधिर्भवति तं वक्ष्ये ॥ ते च कथं मण्डल्यामसमुद्देशका भवन्ति ?, अत आह—

**आगाढजोगवाही निज्जूढत्तट्ठिआ व पाहुणगा । सेहा सपायछित्ता बाला वुड्ढेवमाईया ॥ ५५० ॥**

आगाढयोगो–गणियोगः तत्स्था ये ते मण्डलीं नोपजीवन्ति, 'निज्जूढ'त्ति अमनोज्ञाः कारणान्तरेण तिष्ठन्ति ते पृथग् भुञ्जते, तथाऽऽत्मार्थिकाश्च पृथग् भुञ्जते प्राघूर्णकाश्च, यतस्तेषां प्रथममेव प्रायोग्यं पर्याप्त्या दीयते, ततस्तेऽप्येकाकिनो भवन्ति, शिक्षका अपि सागारिकत्वात् पृथग् भोज्यन्ते, सप्रायश्चित्ताश्च पृथग् भोज्यन्ते, यतस्तेषां शबलं चारित्रं, शबलचारित्रैः सह न भुज्यते, बालवृद्धा अप्यसहिष्णुत्वात्प्रथममेव भुञ्जतेऽतस्तेऽप्येकाकिन इति, एवमाद्या मण्डल्यामसमुद्दिशका भवन्ति, आदिग्रहणात्कुष्ठव्याध्याद्युपद्रुता इति ॥ ते च भुञ्जानाः सन्त आलोके भुञ्जते, स चालोको द्विविधो भवतीत्येतदेवाह–

**दुविहो खलु आलोको द्वे भावे य दवि[1] दीवाई । सत्तविहो पुण भावे आलोगो[2] तं परिकहेऽहं ॥५५१॥**

द्विविध आलोको–द्रव्यालोको भावालोकश्च, तत्र द्रव्यालोकः प्रदीपादिः, भावविषयः पुनरालोकः सप्तविधः, तं च कथयाम्यहं, तत्र भावालोकस्येयं व्युत्पत्तिः-आलोक्यते इत्यालोकः-स्थानदिगादिनिरूपणमित्यर्थः । तं च सप्तविधमपि प्रतिपादयन्नाह–

**ठाणादिसिपगासणया भायणपक्खेवणे य गुरुभावे । सत्तविहो आलोको सयावि जयणा सुविहियाणं ॥**

तैश्चामण्डलिसमुद्दिशकैर्निष्क्रमप्रवेशवर्जिते स्थाने भोक्तव्यं, तथा कस्यां दिशि आचार्यस्योपवेष्टव्यमित्येतद्द्रक्ष्यति, तथा

---

१ दव्व ल. १–२ । २ आलोगं आ. ।

ततः कदाचित्साधुः 'अतिस्तद्धम्' अतिप्रचुरं भक्षयेभिःलब्धः सन्, स च सम्यार्थशरीरः कदाचिद्वा गुरोरदर्शनपथे मुञ्जानो ऽङ्गारक-अपथ्यमपि भुञ्जीयाभिलब्धः सन्, कदाचिद्वा भिक्षामटताऽन्येन स्निग्धद्रव्यं लब्धं भवेत् तथानालोच्यैव भक्षयेत् एकान्ते मा भून्मामाचार्यो निवारयिष्यति । अतः

एएसि जाणणट्ठा गुरुआलोए तओ उ भुजिज्जा। नाणाइसधणट्ठा न वन्नबलरूवविसयट्ठा।२८०। (भा०)

'एतेषां' प्रचुरभक्षितादीनां दोषाणां ज्ञानार्थं गुरोः 'आलोके' चक्षुर्दर्शनपथे भुञ्जीत येन गुरुः समीपस्थ भुञ्जानं दृष्ट्वा प्रचुरं भक्षयन्तं निवारयति, तथाऽङ्गारकं भक्षयन्तं निवारयति, तथा अनालोच्य चोरितं खादन्तं निवारयति, मा भूदसारम्येऽ-पाटवमनिता दोषाः स्युः। इदानीं भावेति व्याख्यायते-'नाणाइ'त्ति ज्ञानादित्रिकः ज्ञानं दर्शनं चारित्रं च, एतज्ज्ञानादित्रिकाय ऽपमभुज्यमाने त्रुट्यति-व्युच्छिद्यते, अत एतेषां ज्ञानादीनां त्रुट्यतां 'सन्धानार्थं' अविच्छिन्नप्रवाहार्थं भुज्यते, न वर्णार्थं भुज्यते, न वर्णो मम गौरत्वं स्यादित्येवमर्थं, तथा बलं मम भूयाद् इत्येवमर्थमपि न भुज्यते, रूपं मम भूयाद् भुक्षया क्षीणगण्ड पार्श्वः सन् मांसोपचयेन पूरितगण्डपार्श्वो रूपवान् भविष्यामीति नैवमर्थं भुङ्क्ते, नापि 'विषयार्थं' मैथुनाद्यासेवनार्थं भुङ्क्ते ।

सो आलोइयभोई जो एए जुजए पए सव्वे। गविसणगहणग्घासेसणाइ तिविहाइवि विसुद्धं ।५५३।

'सः' साधुर्गुरोरालोकित भुङ्क्ते य एतानि पदान्यनन्तरोदितानि 'युनक्ति' प्रयुङ्क्ते करोति स्थानादीनि, स च गवेषणेषण

१ "भिक्षीरः" पा. २ । २ "एतो" आ. । ३ "केऽङ्गारकं" आ । ४ °ट भिन्नः आ पा. १ । ५ "भागाय" आ । ६ गौरवं आ । ७ धौसारगण्ड° आ. ।

या ग्रहणैषणया ग्रासैषणया, अनया त्रिविधाऽप्येषणया विशुद्धं भुङ्क्ते य एतानि पदानि प्रयुङ्क्ते इति ।

**एवं एगस्स विही भोत्तव्वे वन्निओ समासेणं । एमेव अणेयाणवि जं नाणत्तं तमहं वोच्छं[1] ॥ ५५४ ॥**

एवमेकस्य साधोर्भोक्तव्ये विधिर्वर्णितः 'समासेन' सङ्क्षेपेण, एवमेवानेकेषामपि साधूनां भोजने विधिः, यत्तु पुनर्नानात्वं भवति तदहं[2] वक्ष्ये । आह–किं पुनः कारणं मण्डली क्रियते ?, उच्यते—

**अतरंतबालवुड्ढा सेहाएसा गुरू असहुवग्गो । साहारणोग्गहाऽलद्धिकारणा मंडली होइ ॥ ५५५ ॥**

अतरन्त[3] इति ग्लानस्तत्कारणात्–तन्निमित्तं मण्डली भवति, यतस्तस्य ग्लानस्य यद्येकः साधुर्वैयावृत्त्यं करोति ततस्तस्य तत्रैवाक्षणिकस्य सूत्रार्थहानिर्भवति, मण्डलीमध्ये[4] तु कश्चित्किञ्चित्करोति, अत एतदर्थं[5] मण्डली क्रियते येन बहवः प्रतिजागरका भवन्तीति । बालोऽपि भिक्षामटितुमसमर्थः, स च बहूनां मध्ये सुखेनैव कथं नु नाम वर्त्तेत ?, अतो मण्डली भवति । वृद्धोऽप्येवमेव । सेहः–शैक्षकः स चैकः सन् भिक्षाविशुद्धिं न जानाति ततस्तस्यानीय दीयते, आएसो–प्राघूर्णकस्तस्य चागतस्य सर्व एवोपकुर्वन्ति, स चोपकारः सर्वैरेव मिलितैः कर्त्तुं शक्यते न त्वेकेन, गुरोश्च सर्वैरेवोपकर्त्तुं शक्यते न त्वेकेन सूत्रार्थपरिहानेः, तथा 'असहुवग्गो'त्ति असमर्थो राजपुत्रादिः स च भिक्षामटितुं सुकुमारत्वान्न शक्नोति ततश्च सर्व एव मिलिता उपकुर्वन्ति, तस्मात् 'साधारणोग्गहा' साधारणश्चासावुपग्रहश्च साधारणोपग्रहस्तस्मात् साधारणोपग्रहात् कारणान्मण्डली

---

१ तयं वोच्छं आ पा. १ पु. । २–यो भेदो यदतिरिक्तं तदहं आ पा १ २. पु. । ३ °रन्त –अतिग्लान° आ ४ °वन्धे आ । ५ एतदर्थं आ. ।

कर्तव्या, अथवा मण्डलीविक्षेपणमेतत्, उपगृह्णातीत्युपग्रहो–भक्तादिः स साधारणः–तुल्यो यस्यां सा साधारणोपग्रहा मण्डली भवति। 'असदिक्कारणा मण्डली होइ' इति कदाचिदकश्चित्साधुरलब्धिमान् भवति ततश्च तेऽन्ये साधवस्तस्मै आनीय प्रयच्छन्ति, अत एतस्कारणान्मण्डली भवति। इदानीं भिक्षागतानां साधूनां यो वसतिरक्षपाल आस्ते तेन किं कर्तव्यमित्यत आह—

नाउ नियट्टणकाल वसहीपालो य भायणुग्गाहे। परिसठियच्छदवगिण्हट्ठया गच्छमासज्ज ॥५५६॥

ज्ञात्वा भिक्षागतानां निवर्तनकाल वसतिपालो 'भाजन' नन्दीपात्र तत्प्रत्युपेक्ष्योद्ग्राहयति–सङ्घटितेनास्त इत्यर्थः, किमर्थं?, परिसंस्थितास्वच्छद्रवग्रहणार्थम्, एतदुक्त भवति–तत्रानीय साधवः पानक प्रक्षिपन्ति, पुनश्च तत्र परिसंस्थित–स्वच्छीभूत सत्तस्मादन्यत्र पात्रके क्रियते येन तत्स्वच्छमाचार्यादीनां प्रायोग्य भवति, पात्रकादिप्रक्षालनं च क्रियते। 'गच्छमासज्ज'त्ति 'गच्छमाश्रित्य' गच्छस्य प्रमाणं ज्ञात्वा पात्रकमुद्ग्राहयन्ति, एतदुक्त भवति–यदि महान् गच्छस्ततः पानकगलनार्थं महत्प्रमाण पात्रकमुद्ग्राहयति, तथा द्वे त्रीणि चत्वारि पञ्चादीनि यावत्।

असई य नियट्टेसु एक्क चउरंगुलूणमाणेसु। पक्खिविय पडिग्गहग तत्थऽच्छदव तु गालिज्जा ॥५५७॥

अथ तत्र रक्षपालः समर्थो नास्ति यः पात्रकमुद्ग्राहयति, अथवा 'असई य'त्ति यदि नन्दीपात्र नास्ति, पत्रोदकमानीत स्वच्छीकरणार्थं क्रियते ततोऽसति तस्मिन् नन्दीपात्रे तदेक पतद्ग्रह प्रक्षिप्य, क्व?, अत आह–'चउरंगुलूणमाणेसु' पतद्ग्र-

---

१ 'पाममत्तेन छि' ला। २ नियट्टेसु ला.।

लैरूनानि यानि भाजनानि तेषु प्रक्षिप्य पतद्ग्रहं पुनस्तस्मिन् क्षणीभूते अच्छं द्रवं गालयेत्, अत्र चायं नियमो द्रष्टव्यः यदुत-भिक्षां तावत्साधवः पर्यटन्ति यावत्पात्रकं चतुर्भिरङ्गुलैरूनमास्त इति । आह-किं पुनः कारणं तद्द्रवगलनं क्रियते ?,

**आयरियअभावियपाणगट्ठया पायपोसधुवणट्ठा। होइ य सुहं विवेगो सुह आयमणं च सागरिए ॥५५८॥**

आचार्यपानार्थं अभावितसेहादिपानार्थं च गलनं क्रियते । तथा पादधावनार्थं 'पोस'त्ति अधिष्ठानं तस्य प्रक्षालनार्थं, तथा भवति च सुखेन विवेकः-त्यागोऽतिरिक्तस्य सतः, तथा सुखेन वाऽऽचमनं सागारिकस्याग्रतः क्रियते, एवमर्थं गलनं क्रियत इति । कियन्ति पुनः पात्रकाणि गलितद्रवस्य भ्रियन्ते ? इत्यत आह—

**एक्कं व दो व तिन्नि व पाए गच्छप्पमाणमासज्ज । अच्छद्वस्स भरिज्जा कसट्टबीए विगिंचिज्जा ॥५५९॥**

एकं द्वे त्रीणि वा पात्रकाणि भ्रियन्ते, गच्छप्रमाणं ज्ञात्वा चतुष्प्रभृतीन्यपि भ्रियन्ते स्वच्छद्रवस्य, तत्र च गलिते सति कसट्ट-कचवरं बीजानि च-गोधूमादीनि 'विगिञ्चेत्' परित्यजेत्, एवं तावत्पतद्ग्रहकर्णेनापि उदकमपवृत्य पानकगलनं क्रियते । अथ पुनस्तत्र कीटिकामर्कोटकादयः प्लवमाना दृश्यन्ते ततस्तत्र गालने को विधिः ? इत्यत आह—

**मूइंगाईमक्कोडएहिं संसत्तगं च नाऊणं । गालिज्ज छब्बएणं सउणीघरएण व दवं तु ॥ ५६० ॥**

मूइंगा-कीटिका मर्कोटकाश्च तैः संसक्तं ज्ञात्वा गालयेत् 'छब्बएणं' वंशपिटकेन शकुनिगृहकेण[3] वा गालयेत् तद् द्रवं ॥

१ तस्य पानकस्य, तथा आ पा १-२ । २ गलिते आ. । ३ गृहेण ल. १-२ ।

इय आलोइयपट्ठविअगालिए मंडलीए सट्ठाणे । सज्झायमगल कुणइ जाव सव्वे पडिनियत्ता ॥५६१॥

'इय'त्ति पूर्वोक्तविधिना आलोचिते सति प्रस्थापिते स्वाध्याये गालिते च पानके पुनश्च मण्डल्यां स्वस्थाने उपविश्य स्वाध्यायमङ्गलं करोति—स्वाध्याय एव मङ्गलं स्वाध्यायमङ्गलं तावत्करोति यावत् सर्वे साधवः प्रतिनिवृत्ता भवन्ति । एवं यदि महिष्णवस्ततो पौमपयेन भुङ्क्ते, अथाऽसहिष्णवस्तत्र केचिद्भवन्ति ततः को विधिरित्यत आह—

कोले पुरिसे आसन्न मत्तए पक्खिविचु तो पढमा । अहवावि पडिग्गहग मुयति गच्छ समासन्न ॥५६२॥

स चासहिष्णुर्ग्रीष्मकालापन्नीकृत्य भवति, स एव वा पुरुषः कदाचित् बुभुक्षालुर्भवति, तमाभिस्य मात्रके प्रक्षिप्य भक्त प्रथमालिका ताबदीयते, अथ बहवो बुभुक्षालवस्ततः पतद्ग्रहकं मुञ्चति तेभ्यो भेक्षणार्थं, गच्छ 'समासन्न'त्ति गच्छमत्यं बहुं वा ज्ञात्वा तदनुरूप पतद्ग्रहं मुञ्चतीति । पुनश्च मिलितेषु साधुषु मण्डलीस्थविरः प्रविशति, किं कृत्वेत्यत आह—

चित्त घालाईण गहाय आपुच्छिऊण आयरिअ । जमलजणणीसरिच्छो निवेसई मडलीथेरो ॥ ५६३॥

चिच घालादीनां गृहीत्वा पृष्ट्वाऽचार्यं मण्डलीस्थविरः प्रविशति, किं विशिष्टः ? इत्यत आह—यमलजननीसरिच्छो 'निवेसई' उपविशति मण्डलीस्थविर इति । स च मण्डलीस्थविरो गीतार्थो रत्नाधिकोऽलुब्धकश्च भवति । अनेन च पद-प्रचेपाद्यौ भङ्गाः सूचिता भवन्ति, तत्र तेषां मध्ये ये शुद्धा अशुद्धाश्च तान् प्रदर्शयन्नाह—

1 करोतीति आ. म १ पा २ पु । २ अच्छुरिसे व आस क पु. । ३ तत एव आ । ४ मुञ्चते आ. १ । ५ रक्षणार्थं आ ।

**जइ लुद्धो राइणिओ [1]अहव अलु[2]द्धोवि जोवि गीयत्थो। ओमोवि हु गीयत्थो मंडलिराइ[3]णि उ अलुद्धो उ॥**

यद्यसौ मण्डलीस्थविरो लुब्धो रत्नाधिकश्च ततस्तिष्ठति–न [4]परिविशति, अनेन च लुब्धपदेन द्वितीयचतुर्थषष्ठाष्टमा भङ्गका अशुद्धाः प्रदर्शिता भवन्ति। 'अलुद्धोवि जोवि गीयत्थो ओमोवि हु'त्ति अलुब्धोऽपि यदि गीतार्थ ओमः–लघुपर्यायः स मण्डल्यां परिविशति, अनेन च ग्रन्थेन तृतीयभङ्गकः कथितो भवति, अयं च प्रथमभङ्गकाभावे भवति। अत्र च भङ्गके गीतार्थपदग्रहणेन यत्र यत्र भङ्गकेऽगीतार्थपदं स सर्वो दुष्टो ज्ञातव्यः। 'गीयत्थो मंडलिराइणिउ अलुद्धो'त्ति यस्तु पुनर्गीतार्थो रत्नाधिकोऽलुब्धश्च स मण्डल्यां[5] परिविशति, अनेन च ग्रन्थेन प्रथमो भङ्गकः शुद्धः प्रदर्शितो भवति, सर्वथा यत्र यत्र लुब्धपदमगीतार्थपदं च सं[6] स परिहार्यः, ओमराइणियपदं च यद्यगीतार्थः लुब्धपदं च न भवति ततोऽपवादे शुद्धं भवति, प्रथमं तु शुद्धमेव॥ इदानीं ते मिलिताः सन्त आलोके भुञ्जन्ते, स च आलोको द्विविधो द्रव्यतो भावतश्च, तत्र द्रव्यतः प्रदीपादिः, भावतः सप्तप्रकारस्तं दर्शयन्नाह—

**ठाणदिसिपगासणया भायणपक्खेवणा य भावगुरू। सो चेव य आलोगो नाणत्तं तद्दिसा ठाणे॥५६५॥**

स्थानं वक्तव्यं उपविशने दिग् वक्तव्या प्रकाशमुखे भाजने भोक्तव्यं, भोजनक्रमो वक्ष्यमाणः, प्रक्षेपणं च वदने वक्तव्यं, भावालोको वक्तव्यः गुरुर्वक्तव्यः, स एवालोकः पूर्वोक्तः, नानात्वं त्वत्र यदि परं दिशः स्थानस्य च, अत्र दिक्पद-

१ होइ आ. पा. १। २ °लुद्धो व होज्ज ल १–२। ३ °इणि अलुद्धो आ पा. २। ४ प्रविशति आ। ५ °ल्यामुपविशति, आ. पा. १। ६ स परि° आ. ल १. २।

मन्यथा घस्यति स्थान च । इदानीं भाष्यकारः स्थाननानात्वं दर्शयति, तत्र स्थानव्याख्यानायाह—

निक्खमपवेस मोत्तु पढमसमुद्दिस्सगाण ठायति । सज्झायेप्परिहाणी भावासन्नेयमाईया ॥२८१॥(भा०)

प्रथमसमुद्दिष्टानां ग्लानादीनां निर्गमप्रवेशौ मुक्त्वा उपविशन्ति, किमर्थं ?, तत्र यदि ते मार्गं रुद्ध्वा मण्डल्यां तिष्ठन्ति ततः पूर्वभुक्तानां स्वाध्यायपरिहाणिर्भवति तथा 'भावासन्नस्य' सञ्ज्ञादिवेगधारणासहिष्णोः पीडा भवति । एवमादयोऽन्येऽपि दोषाः ॥ दिग्द्वारप्रतिपादनायाह—

पुव्वमुहो राइणिओ एक्को य गुरुस्स अभिमुहो ठाइ । गिण्हइ व पणामेइ व अभिमुहो इहरहाऽवन्ना ॥२८२॥

पूर्वाभिमुखो रत्नाधिक उपविशति मण्डल्यां, तस्यां च मण्डल्यामेकः साधुर्गुरोरभिमुख उपविशति, किमर्थं ?, कदाचित्किञ्चिद्गुरोरतिरिक्तं भवति तद्ददाति दातव्यं वा किञ्चिद्भवति तद्ददाति मण्डलीस्थविरेणार्पितं, एतदर्थमभिमुख उपविशति, इतरथा-यद्यभिमुखो नोपविशति ततोऽवज्ञा-परिभवः कृतो भवति, पृष्ठ्यादि दत्त्वोपविष्टेऽवज्ञादिकृता दोषा भवन्ति ॥

जो पुण हविज्ज खवओ अतिउव्वाओ य सो बहिं ठाइ । पढमसमुद्दिट्ठो वा सागारियरक्खणट्ठाए ॥५६६॥

यस्तु पुनः क्षपकोऽर्द्धमासादिना भवेदतिभ्रान्तो वा प्राघूर्णकादिः स बहिर्मण्डल्यास्तिष्ठति प्रथमसमुद्दिष्टो वा साधुः शीघ्रतरेण येन भुक्त स सागारिकरक्षणार्थं बहिस्तावन्मण्डल्यास्तिष्ठति ॥

१ °भेमाइ-आ । २ ए परिहाणी आ पा १-पु- । ३ पूर्वाभिमुखो आ । ४ एतदर्थं° आ. पा. १-२. । ५ °यदि ततोऽवज्ञा° आ ।

**एक्किक्कस्स य पासंमि मल्लयं तत्थ खेलमुग्गाले। कण्टट्ठिए व छुब्भइ मा लेवकडा भवे वसही ॥५६७॥**

तत्र च साधूनां भुञ्जानानामेकैकस्य साधोः पार्श्वे मल्लकं भवति, तत्र खेलः श्लेष्म उद्गालयेत्–तस्मिन् मल्लके श्लेष्म-निष्ठीवनं कुर्वन्ति, तथा तत्र भुञ्जतः कदाचित्कण्टको भवेत् स तत्र क्षिप्यते, अस्थिखण्डं वा भवेत् तच्च क्षिप्यते, अथ तु भुवि क्षिप्यतेऽस्थिकण्टकादि ततो वसतिर्लेपकृता–अनायुक्ता भवति, अतस्तत्परिहारार्थं मल्लकेषु क्षिप्यते। तथाऽमुमपरं भुञ्जानानां विधिं प्रतिपादयन्नाह—

**मण्डलिभायणभोयण गहणं सोहीय कारणुव्वरिते। भोयणविही उ एसो भणिओ तेल्लुक्कदंसीहिं ॥५६८॥**

मण्डली यथा रत्नाधिकतया कर्त्तव्या, भाजनानि च पूर्वं अहाकडाइं भुञ्जन्ति, भोजनं च स्निग्धमधुरं पूर्वं भोक्तव्यं, ग्रहणं च पात्रकात् कुक्कुड्यण्डकमात्रं कवलग्रहणं कर्त्तव्यं, तथा ग्रहणस्यैव शुद्धिर्वक्तव्या, अथवा शुद्धिर्भुञ्जतो यथा भवति तथा वक्तव्यं, कारणे भोक्तव्यं, तथा 'उव्वरिए' त्ति अतिरिक्ते विधिर्वक्तव्यः। अयं भोजनविधिः सुगमः। इदानीं भाष्यकारः प्रतिपदं व्याख्यानयति, तत्राद्यावयवव्याचिख्यासयाऽऽह—

**मंडलि अहराइणिआ सामायारी य एस जा भणिआ। पुव्वं तु अहाकडगा मुञ्चंति तओ कमेणियरे॥२८३॥**

मण्डली कथमुपविशति ?, अत आह–यथा रत्नाधिकतया सामाचारी चात्र कार्या, एषा या भणिता–उक्ता कतमा ?,

---

१ °ण्टकोऽस्थिखण्डं वा भवति स तत्र क्षिप्यते आ। २ °लं गृह्णाति, आ पा १–२। ३ 'योक्ता' भणिता, कतमा ?, आ. पा. १–२।

'ठाणदिसिपगासणया " इत्येवमादिका साऽत्रापि तथैव द्रष्टव्या । उक्तं मण्डलीद्वारम्, इदानीं भाजनद्वारप्रतिपादनायाह– 'पुव्व तु अहाकडगा' 'पूर्वं' प्रथमं 'यथाकृतानि' प्रतिकर्मरहितानि लब्धानि यानि तानि समुद्देशनार्थं मुच्यन्ते, एतदुक्तं भवति– प्रथममप्रतिकर्मा प्रतिग्रहको भाज्यते, ततः क्रमेण 'इतरे' अल्पपरिकर्मबहुपरिकर्माणि एवं मुच्यन्ते । 'भायण'त्ति गयं, इदानीं 'भोयण' त्ति व्याख्यायते—

निद्धमहुराणि पुव्व पित्ताईपसमणट्ठया भुजे । बुद्धिबलवड्ढणट्ठा दुक्खं खु विकिंचिउ निद्धं ॥२८४॥(भा)

प्रथमार्द्धं सुगमं । किमर्थं स्निग्धमधुराणि पूर्वं भक्ष्यन्ते ?, यतो बुद्धेर्बलस्य च वर्द्धनं भवति, तथा चाह–" घृतेन वर्द्धते मेधा" इत्यादि, बलवर्द्धनं च प्रसिद्धमेव, बलेन च वर्द्धितेन वैयावृत्त्यादि कर्तुं शक्यते, दुःखं च परिस्थापयितुं स्निग्ध– घृतादि भवति यतोऽसंयमो भवतीति ॥

अह होज्ज निद्धमहुराणि अप्पपरिकम्मसपरिकम्मेहिं । मोत्तूण निद्धमहुरे फुसिअ करे मुचऽहागडए २८५

अथ भवेयुः स्निग्धानि मधुराणि च द्रव्याणि अल्पपरिकर्मसु बहुपरिकर्मचनितेषु च पात्रकेषु ततः को विधिरित्यत आह–तान्येव मुक्त्वा स्निग्धमधुराणि द्रव्याणि ततः करान् प्रोञ्छयति प्रोञ्छयित्वा च करान् 'मुचऽहाकडए'त्ति यथा– कृतानि-अपरिकर्माणि पात्रकाणि समुद्देशनार्थं मुच्यन्ते । 'भोयण'त्ति गयं, इदानीं ग्रहणद्वारप्रतिपादनायाह—

१ च तु° आ. पा. १-२। २ स्तैव मा। ३ मवेत् आ. पा पु २। ४ ततस्ताम्येव क १-२। ५ तता आ.।

**कुक्कुडिअंडगमित्तं अहवा खुड्डागलंबणासिस्स। लंबणतुल्ले गिण्हइ अविगियवयणो य राइणिओ ॥२८६॥**

[1]तस्मात्पतद्ग्रहात्कवलं गृह्णन् कुक्कुट्यण्डकमात्रं गृह्णाति, अथवा 'खुड्डागलंबणासिस्स' क्षुल्लकेन लम्बनकेन—हस्तेन अशितुं शीलं यस्य स क्षुल्लकलम्बनाशी तत्तुल्यान् कवलान् गृह्णाति—स्वभावेनैव लघुकवलाशिनस्तुल्यान् कवलान् गृह्णाति 'अविकिरिय वयणो य राइणिओ' अविकृतवदनो रत्नाधिकः, न भावदोषेण मुखमत्यर्थं बृहत्कवलप्रक्षेपार्थं निर्वादयति, किं तर्हि ?, स्वभावस्थेनैव मुखेनेति । अथवाऽयं ग्रहणविधिः—

**गहणे पक्खेवंमि अ सामायारी भवे पुणो दुविहा। गहणं पायंमि भवे वयणे पक्खेवणा होइ ॥२८७ (भा.)**

'ग्रहणे' कवलादाने प्रक्षेपे च सामाचारी पुनरियं द्विविधा भवति, तत्र ग्रहणं पात्रकविषये भवेत् पात्रकात्कवलोत्क्षेपः, वदनविषयं च प्रक्षेपणं कवलस्य भवति । तत्र पात्रकात्कथं भक्षयद्भिर्गृह्यते ? इत्येतत्प्रदर्शयन्नाह—

**कडपयरच्छेएणं भोत्तव्वं अहव सीहखइएणं। एगेण अणेगेहि व वज्जेत्ता धूमइंगालं ॥ २८८ ॥ (भा०)**

तत्र [2]कटच्छेदेन भोक्तव्यं यथा कलिङ्गस्य खण्डलकं छित्त्वाऽपनीयते, एवमसावपि भुङ्क्ते, तथा प्रतरच्छेदेन वा भोक्तव्यं तरिकाच्छेदेनेत्यर्थः, अथवा सिंहभक्षितेन, सिंहो हि किल एकदेशादारभ्य तावद्भुङ्क्ते यावत्सर्वभोजनं निष्ठितं [3]भवति, तच्चैकेन बहुभिर्वा भोक्तव्यं, वर्जयित्वा धूमाङ्गारकं द्वेषरागौ वर्जयित्वेत्यर्थः । इदानीं वदनप्रक्षेपणशोधिं दर्शयन्नाह—

१ ततः प° आ. । २ कटकच्छे° आ । ३ तच्चै° आ ।

'ठायदिमिरगामममपा" इत्येवमादिका साऽत्रापि तथैव द्रष्टव्या। उक्तं मण्डलीद्वारम्, इदानीं भाजनद्वारप्रतिपादनायाह– 'पुव्वं तु महाकडगा' 'पूर्वं' प्रथमं 'यथाकृतानि' प्रतिकर्मरहितानि लब्धानि यानि तानि समुद्देशनार्थं मुच्यन्ते, एतदुक्तं भवति– प्रथममप्रतिकर्मा प्रतिग्रहको भ्राम्यते, ततः क्रमेण 'इतरे' अल्पपरिकर्मबहुपरिकर्माणि पैव मुच्यन्ते। 'भायण'त्ति गयं, इदानीं 'भोयण' त्ति व्याख्यायते—

निद्धमहुराणि पुव्वं पित्ताईपसमणट्ठया भुंजे। बुद्धिबलवड्ढणट्ठा दुक्खं खु विकिंचिउं निद्धं ॥२८४॥(भा)

प्रथमार्द्धं सुगमं। किमर्थं स्निग्धमधुराणि पूर्वं भक्ष्यन्ते ?, यतो बुद्धेर्बलस्य च वर्द्धनं भवति, तथा चाह–" घृतेन वर्द्धते मेधा" इत्यादि, बलवर्द्धनं च प्रसिद्धमेव, बलेन च वैयावृत्त्यादि कर्तुं शक्यते, दुःखं च परिस्थापयितुं स्निग्धं– मधुरादि भवति यतोऽसमो भवतीति ॥

अह होज्ज निद्धमहुराणि अप्पपरिकम्मसपरिकम्मेहिं। भोत्तूण निद्धमहुरे फुसिअ करे मुच्चऽहागडए २८५

अथ भवेयुः स्निग्धानि मधुराणि च द्रव्याणि अल्पपरिकर्मसु बहुपरिकर्मजनितेषु च पात्रकेषु ततः को विधिरित्यत आह–भोक्तव्य सकरा स्निग्धमधुराणि द्रव्याणि ततः करान् प्रोञ्छयति प्रोञ्छयित्वा च करान् 'मुचऽहाकडए'त्ति यथा– कृतानि–अपरिकर्माणि पात्रकाणि समुद्देशनार्थं मुच्यन्ते। 'भोयण'त्ति गयं, इदानीं ग्रहणद्वारप्रतिपादनायाह—

१ च मु° आ. पा. १–२। २ इदेन आ। ३ भवेद् आ. पा ३ २। ४ यतस्ताभ्ये क ज १–२। ५ ततः आ.।

आददानः योऽसौ पतद्ग्रहो भ्रमति तस्मात्साधुः 'असारकः' अप्रधानो ज्ञानदर्शनचारित्राण्यङ्गीकृत्यासारः स भवति। तथा उद्गमोत्पादनाशुद्धमेषणादोषवर्जितं साधारणमेतद्द्रव्यमित्येवं जानानोऽदुष्टेनान्तरात्मना कवलं गुडादेराददानः साधुर्भवति 'ससारः' ज्ञानदर्शनचारित्रसारवान् भवति। कथं पुनरसारः साधुर्भवति? अत आह—उद्गमोत्पादनाशुद्धमेषणादोषवर्जितं साधारणमेतद्[1]गुडादिद्रव्यमित्येवमजानन्[2] दुष्टेन भावेनाददानः साधुः स्तेयं करोति ततोऽसारोऽसौ। स कथं पुनः ससारः[3] साधुर्भवति? उद्गमोत्पादनाशुद्धमेषणादोषवर्जितं 'साधारणं' तुल्यमेतत्सर्वेषां गुडादीत्येवं जानानोऽदुष्टान्तरात्मना स्वल्पमाददानः साधुर्निर्जरां करोति अतः ससारो ज्ञानदर्शनचारित्रैरिति। इदानीं ससारः कदाचिद्भोजनार्थमुपविशन् भवति कदाचिदुपविष्टः कदाचिदुत्थितः, एतत्प्रदर्शयन्नाह—अन्त्यं–प्रान्त्यं[4] वल्लचणकादि तदप्यन्त्यं–पर्युषितं चणकादि अन्त्यमप्यन्त्यमन्त्यान्त्यं भक्षयिष्यामि एवंविधेन परिणामेनोपविष्टो मण्डल्यां उपभुङ्क्ते यस्तथैव एष साधुः शुभपरिणामत्वात् ससार उपविष्टः ससारश्चोत्थितः, तस्य शुभपरिणामस्याप्रतिपतित्वात्, एवमेव भङ्गत्रितयं योजनीयं, तत्र प्रथमो भङ्गः ससारो निविट्ठो ससारो उट्ठिओ १, ससारो निविट्ठो असारो उट्ठिओ बिइओ भंगो २, असारो निविट्ठो ससारो उट्ठिओ तइओ ३, असारो निविट्ठो असारो उट्ठिओ एस चउत्थो ४, सारश्चात्र ज्ञानादि, आदिग्रहणाद्दर्शनं चारित्रं चेति, तेन ज्ञानादिना सहितो यः साधुः स ससारो भण्यते। अत्र च समुद्रवणिजा दृष्टान्तः॥ एगो समुद्दवणिओ बोहित्थं भंडस्स भरिउं ससारो गओ, ससारो य पउरं हिरन्नाइ विढवेऊण आगओ। अण्णो पुण ससारो भंडं गहेऊण गओ निस्सारो आगओ,

१ °गुडादीत्येवमनानानो दु° आ। २ °नानो दु° पा १–२। ३ °रो भवति आ। ४ प्रत्यवरं आ. पा. १ पु.।

असुरसुर अचवचवं अहुयमविळंबिअं अपरिसाडिं। मणवयकायगुत्तो भुंजे अह पक्खिवणसोही ॥२८९॥

असुरसुरं शब्दं-सरडसरड मकुर्वन् 'अचवचव' न चर्वयन् चवकैमिव चपचपाचेद, तथा 'मद्रुतम्' अत्वरित तथा 'मविलम्बितम्' अम परं अपरिशाटिं मनोवाक्कायगुप्तो भुञ्जीत, न मनसा विरूपमिति चिन्तयति, वाचा नेव वक्ति, यदुत भो इम मक्खेह ? जो मम्हारिसो न होइ, कायेन उद्धोसए मुहेन न वेइ, एव त्रिगुप्तस्य भुञ्जानस्य प्रक्षेपणशोधिर्भवति ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिअ । साहारण अयाणतो साहू होइ असारओ ॥ ५६९ ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिअ । साहारण विआणतो साहू होइ ससारओ ॥ ५७० ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिअ । साहारणं अयाणतो साहू कुणइ तेणिअ ॥ ५७१ ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिअ । साहारण वियाणतो साहू कुणइ निज्जर ॥ ५७२ ॥

अतत भोक्खामित्ति थेसए भुजए य तह चेव । एस ससारनिविट्ठो ससारओ उट्ठिओ साहू ॥५७३॥

एमेव भगतिअ जोएयव्व तु सारनाणाई । तेण सहिओ ससारो समुद्दमणिएण दिट्ठतो ॥ ५७४ ॥

उद्गमशुद्ध उत्पादनाशुद्ध एषणादोषवर्जित 'साधारण' सामान्यमेवगुर्वादि अजानानः-मतिमात्रं बुद्धेन भावेन

---

१ भुंज्य भद आ.। २ °सोहि बा । ३ स्फाभिव क । ४ भवचवादि, आ.। ५ पाद्य भ पा १। ६ °भ्य गुर्वादि भा क १-२।

'सुक्के'त्ति शुष्कभक्तपतद्ग्रहे, येन तोयप्रक्षेपेण संजातबन्धं तद्भक्तं सुखेनैव कवलैर्गृह्यते, अथ बहुलाभः संजातः–प्रचुरं लब्धं गुडादि ततोऽसंसृष्टमेव ध्रियते, किमर्थम् ?, अभक्तार्थिकानामर्थे येन मनोज्ञं भवेत् । उक्ता ग्रहणशोधिः, अधुना भुञ्जतः शोधिरुच्यते, सा च चतुर्धा, एतदेवाह—

सोही चउक्क[1] भावे वीइंगालं[2] च विगयधूमं च । रागेण सइंगालं[3] दोसेण सधूमगं जाणे[4] ॥ ५७८ ॥
जत्तासाहणहेउं आहारेंति जवणट्ठया जइणो । छायालीसं दोसेहिं सुपरिसुद्धं विगयरागा ॥ ५७९ ॥
हियाहारा मिताहारा अप्पाहारा य जे नरा । न ते विज्जा तिगिच्छंति अप्पाणं ते तिगिच्छगा ॥५८०॥

शुद्धौ चतुष्कं भवति नामस्थापनाद्रव्यभावरूपं, तत्र नामस्थापनाद्रव्यशोधिः[5] पूर्ववत्, भावविषया पुनः शोधिः विगताङ्गारं विगतधूमं च भुञ्जतो भावशोधिर्भवति, कथं साङ्गारं कथं वा सधूमं भवतीति ?, एतदेवाह–'रागेण' इत्यादि सुगमं ॥ 'चारित्रयात्रासाधनार्थं' धर्मसाधननिमित्तमाहारयन्ति यापनार्थं–शरीरसंधारणार्थं मुनयः षट्चत्वारिंशद्दोषैः सुपरिशुद्धमाहारयन्ति, के च ते ?, षोडशोद्गमदोषाः षोडशोत्पादनादोषाः दशैषणादोषाः संयोजणा पमाणं सइंगालं सधूमगं चेत्येते षट्चत्वारिंशत्, एभिर्विशुद्धं सद् विगतरागा आहारयन्ति ॥ सिलोगो सुगमः । उक्तो भुञ्जनविधिः, 'कारणे'त्ति द्वारं व्याख्यानयन्नाह—

१ भगे ल १ । २ विगइंगाल आ । ३ सयंगालं आ. । ४ होइ आ पा. १ । ५ °ने सुगमे, द्रव्य° आ. पा १ पु. ।

कारियाएवि रहिओ, तपि पुधिछपं हारेऊण आगओ। अण्णो असारो अंगवीओ पिहिरण्णो गओ ससारो आगओ पभूय विरवेऊण। अण्णो पुण असारो हिरण्णरहिओ गओ असारो चेव आगओ कवडियाएवि रहिओ ॥ एव साधोरपि सारासार पोषना कर्तव्या भणितन्यायेन। एव तेषां भुञ्जतां यदि पतद्ग्रहको भ्रमभेषार्द्धपथे निष्ठां याति ततो को विधिरित्यत आह—

जत्थ पुण पडिग्गहगो होज्ज कडो तत्थ छुब्भए अन्न। मत्तगगहिउव्वरिम पडिग्गहे ज असंसट्ठ ॥५७५॥

ज पुण गुरुस्स सेस त छुब्भइ मडलीपडिग्गहके। बालादीण व दिज्जइ न छुब्भई सेसगाणऽहिअ ॥५७६॥

सुक्कोल्लपडिग्गहगे त्रिआणिउ पक्खिवे दव सुक्के। अभचाट्ठिआणट्ठा बहु लभे ज असंसट्ठ ॥ ५७७ ॥

यत्र पुनर्भुञ्जतां पतद्ग्रहको भवेत् 'कडो'त्ति निष्ठितभक्तो जातः साधुपर्यन्तमप्राप्त एव, तत्र किं कर्तव्यमित्यत आह—'तत्र' तस्मिन्निष्ठितभक्ते पतद्ग्रहकेऽन्यद्भक्तं प्रक्षिप्यते, ततश्च यस्मिन् साधौ स निष्ठितः पतद्ग्रहस्तस्मादारभ्य तेनैव क्रमेण पुनर्भ्रा म्यते, मात्रके वा पञ्चालादीनां प्रायोग्य गृहीतमासीत्, तदिदानीमुद्धरित तदसंसृष्ट सत् पतद्ग्रहे प्रक्षिप्य पतद्ग्रहो यस्मिन् साधौ निष्ठितस्तस्मादारभ्य पुनर्भ्रमतीति। यत्पुनर्गुरोः शेषं भुञ्जतो जात तत्संसृष्टमपि प्रक्षिप्यते मण्डलीपतद्ग्रहके, बालादीनां वा दीयते तदाचार्योद्धरितं, यत्पुनराचार्यव्यतिरिक्तानामुद्धरितम्—अधिक जातं तन्न प्रक्षिप्यते मण्डलीपतद्ग्रहके संसृष्ट सत्। किञ्च, 'सुक्क'त्ति एकः शुष्केण भक्तेन पतद्ग्रहः, अपरः 'उल्ल'त्ति आर्द्रेण भक्तेन पतद्ग्रहः, एवं विज्ञाय ततः प्रक्षिपेद्द्रव

१ ठति म. १। २ भण्यते। भा पा. १।

'सुक्के'त्ति शुष्कभक्तपतद्ग्रहे, येन तोयप्रक्षेपेण संजातबन्धं तद्भक्तं सुखेनैव कवलैर्गृह्यते, अथ बहुलाभः संजातः–प्रचुरं लब्धं गुडादि ततोऽसंसृष्टमेव ध्रियते, किमर्थम् ?, अभक्तार्थिकानामर्थे येन मनोज्ञं भवेत् । उक्ता ग्रहणशोधिः, अधुना भुञ्जतः शोधिरुच्यते, सा च चतुर्धा, एतदेवाह—

सोही चउक्क भावे[1] वीइंगालं[2] च विगयधूमं च । रागेण सइंगालं[3] दोसेण सधूमगं जाणे[4] ॥ ५७८ ॥

जत्तासाहणहेउं आहारेंति जवणट्ठया जइणो । छायालीसं दोसेहिं सुपरिसुद्धं विगयरागा ॥ ५७९ ॥

हियाहारा मिताहारा अप्पाहारा य जे नरा । न ते विज्जा तिगिच्छंति अप्पाणं ते तिगिच्छगा ॥५८०॥

शुद्धौ चतुष्कं भवति नामस्थापनाद्रव्यभावरूपं, तत्र नामस्थापनाद्रव्यशोधिः पूर्ववत्, भावविषया पुनः शोधिः विगताङ्गारं विगतधूमं च भुञ्जतो भावशोधिर्भवति, कथं साङ्गारं कथं वा सधूमं भवतीति ?, एतदेवाह–'रागेण' इत्यादि सुगमं ॥ 'चारित्रयात्रासाधनार्थं' धर्मसाधननिमित्तमाहारयन्ति यापनार्थं–शरीरसंधारणार्थं मुनयः षट्चत्वारिंशद्दोषैः सुपरिशुद्धमाहारयन्ति, के च ते ?, षोडशोद्गमदोषाः षोडशोत्पादनादोषाः दशैषणादोषाः संयोजणा पमाणं सइंगालं सधूमगं चेत्येते षट्चत्वारिंशत्, एभिर्विशुद्धं सद् विगतरागा आहारयन्ति ॥ सिलोगो सुगमः । उक्तो भुञ्जनविधिः, 'कारणे'त्ति द्वारं व्याख्यानयन्नाह—

---

१ भंगे ल १ । २ विगइंगालं आ । ३ सयंगाल आ. । ४ होइ आ पा. १ । ५ °ने सुगमे, द्रव्य° आ पा १ पु. ।

छण्हमन्नयरे ठाणे कारणमि उ आगए। आहारेज्ज मेहावी संजए सुसमाहिए ॥ ५८१ ॥
वेयणवेयावच्चे इरियट्ठाए य संजमट्ठाए। तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥ ५८२ ॥
नत्थि छुहाए सरिसिया वेयणा भुंजेज्ज तप्पसमणट्ठा। छाओ वेयावच्चं न तरइ काउं अओ भुंजे ॥२९०॥
इरियं नवि सोहेइ पेहाईयं च संजमं काउं। थामो वा परिहायइ गुणणुप्पेहासु य असत्तो॥ २९१ ॥

षण्णां स्थानानामन्यतरस्मिन् स्थान–कारणे आगते सति आहारयेन्मेधावी संयतः सुसमाहितः। कानि च तानि षट् स्थानानि? इत्यत आह–वेदना–क्षुद्वेदना तदुपशमनार्थं भुङ्क्ते, तथा वैयावृत्त्यार्थं तथा ईर्यापथिकाशोधनार्थं तथा संयमार्थं स च प्रेक्षोत्प्रेक्षप्रमार्जनादिलक्षणः, तथा 'पाणवत्तियाए' प्राणसंधारणार्थं, षष्ठं पुनर्धर्मचिन्तार्थं भुङ्क्ते। इदानीमेतामेव गाथां भाष्यकृद्विवृणोति, तत्राद्यावयवव्याचिख्यासयाह–नास्ति क्षुत्सदृशी वेदनाऽतो भुञ्जीत तदुपशमनार्थम्। द्वारं। 'छाओ'त्ति बुभुक्षितो वैयावृत्त्यं कर्तुं न शक्नोति अतो भुङ्क्ते। द्वारं। ईर्यापथिकां बुभुक्षितो न शोधयति यतोऽतस्तच्छोधनार्थं भुङ्क्ते। द्वारं। तथा 'पेहाईयं च'त्ति 'प्रेक्षोत्प्रेक्षप्रमार्जन' इत्यादिकं संयमं बुभुक्षितः कर्तुं न शक्नोति यतोऽतो भुङ्क्ते। द्वारं। 'थामो वा' प्राणस्तस्य परिहाणिर्भवति यदि न भुङ्क्ते अतस्तदर्थं भुञ्जीत। द्वारं। तथा गुणनं पूर्वपठितस्य अनुप्रेक्षा–चिन्तनं प्रत्यर्थयोः एतद्द्वयो कर्तुमसमर्थः सन् भुङ्क्ते। द्वारं।

१ [illegible]

अहव न कुज्जाहारं छहिं ठाणेहिं संजए। पच्छा पच्छिमकालंमि काउं अप्पक्खमं खमं ॥ ५८३ ॥
आयंके उवसग्गे तितिक्खया बंभचेरगुत्तीए। पाणदयातवहेउं सरीरवोच्छेयणट्ठाए ॥ २९२ ॥ (भा०)
आयंको जरमाई राया सन्नायगा व उवसग्गा। बंभवयपालणट्ठा पाणिदयावासमहियाई ॥२९३॥ भा०
तवहेउ चउत्थाई जाव छम्मासिओ तवो होइ। छट्ठं सरीरवोच्छेयणट्ठया होयणाहारो ॥ २९४ ॥
एएहिं छहिं ठाणेहिं अणाहारो ये जो भवे। धम्मं नाइक्कमे भिक्खू झाणजोगरओ भवे ॥ ५८४ ॥

अथवा न कुर्यादेवाहारमेभिः षड्भिः स्थानैर्वक्ष्यमाणलक्षणैः। तत्र निर्युक्तिकार एव षष्ठं पदं व्याख्यानयन्नाह—'पच्छा पच्छिमकालंमि' पश्चिमकाले—संलेखनाकाले 'आत्मक्षमाम्' आत्महितां क्षमां—क्षान्तिमुपशमं कृत्वा ततः पश्चात्—सुखेन शरीरपरिकर्मानन्तरं सर्वाहारं मुञ्चतीति। इदानीं भाष्यकार एव एतानि षट्स्थानानि प्रदर्शयन्नाह—'आतङ्कः' ज्वरादिर्वक्ष्यते, तथा 'उपसर्गः' राजादिजनितः, एतेषां 'तितिक्षार्थं' सहनार्थं न भोक्तव्यं, तथा ब्रह्मचर्यगुप्त्यर्थं च न भोक्तव्यं, तथा[3] प्राणिदयार्थं च न भोक्तव्यं, तथा तपोऽर्थं शरीरव्यवच्छेदार्थं च न भोक्तव्यमिति। इदानीं भाष्यकृत् प्रतिपदं व्याख्यानयति, तत्राद्यावयवव्याचिख्यासयाऽऽह—आतङ्को—ज्वरादिः, आदिग्रहणादन्यो व्याधिर्यत्र भोजनं न पथ्यं तदर्थं न भुङ्क्ते। दारं। राज्ञा राज-

१ पाणदया° आ ल. १। २ उ. ल १। ३ तया तपोऽर्थं आ।

ज्ञनधारणादिरूपो यद्युपसर्गः कृतः, समापगा वा–स्वजना यदि उभिष्क्रमणार्थमुपसर्गं कुर्वते ततो न भुङ्क्ते । द्वारं । ब्रह्मचर्यपालनार्थं न भुङ्क्ते, यतो भुभुक्षितस्योन्मादो न भवति । द्वारं । प्राणिदयार्थं न भुङ्क्ते, यदि वर्षति महिका वा निपतति । द्वारं । तपोऽर्थं न भुङ्क्ते तच चतुर्थादि यावत्षण्मासास्तावत्तपो भवति तदर्थं न भुङ्क्ते । द्वारं । षष्ठ शरीरव्यवच्छेदार्थमनाहारः साधुर्भवतीति ॥ एभिः पूर्वोक्तैः षड्भिः स्थानैरनाहारको भवति स धर्मं नातिक्रामति भिक्षुरतो ध्यानयोगरतेन भवितव्यमिति । आह–इदमुक्त षड्भिः कारणैराहार आहारयितव्यः षड्भिश्च कारणैर्नाहारयितव्यस्तत्किमेतद्भोजनमपवादपद ?, उच्यते, अपवादपदमेवैतद् , यतः—

भुंजतो आहारं गुणोवयारं सरीरसाहारं । विहिणा जहोवइट्ठं संजमजोगाण वहणट्ठा ॥ ५८५ ॥

भुञ्जमाहारं, किं विशिष्ट ?–'गुणोपकारं' ज्ञानदर्शनचारित्रगुणानामुपकारकं, तथा शरीरस्य साधारं शरीरस्य संधानकमाहारं भुञ्जन् विधिना–ग्रासैषणाविशुद्ध 'यथोपदिष्टम्' आधाकर्मादिरहितं 'संयमयोगानां' संयमव्यापाराणां वहनार्थं भुञ्जअपवादपदस्थ एव भुङ्क्ते नान्यथा । इदानीं समुद्दिष्टे सति संलिहनकल्पः कर्तव्यः–भिक्षाभक्तविलिप्तानां पात्रकाणां संलिहनं कर्तव्यमित्यर्थः, तेषा चाह—

भुत्तट्ठियावसेसो तिलमणा होइ संलिहणकप्पो । अपहुप्पते अन्न छोढु तेय ठवणे ठवए ॥ ५८६ ॥

१ °हारो भो भवति ला पा १–२ । २ °मर्थं ला । ३ °तता कि ला । ४ आधाकर्माहारं ला॰ प २ पा. ५ संधानक्मा° ल १ । ५ प ल ला. प. २ । ६ ता ल° ला. ।

संदिट्ठा संलिहिउं पढमं कप्पं तु[1] दिंति कलुसेणं। तं पाउं मुहमासो वितियच्छदवस्स गिण्हंति ॥५८७
दाऊण वितियकप्पं बहिआ मज्झट्ठिओ उ दवहारी। तो देंति तइयकप्पं दोण्हं दोण्हं तु आयमणं ॥

भुक्तानामवशेषो यः स संलेखनकल्पः कर्त्तव्यः, स चावशेषो न ज्ञायते कियत्प्रमाणः ? अत आह–'त्रिलम्बनः' त्रिकवलः कवलत्रयप्रमाणो भुक्तावशेषः संलेखनकल्पः कर्त्तव्यः, यदा तु त्रिकवलप्रमाणः संलेखनकल्पो न भवति तदाऽपर्याप्यमाणेऽन्यदपि तस्मिन् पात्रके भक्तं प्रक्षिप्य ततस्त्रीन् कवलान् स्थापयति। 'सन्दिष्टाः' भुक्ताः सन्तः संलिह्य पात्रकाणि पुनश्च प्रथमं कल्पं ददति कलुषोदकेन, पुनश्च तत्पीत्वा 'मुहमासो'त्ति मुखस्य परामर्शः–प्रमार्जनं कुर्वन्तीति, पुनश्च द्वितीयकल्पार्थमच्छस्य द्रवस्य ग्रहणं कुर्वन्तीति, गृहीत्वा[2] च कल्पार्थमच्छद्रवं मण्डल्या उत्थाय बहिः पात्रकप्रक्षालनार्थं गच्छन्ति। तत्र च दत्त्वा द्वितीयकल्पं 'बाह्यतः' पात्रकप्रक्षालनभूमौ, ते च मण्डल्याकारेण तत्रोपविशन्ति, तेषां च मध्ये स्थितो द्रवधारी भवति, स च पात्रप्रक्षालनं सर्वेषामेव प्रयच्छति, ततो ददति ते साधवः पात्रकाणां तृतीयं कल्पं, पुनश्च पात्रकप्रक्षालनान्तरं 'दोण्हं दोण्हं तु आयमणं'ति द्वयोर्द्वयोः साध्वोः पात्रकेषु[3] 'आचमनार्थं' निर्लेपनार्थमुदकं प्रयच्छतीति। एष तावदनुद्धरिते भक्ते विधिरुक्तः, यदा तु पुनरुद्धरितं भक्तं भवति तदा को विधिरित्यत आह—

होज्ज सिआ उव्वरियं तत्थ य आयंबिलाइणो होज्जा। पडिदंसि य संदिट्ठो वाहरइ तओ चउत्थाई॥५८९॥

[1] करेइ कलु° भा पा. १। [2] °त्वाऽय क° भा। [3] मात्रकेषु भा पा. १।

मोहतिगिच्छविगिट्ठ गिलाणं अचट्ठिय च मोत्तूण । सेसे गतु भणई आयरिया वाहरति तुम ॥५९०॥
अपदिंङ्णतो आगंतु वदिउ भणइ सो य आयरिए । सदिसह भुंज ज सरति तावियं सेस तस्सेव ॥५९१
अभणतस्स उ तस्सेव सेसओ होइ सो विवेगो उ । भणिए तस्स उ गुरुणा पत्तुवएसो पवणयस्स ॥५९२
मुत्तमि पढमकप्पे केयमि तस्सेव देंति त पाय । जावसिअतिअ भणिए तस्सेव विगिंचणे सेस ॥ ५९३ ॥

'भवेत्' स्यात् कदाचिदुक्तरीत्या 'तत्र' साधूनां मध्ये कदाचित्केचिदाचाम्लादिनो भवन्ति आदिग्रहणादभक्तार्थिको वा कश्चिद्भवेत्ततस्तदुक्तरीत्या भक्तं रत्नाधिक आचार्याय प्रदर्शयति, पुनश्च प्रदर्शितभक्तो गुरुणा च 'सन्दिष्टः' उक्तः यदुत ओघ आचाम्लादीन् साधून् येन तेभ्यो दीयते, पुनश्चासौ रत्नाधिकः सन्दिष्टः सन् चतुर्थादीन् साधून् व्याहरति । स च व्याहरन्नेवाम व्याहरति, मोहचिकित्सार्थं य उपवासिकः स्थितस्तं न व्याहरति तथा विकृष्टतपसं साधुं न व्याहरति, विकृष्टतपाश्चाष्टमाद्यारम्भ भवति, तस्य च कदाचिद्देवता प्रातिहार्यं करोति अतस्तस्य न दीयते, ग्लानश्च ज्वरादिना तं च न व्याहरति, आत्मलब्धिकं च न व्याहरति, एतानन्तरोदितान् साधून् मुक्त्वा शेषान् साधून् गत्वा भणति, यदुत आचार्या व्याहरन्ति युष्मान्, तेषां च मध्ये यश्चतुर्थादिक आकारितः स आकर्ण्य किं करोति ? इत्याह-अनतिलङ्घयन् गुरोराज्ञामागत्य वन्दित्वा भणति तमाचार्यं यदुत-संदिशत यूयं, आचार्योऽपि भणति-गृह्णीत, सोऽपि भणति-न सरति तावत् भुञ्जामि, शेषं पडुच्चरति

१ भविष्यो क्ष पा. १ । २ कोमि ना क. १ २. पा. १ २ । ३ ग्लायस्ये मा । ४ ते मध्ये भ्य । ५ आगममन्यथा क १ । ६ गत्वा भवति पा २ ।

तत्स्यैव यस्य सत्कः प्रतिग्रहकः, पुनश्च स एव परिष्ठापयतीति। अथासौ साधुरेवं न भणति यदुत 'जं सरइ तच्चिअं' ततस्तस्य एवमभणतस्तस्यैव यच्छेषं भक्तमुद्धरितं तद्भवति, स एव 'विवेचकः' परिष्ठापक इत्यर्थः, भणिते तु एवं 'जावइयं सरइ तावइयं सारेमि'त्ति, ततस्तस्यैव साधोर्यस्य सत्कः पतद्ग्रहकः तस्यैव गुरूणां पतद्ग्रहकः समर्पयितव्यः, पुनः स एव कल्पं ददाति। अयं प्रवचनस्य पूर्वोक्त उपदेशः। अथ यदुद्धरति तत्सर्वं भुङ्क्ते ततस्तस्मिन् भुक्ते सति तस्य पात्रकस्य प्रथमकल्पं ददाति, कृते च तस्मिन् प्रथमकल्पे तस्यैव साधोर्यस्य सत्कः पतद्ग्रहकस्तस्यैव तत्पात्रकं 'ददाति' समर्पयतीत्यर्थः, अथैतन्न ब्रूते यदुत जावइयं सरइ तावइयं सारेमित्ति, ततः जावतिअंति अभणिते सति तस्यैव साधोर्यः पारिष्ठापनिकमोक्ता तस्यैव यदुद्धरितं शेषं तत्परित्याज्यं भवति। इदं च पूर्वोक्तस्यैव व्याख्यानं द्रष्टव्यं न तु पुनरुक्तमिति। किंविधं पुनश्चतुर्थोपवासिकादेः पारिष्ठापनिकं कल्पते ?, अत आह—

विहिगहिअं विहिभुत्तं अइरेगं भत्तपाण भोत्तव्वं। विहिगहिए विहिभुत्ते एत्थ य चउरो भवे भंगा ॥५९४॥

उग्गमदोसाइजढं अहवा बीअं जहा जहिं गहिअं[2]। इइ एसो गहणविही असुद्धपच्छायणे अविही॥२९५भा.

कागसियालक्खइयं दविअरसं[3] सव्वओ परामुट्ठं।

एसो उ भवे अविही जहगहिअं भोयणंमि ( भुंजओ य ) विही ॥ ५९५ ॥

१ सरामी'ति आ. पा १। २ पडिअ आ पा १। ३ रविअ° ल. १-२. पा. १।

उग्घिणइ य विट्ठाओ कागाउ अहवावि विक्खिरइ सव्वं। विप्पेक्खइ य दिसाओ सियालो अन्नोन्नहिं गिण्हे।
सुरहीदोच्चगट्ठा छोढूण दव्व तु पियइ दोवियरस। छेट्ठोवारि आमट्ठ इय पसो भुजणे अविही २९७ ॥भा०
जह गहिअ तह नीय गहणविही भोयणे विही इणमो। उक्कोसमणुक्कोस सेमीकयरस तु भुजिज्जा ॥२९८
तइएवि अविहिगहिअ विहिभुत्त स गुरूहिऽणुन्नाय। सेसा नाणुन्नाया गहणे दिंते य निज्जुहणा ॥२९९
अहवावि अकरणाए उवट्ठिय जाणिऊण कल्लाण। घट्टेउ दिंति गुरू पसगविणिवारणट्ठाए ॥३००॥ (भा)

विधिनोद्गमदोषादिरहितं सारासारविभागेन च यच्च कृत पात्रके तद्विधिगृहीत, तथा 'विधिभुक्तं' कटच्छेदेन प्रतरच्छेदादिना वा यद्भुक्त तद्विधिभुक्तमुच्यते, तदेवविधं विधिगृहीत विधिभुक्तं च सत् यदतिरिक्त संजातं भक्त पानकं वा तन्नोकर्म्य परिष्ठापनिकोकारेण कल्पते। अत्र च विधिगृहीते विधिभुक्ते चास्मिन् पदद्वये चत्वारो भङ्गका भवन्ति, तद्यथा-विहिगहिअं विहिभुत्त एसो भगओ, विहिगहिअं अविहिभुत्त बिइओ भंगओ, अविहिगहिअं विहिभुत्त तइओ भंगओ, अविहिगहिअं अविहिभुत्त चउत्थो भगओ ॥ इदानीं भाष्यकृद् विधिगृहीताविधिगृहीतयोः स्वरूप प्रतिपादयन्नाह-उद्गमदोषादिभिर्वह-त्यक्त यत्तद्विधिगृहीतं, अथवा यद्वस्तु मण्डकादि यथैव यस्मिन् स्थाने पतितं भवति तत्तथैवास्ते नतु समारयति इत्येष ग्रहणविधिः। 'असुरसुरपच्छायणे अविही' असुरसुरस्य-उद्गमादिदोषान्वितस्य पच्छायणं ग्रहणमविधिग्रहणं, अथवा गुडादेर्द्रव्यस्य

१ उंघिय क २ पा.१ । २ धमिणीवाउं क.१ धमधमाउं ला. । ३ भुंजे भत्तं क १ । ४ दरेण ला । ५ भत्तं च ला. । ६ अत्र भाष्य भङ्गान्तरेण-अत्र ला ।

मण्डकादिना प्रच्छाद्य यदेकस्मिन् पात्रकप्रदेशे स्थापनं तदविधिग्रहणमुच्यते। इदानीमविधिभोजनविधिभोजनयोः स्वरूपं प्रतिपादयन्नाह–काकभुक्तं शृगालभुक्तं तथा 'दवियरसं' द्रावितरसमित्यर्थः 'सर्वतः परामृष्टम्' उत्थल्लपत्थल्लणेण भुक्तं 'एसो उ भवे अविही' इदं तु पूर्वोक्तमविधिना भुक्तमुच्यते, यथैव गृहीतं पात्रके तथैव भुञ्जतो विधिभुक्तमुच्यते। इदानीं भाष्यकृद् व्याख्यानयति, तत्राद्यावयवप्रतिपादनायाह–यथा काक उच्चित्योच्चित्य विष्टादेर्मध्याद्वल्लादि भक्षयति एवमसावपि, अथवा विकिरति काकवदेव सर्वं, तथा काकवदेव कवलं प्रक्षिप्य मुखे दिशो विप्रेक्षते, तथा शृगाल इवान्यस्मिन-न्यस्मिन् प्रदेशे भक्षयति। सुरभि यद् 'दोचंगं' तीमनं ओदनादिना सह यन्मिश्रीभूतं तत्र द्रवं प्रक्षिप्य यो निर्यासः संजात-स्तत्पिबनं यत्तद्रवितरसमुच्यते। तथाऽधस्तादुपरि च यद् 'आमड्डं' विपर्यासीकृतं भुङ्क्ते तदेतत्परामड्डं, अयमेष भोजनेऽविधिः। कः पुनर्ग्रहणभोजनयोर्विधिः? इत्यत आह–यथैव गृहीतं–गृहस्थेन दत्तं सत्तत्थैवानीतं यदयं ग्रहणविधिः, भोजने पुनरयं विधिः–यदुतोत्कृष्टद्रव्यमन्यदनुत्कृष्टद्रव्यं च समीकृतरसं भुञ्जीतेत्ययं प्रथमो भङ्गकः शुद्ध इति। तृतीयेऽपि भङ्गकेऽविधिना असमाचार्या गृहीतं विधिना भुक्तं–समीकृतरसं सद् भुक्तं तच्च गुरुणाऽनुज्ञातं, शेषौ तु द्वौ भङ्गकौ नानुज्ञातौ, यस्तु विधिगृहीतमविधिभुक्तं काकशृगालादिरूपं भक्तं ददाति योऽपि गृह्णाति तयोर्द्वयोरपि 'निज्जुहणा' निर्द्धारणं क्रियते, तथाऽविधिगृहीतमविधिभुक्तं च यो ददाति गृह्णाति वा तयोर्द्वयोरपि निर्द्धारणं क्रियत इति। अथवा एतद्दोषाकरणतया–अनासेवनया उपस्थितं दातारं ग्रहीतारं च ज्ञात्वा संगोपायनं क्रियते, कल्याणकं च गुरवो ददति, तच्च ददति 'घट्टयित्वा'

---

१ द्रावित॰ आ पा। २ ॰न्यत्रान्यत्र प्र॰ आ। ३ एयं परा॰ क १–२.। ४ ॰मनुत्कृ॰ आ।

तिरस्कृत्य, यदुत त्वया पुनरेष न कर्तव्य, स चैनं गुरुः किंनिमित्त करोतीत्यत आह–'पसंगविणिवारणट्ठाए' प्रसङ्गस्य–पुनरासेवनस्य विनिवारणार्थमेव करोतीति ।

घासेसणा उ एसा कहिया मे। धीरपुरिसपन्नत्ता। संजमतवड्ढगाण निग्गंथाण महरिसीण ॥२०१॥ भा

एय घासेसणविहिं जुंजता चरणकरणमाउत्ता। साहू खवंति कम्मं अणेगभवसंचियमणंत ॥२०२॥ भा

( घासेसणा समत्ता )

एत्तो परिट्ठवणाविहिं वोच्छामि धीरपुरिसपन्नत्तं। जं नाऊण सुविहिया करिंति दुक्खक्खयं धीरा२०३भा

सुगमाः ॥ इदानीं उवरिएत्ति द्वारं भण्यते, अथवा स्वयमेव भाष्यकारः संबन्धं प्रतिपादयन्नाह—

भत्तट्ठिअ उव्वरिअं अहव अभत्तट्ठियाण जं सेसं। सवधेणाणेण उ परिठावणिआ मुणेयव्वा॥२०४॥(भा )

भक्तार्थिकानां च भुक्तानामुद्धरितं यद् अथवा अभक्तार्थिकानां–पारिष्ठापनिकामोक्तॄणां यदुद्धरितं–यच्छेषं तत्परिष्ठापनीयमिति कृत्वा अनेन संबन्धेन पारिष्ठापनिका विज्ञेया भवतीत्यर्थः ।

सा पुण जायमजाया जाया मूलोत्तरेहि उ असुद्धा। लोभातिरेगगहिया अभिओगकया विसकया वा ॥

सा पुनः पारिष्ठापनिका जाता अजाता च भवति, तत्र जाता ग्रहणकाल एव प्राणातिपातादिदोषेण युक्ता अथवा

१ गुरुवर्णं पादि क्व । २ भावा क १।

आधाकर्मादिदोषेण 'जाता' उत्पन्ना, अजाता पुनः–आधाकर्मादिदोषेण न दूषिता यां साऽजातेत्युच्यते, तत्र जातास्वरूपप्रतिपादनायाह–मूलगुणैः–प्राणातिपातादिभिरशुद्धा, तथा उत्तरगुणैश्चाधाकर्मादिभिरशुद्धा, तथा लोभातिरेकेण–लोभाभिप्रायेण साधुना गृहीता साऽप्यशुद्धा लोभदोषदूषिता सती जातेत्युच्यते, तथा अभियोगकृता, अभियोगो द्विविधः–वशीकरणचूर्णो मन्त्रश्च, तत्र सा भिक्षा कदाचित्संयोजिता भवति मन्त्राभिमन्त्रिता वा साऽप्यशुद्धा, अतो जाता सा पारिष्ठापनिकेत्युच्यते, विषेण वा व्यामिश्रं भक्तं केनचिद् द्विष्टेन दत्तं भवति तस्य यत् परिष्ठापनं सा जातापरिष्ठापनिकेति। इदानीं भाष्यकृदेनामेव गाथां व्याख्यानयति, तत्र जातापरिष्ठापनिकास्वरूपाभिधानायाह—

**मूलगुणेहिं असुद्धं जं गहिअं भत्तपाण साहूहिं। एसा उ होइ जाता वुच्छं सि विहीए वोसिरणं ॥३०५॥ भा.**

**एगंतमणावाए अच्चित्ते थंडिले गुरुवइट्ठे। आलोए एगपुंजं तिट्ठाणं सावणं कुज्जा ॥ ५९७ ॥**

**लोभातिरेगगहिअं अहव असुद्धं तु उत्तरगुणेहिं। एसावि होति जाया वोच्छं सि विहीए वोसिरणं ॥ भा.**

**एगंतमणावाए अच्चित्ते थंडिले गुरुवइट्ठे। आलोए दोन्नि पुंजा तिट्ठाणं सावणं कुज्जा ॥ ५९८ ॥**

मूलगुणैः प्राणातिपातादिभिरशुद्धं यद्गृहीतं भक्तं पानकं वा साधुभिरियं जाताऽभिधीयते, वक्ष्ये 'अस्याः' जाताया विधिना 'व्युत्सर्जनं' परित्यागं। सा च जाता किंविधे[2] स्थण्डिले परिष्ठापनीया[3]?–एकान्ते 'अनापाते' लोकापातरहिते अचित्ते स्थण्डिले

१ उत्पन्ना या ल १. २। २ एवंविधे आ। ३ °या–ए° आ।

गुरूपदिष्टे 'अणावायमसंलोए' इत्येवमादिके 'आलोगे' समे भूभागे, न गर्तादौ, यत्र प्राघूर्णकादयः सुखेन पश्यन्ति, तत्र च तस्य भक्तस्य एकः 'पुञ्जः' राशिः क्रियते, पुनश्च 'त्रिस्थान' श्रेयो धाराः श्रावणं करोति—व्युत्सृष्टं व्युत्सृष्टं व्युत्सृष्टमिति, तच्च त्रिस्थान श्रावणं करोति त्रिविधेन मनसा वाचा कायेन व्युत्सृष्टमित्यस्य ज्ञापनार्थमिति। यत्पुनः साधुना लोमातिरेकेण गुरुादिद्रव्य मूर्च्छया गृहीत अथवा यदशुद्धमुद्गमगुणैः—आधाकर्मादिभिः, इयमपि भिक्षा मावेत्युच्यते यस्ये अस्या विधिना व्युत्सर्जनं—परित्यागम्। पूर्वार्द्धं सुगमं, केवलमत्र द्वौ पुञ्जौ क्रियेते आलोके साधुनाम्। इदानीं 'अभिओगे'त्ति व्याख्यानयन्नाह—

दुविहो खलु अभिओगो दव्वे भावे य होइ नायव्वो। दव्वम्मि होइ जोगो विज्जा मंता य भावम्मि ॥५९९॥

द्विविधोऽभियोगो—द्रव्याभियोगो भावाभियोगश्च ज्ञातव्यः, तत्र द्रव्ये योगो द्रव्ययोगश्चूर्णस्तन्मिश्रपिण्डोऽभियोगपिण्डः, स च परित्यजनीय, भावाभियोगश्च विद्यया मन्त्रेणाभिमन्त्र्य पिण्डं ददाति स तादृशो भावाभियोगपिण्डः, स च परिष्ठापनीय इति। अत्र चागार्या दृष्टान्तः, एगा अविरइया सा अणिट्ठा पतिणो, ताए परिवाइया अब्भत्थियो जहा किंचि मन्नेण अहिमंतेऊण मे देहि जेण पई मे वसे होइ, ताहे ताए अभिमंतेऊण कूरो दिण्णो, अविरइयाए चिंतियं, मा एसो दिण्णेण मरिज्जा तओ ताए अणुकंपाए उक्कुरुडियाए छड्डिओ, सो गद्दहेण खइओ, सो रत्तिं परदारं सोडेउमारद्धो ताणि णिग्गयाणि जाव पेच्छंति गद्दहेण खोडिज्जंत, सो अविरओ भणइ—किं एयत्ति ?, ताए सब्भावो कहिओ, तेणवि सा वेरिगा दवाविआ, एम दोसो। एवं जदि तिरियाण एरिसा अवत्था होइ माणुसस्स पुण सुद्धुयरं होइ, अओ एरिसो पिंडो न

१ पिंडे वाया अ। २ द्रव्याभियोगो द्रव्यसंयोगचूर्णस्तन्मिश्र पि अ। ३ परिष्ठापनीय अ.।

घेत्तवो ॥ अमुमेवार्थं गाथाभिरुपसंहरन्नाह—

**विज्जाए होअगारी अचियत्ता सा य पुच्छए चरिअं। अभिमंतणोदणस्स उ अणुकंपणमुज्झणं च खरे ॥**
**बारस्स पिट्टणंमि अ पुच्छण कहणं च होअगारीए। सिट्ठे चरियादंडो एवं दोसा इहंपि सिया ॥६०१॥**

विद्याभिमन्त्रिते पिण्डेऽगारी दृष्टान्तः, सा च भर्तुरचियत्ता—न रोचते, सा च चरिकां—परिव्राजिकां पृच्छति पत्युर्वशीकरणार्थं, तयाऽप्यभिमन्त्रणमोदनस्य कृत्वा दत्तं, तयाऽपि अगार्या पत्युर्मरणानुकम्पया न दत्तः स ओदनः 'उज्झनं' परित्यागः कृतः, स चोज्झितः खरेण भक्षित इति। स च गर्दभ आगत्य द्वारं पिट्टयति मन्त्रवशीकृतः सन्, शेषं सुगमम्। एवं भावाभियोगे दृष्टान्त उक्तः। इदानीं द्रव्याभियोगचूर्णं वशीकरणपिण्डः स उच्यते—एगा अविरइया, सा य सुरूवस्स भिक्खुणो अज्झोववण्णा अणुरत्ता, ताहे सा तं पत्थेति[1] अणिच्छंतस्स चुण्णाभिओगेण संजोएउं[3] भिक्खं पाडिवेसिअघरे काऊण दवाविअं, ताहे जओ[4] चेव तस्स साहुस्स पडिग्गहगे पडिअं तओ[5] चेव तस्स साहुस्स तत्तोहुत्तो[6] मणो हीरइ, तेण य नायं ताहे नियट्टो[7], आयरिआणं पडिग्गहगं दाउं काइयभूमिं वच्चइ जाव आयरियाणंपि तत्तोहुत्तो भावो हीरइ, ताहे सो सीसो आगंतुं आलोएइ, आयरिआ भणंति—ममवि अत्थि भावो, तं एत्थं संजोगचुण्णेण कओ पिंडो अत्थि, ताहे परिठविज्जइ, जो विही परिट्ठावणो

१ दत्त, 'उज्झन' आ पा १ । २ पेच्छति आ । ३ °एण भिक्ख ल १ । ४ जत्थेव तस्स आ । ५ तत्थेव तस्स आ । ६ तओ मणो आ. । ७ नियत्तइ आ ।

मो उवरिं भण्णिहिति। एवमव विमकपपि, एगा भगारी साहुणो भज्झोववण्णा, सो य नेच्छइ, ताहे रुट्ठाए विसेण मिस्सा भिक्खा दिण्णा, तस्स य दिण्णमेत्तेण चेव सिरोवेयणा संजाया, पडिणियत्तो य गुरुणो समप्पेऊण काइय वोसिरइ जाव गुरुणोवि सीमवेयणा जाया, त च गुरुणा णघेण णायं जहा इम विसमिस्सं, अहवा तस्य लवणकया भिक्खा पडिया ताहे त विसं उप्फिणइ, एव नाए विहीए परिट्ठविज्जति सो य भणीहामि ॥ इदानीममुमथार्यं गाथाभिरुपसंहरन्नाह—

जोगमि उ अविरइआ अज्झोववन्ना सरूवभिक्खुमि। कडजोगमणिच्छतस्स देइ भिक्ख असुमभावे ६०२

सकाए स नियट्टो दाऊण गुरुस्स काइय निसिरे। तेसिंपि असुमभावो पुच्छा य ममपि उज्झणया ॥६०३

एमेव विसकयमिवि दाऊण गुरुस्स काइय निसिरे। गंधाई विन्नाए उज्झणअविही सियालवहे ॥६०४॥

एव विज्जाजोए विससजुत्तस्स नावि गाहियस्स। पाणमपत्ति नियमुज्झियव वोच्छ परिट्ठवण ॥६०५॥

एगतमणावाए अचित्ते थडिले गुरुवइट्ठे। छारेण अक्कमित्ता तिट्ठाण सावण कुज्जा ॥ ६०६ ॥

जोग मविरइया—गृहस्थी दृष्टान्तः, भज्झोववण्णा—रैंवा सरूपे भिक्षौ, अनिच्छतस्तत्कर्म कर्तुं कृतयोगो भिक्षापिण्डो दत्तः, पुनश्च तस्य मार्पोर्भ्रमणानन्तरमेवाशुभभावो जातः—तदभिमुख चित्तमिति। तया च 'शङ्कया' योगकृतभिक्षाशङ्कया स निवृत्तो भिक्षापरिभ्रमणात्। शेषं सुगमम्। एवमेव विषकृतेऽपि दृष्टान्तः, गुरोः 'दत्त्वा' समर्पयित्वा कायिकीं व्युत्सृजति,

१ पनिनानि, वा दण्डिकासह, क. १। २ तं भ म° प २। ३ 'मुञ्चणा त यो वा प १। ४ सप्पे मा.।

तेन च गुरुणा गन्धादिना विज्ञाते, आदिग्रहणाद् भक्तस्स उंप्फिसणेण वा 'उज्झनं' परित्यागः क्रियते तत्र विधिना परिष्ठापनं कर्त्तव्यं नाऽविधिना, अविधिपरिष्ठापने सति शृगालादिवधो भवति । एवं विद्याभिमन्त्रितस्य योगचूर्णकृतस्य तथा विषसंयुक्तस्य गृहीतस्य सतः 'प्राणात्यये'ऽपि अत्यर्थं क्षुत्पीडायामपि सत्यां नियमेन–अवश्यन्तयोज्झनीयं ( ज्झना कार्या ) तस्य च परिष्ठापनविधिं वक्ष्ये । पूर्वार्द्धं पूर्ववत्, तद्विषादिकृतं भोजनं 'छारेण' भूत्या 'आक्रम्य' मिश्रीकृत्यं चैतेनैव परिष्ठापनीयं, तिट्ठाणं सावणं कुज्जा, सुगमम् । इदानीं 'तिट्ठाणं सावणं'ति व्याख्यायते—

**दोसेण जेण दुट्ठं तु भोयणं तस्स सावणं कुज्जा । एवं विहिए वोसट्ठे वेराओ मुच्चई साहू ॥ ६०७ ॥**

दोषेण येन–मूलकर्मादिना आधाकर्मादिना वा दुष्टं भोजनं भवति तस्य तिस्रो वाराः श्रावणं कर्त्तव्यं, यदुत मूलकर्मादिदोषैर्दुष्टमिति, एवमुत्तरगुणयोगमन्त्रविषकृतदुष्टानामपि तिस्रो वाराः श्रावणं करोति, एवं विधिना व्युत्सृष्टे सति 'वैरात्' कर्मणो मुच्यते साधुः, अथवा 'वैरात्' जन्तुवधजनितान्मुच्यते साधुरिति । आह–इदमुक्तं शुद्धाया भिक्षाया यत्परिष्ठापनं साऽजातापरिष्ठापनिका उच्यते, ततश्च—

**जावइयं उवजुंजइ तत्तिअमित्ते विगिंचणा नत्थि । तम्हा पमाणगहणं अइरेगं होज्ज उ इमेहिं ॥६०८॥**

यावन्मात्रकमेवोपयुज्यते तावन्मात्रमेव भिक्षाग्रहणं कर्त्तव्यं, यदा चैवं तदा तावन्मात्रकग्रहणे 'विगिंचनं' परिष्ठापनं

१ उप्फस° आ । २ विधिना, अविधि° आ. । ३ °त्य चैव परि° आ । ४ सुगमम् इदा° आ. । ५ एवं विहवो सट्ठे आ. । ६ उवउज्जइ आ. ।

'नास्ति' न भवति तस्मात्प्रमाणग्रहणमेव कर्त्तव्य, ततश्च कुतोऽजातायाः परिष्ठापनिका संभवति ?, अतिरेकग्रहणाभावादिति, एतच्छङ्के परेण आह सूरिः–'अहरेगं होज्ज उ इमेहिं' अतिरिक्त भक्तमपि भक्त 'एभिः वक्ष्यमाणकारणै'र्भवेत्, कानि च तानि वक्ष्यमाणकारणानीत्यत आह—

आयरिए य गिलाणे पाहुणए दुल्लहे सहसदाणे। एव होइ अजाया इमा उ गहणे विही होइ ॥६०९॥

कदाचित्कस्मिंश्चित्क्षेत्रे आचार्यप्रायोग्य दुर्लभं भवति ततश्च सर्वे एव सङ्घाटका आचार्यप्रायोग्यस्य ग्रहण कुर्वन्ति ततश्च तद् घृतादि कदाचित् सर्वे एव लभन्ते ततस्तदुद्धरति, अन्येषां च सर्वेषां पर्याप्त, एवमाचार्यार्थं गृहीतस्य शुद्धस्यापि परिष्ठापना भवतीति। तथा ग्लानार्थमप्येवमेव गृहीत सदुद्धरति, प्राघूर्णकानामप्येवमेव, तथा दुर्लभलाभे सति सर्वैरेव सङ्घाटकै गृहीतमुद्धरतीति तथा 'सहसदाणे' अप्रतर्कितदाने सति प्रचुरमुद्धरति, ततश्च एव भवति अजातापरिष्ठापनिका। तत्र चाचार्यादीनां ग्रहणेऽयं विधिः–वक्ष्यमाणो भवतीति, कथमासावित्यत आह—

जइ तरुणो निरुवहओ भुंजइ तो मंडलीइ आयरिओ। असहुस्स वीसुगहण एमेव य होइ पाहुणए॥६१०॥

केचनैव भणति–यद्यसावाचार्यस्तरुणो निरुपहतपञ्चेन्द्रियश्च ततोऽसौ मण्डल्यामेव भुङ्क्ते सामान्य, अथ असहुः–असमर्थ स्ततस्तस्य विष्वक्–पृथग् ग्रहण प्रायोग्यस्य कर्त्तव्य, एवमेव प्राघूर्णकेऽपि विधिर्द्रष्टव्यः, यदि प्राघूर्णकः समर्थस्ततो नैव

१ तत्रोऽन्येषां आ प. १ । २ प्राघूर्णे प° आ प १ २. । १ ततः कथ कथं क १-२ ।

तत्प्रायोग्यग्रहणं क्रियते, अथाऽसमर्थस्ततः क्रियत इति, केचित्पुनरेवं भणन्ति–यदुत समर्थस्याप्याचार्यस्य प्रायोग्यग्रहणं कर्त्तव्यं, यत एते गुणा भवन्ति—

**सुत्तत्थथिरीकरणं विणओ गुरुपूय सेहबहुमाणो । दाणवतिसद्धवुड्ढी बुद्धिबलवड्ढणं चेव ॥६११॥**

आचार्यस्य प्रायोग्यग्रहणेन क्रियमाणेन सूत्रार्थयोः स्थिरीकरणं कृतं भवति यतो मनोज्ञाहारेण सूत्रार्थौ सुखेनैव चिन्तयति, अत आचार्यस्य प्रायोग्यग्रहणं कर्त्तव्यं तथा विनयश्चानेन प्रकारेण प्रदर्शितो भवति, गुरुपूजा च कृता भवति, सेहस्य चाचार्यं प्रति बहुमानः प्रदर्शितो भवतीति, अन्यथाऽसौ सेह इदं चिन्तयति, यदुत न कश्चिदत्र गुरुर्नापि लघुरिति, अतो विपरिणामो भवति, तथा प्रायोग्यदानपतेश्च श्रद्धावृद्धिः कृता भवति तथा बुद्धेर्बलस्य चाचार्यसत्कस्य वर्द्धनं कृतं भवति, तत्र च महती निर्जरा भवति ।

**एएहिं कारणेहि उ केइ सहुस्सावि वयंति अणुकंपा । गुरुअणुकंपाए पुण गच्छे तित्थे य अणुकंपा ॥६१२॥**

'एभिः' पूर्वोक्तकारणैः केचित्समर्थस्याप्याचार्यस्यानुकम्पा कर्त्तव्येत्येवं वदन्ति, यतो गुरोरनुकम्पया गच्छे तीर्थे चानुकम्पा कृता भवति । यतश्चैवमतः प्रायोग्यग्रहणं गुरोः कर्त्तव्यमिति ॥ कीदृशं पुनराचार्ययोग्यं ग्राह्यमित्यत आह—

**साति लाभे पुण दव्वे खित्ते काले य भावओ चेव । गहणं तिसु उक्कोसं भावे जं जस्स अणुकूलं ॥६१३॥**

१ भवति आ । २ ग्राह्यमिति ॥ आ ल २ । ३ अत आह—आ. ल २ । ४ °कंप आ ।

'सति' विद्यमाने लाभे द्रव्यतः क्षेत्रतः कालतो भावतश्चोत्कृष्टं ग्राह्यम्। इदानीं निर्युक्तिकारो व्याख्यानयन्नाह–'गहण तिसु उक्कोसं' ग्रहणं त्रिषु द्रव्यक्षेत्रकालेषु उत्कृष्टं कर्तव्य, भावे तु यद्वस्तु यस्याचार्यस्यानुकूलं तद्गृह्यते। इदानीं भाष्य कृद्व्याख्यानयति, तत्र द्रव्योत्कृष्टतां(ए) प्रदर्शयन्नाह—

फलमोदणो उ पयसा उक्कोसो हाणि कोद्दवुकभज्जी। तत्थवि मिउतुप्पअरं जत्थ व ज अच्चिय दोसु २०७

कलमशाल्योदनः पयसा सह द्रव्यतः उत्कृष्टं प्राप्य, तदलाभे हान्या तावद् गृह्यते यावत् 'कोद्दवुकभज्जी' कोद्रवभाउलय, तत्राप्य विशेषः क्रियते यदुत तदेव आउलयं मृदु गृह्यते, तथा 'तुप्पयरं'ति स्निग्धतरं तदेव आउलयं गृह्यते, उक्तं द्रव्यो त्कृष्ट, इदानीं क्षेत्रकालोत्कृष्टप्रतिपादनायाह–'जत्थ य ज अच्चिय दोसु' द्वयोरिति–क्षेत्रकालयोर्यद्वस्तु यत्र पूजितं तत्तत्र गृह्यते, एतदुक्तं भवति–यत्र क्षेत्रे यद्बहुमतं द्रव्यं तत्तस्मिन् क्षेत्रे उत्कृष्टमुच्यते, तच्च ग्राह्यं, तथा यद्वस्तु यस्मिन् काले बहुमतं तत्तस्मिन् काले कालोत्कृष्टमुच्यते, भावोत्कृष्टं पुनर्निर्युक्तिकारेणैव व्याख्यातं। उक्तं प्रसङ्गागतम्, इदानीं यदुक्तं आचार्या दीनां गृहीत तत्प्रयोजनमिति तथा प्रतिपादयन्नाह—

लाभे सति सघाडो गेण्हइ एगो उ इहरहा सव्वे। तस्सप्पणो य पज्जत्त गिण्हणे होइ अतिरेग ॥६१४॥

यदि तस्मिन् क्षेत्रे घृतादीनां स्वभावेनैव लाभोऽस्ति ततस्तस्मिन् लाभे सति आचार्यादीनामेक एव सङ्घाटकः प्रायोग्यं

१ तत्थ जत्थ आ पा ११ २ °मुवाउ आ.। ३ तरं आ.। ४ उक्क आ.। ५ °कसेव आ. पा २।

गृह्णाति, 'इहरह'त्ति यदा तस्मिन् क्षेत्रे न प्रायोवृत्त्या प्रायोग्यस्य[1] लाभः तदा सर्व एव सङ्घाटकास्तस्याचार्यस्य प्रायोग्यं पर्याप्त्यै गृह्णन्ति, ततश्च तस्याचार्यस्यात्मनश्चार्थाय पर्याप्तग्रहणे[2] सति अतिरिक्तं भवति, ततश्च तत्परिष्ठाप्यत इति। इदानीं 'गिलाणे'त्ति व्याख्यानयन्नाह—

**गेलन्ननियमगहणं नाणत्तोभासियंपि[3] तत्थ भवे। ओभासियमुव्वरिअं विगिंचए सेसगं भुंजे ॥६१५॥**

ग्लानस्य नियमेन प्रायोग्यग्रहणं कर्त्तव्यं, यदि परं नानात्वं 'ओभासियंपि' प्रार्थितमपि तत्र ग्लाने भवति, ग्लानार्थं[4] प्रायोग्यस्य च प्रार्थनमपि क्रियते, ततश्च ओभासितं–प्रार्थितं सद् ग्लानार्थं पुनश्च यदुद्धरति ततस्तद् 'विगिच्यते' परित्यज्यते, 'सेसयं भुंजे'त्ति शेषं यदनवभासिअं–अप्रार्थितमुद्धरितं तद्भुञ्जीत कश्चित्साधुरिति। प्राघूर्णकोऽप्याचार्यवद्व्याख्यात एव द्रष्टव्यः। इदानीं दुर्लभेत्ति व्याख्यानयन्नाह—

**दुल्लहदव्वं व सिया घयाइ घेत्तूण सेस भुंजंति। थोवं देमि व गिण्हामि यत्ति सहसा भवे भरियं ॥६१६॥**

दुर्लभद्रव्यं वा स्याद्–भवेत् घृतादि तद्गृहीत्वा उपभुज्य च यत् शेषं तदुज्झति, एवं वा पारिष्ठापनिकं भवति। इदानीं 'सहसदाणे'त्ति व्याख्यानयन्नाह–'थोवं देमी'त्यादि स्तोकं दास्यामीत्येवं चिन्तयन्त्या गृहस्थया सहसा अतर्कितमेव तत् साधुभाजनं भृतं, साधुर्वा चिन्तयति स्तोकं ग्रहीष्यामीति, पुनश्चातर्कितमेव भाजनं भृतं, ततश्चैवमतिरिक्तं भवति, पुनश्च परिष्ठाप्यत इति।

---

१ प्रयोगस्य आ.। २ °प्त्या गृ° आ.। ३ °सियस्स तत्थ ल. १। ४ एतदुक्तं भवति ग्ला° पा. १–२ पु.।

एएहिं कारणेहिं गहियमजाया उ सा विगिंचणया। आलोगमि तिपुजी अद्धाणे निग्गयातीण ॥६१७॥

एभि[1] पूर्वोक्तकारणैर्गृहीत भक्तं सा 'अजातविगिंचणय'त्ति अजाता विगिंचना-परिष्ठापनोच्यते, तस्याभावातायाः माण्डालोके त्रयः पुञ्जाः क्रियन्ते, किमर्थमित्याह-'अद्धाणे निग्गयाईण' अध्वाने निर्गतास्तदर्थं त्रयः पुञ्जाः क्रियन्ते, आदिग्रहणात्कदाचित एव कारणे उत्पन्ने गृह्णन्तीति। आह—

एक्को व दो व तिन्नि व पुजा कीरति किं पुण निमित्त?। विहमाइनिग्गयाण सुव्वेयरजाणणट्ठाए ॥६१८॥

एको वा द्वौ वा त्रयो वा पुञ्जाः किं पुनर्निमित्तं क्रियन्ते?, उच्यते, 'विहमादि' विहः-पन्थास्तदर्थं निर्गतानां साधूनां उद्देशकमक्तपरिज्ञानार्थं त्रयः पुञ्जकाः क्रियन्ते, आदिग्रहणाद्वास्तव्यानामेव कदाचिदुपयुज्यते इतिकस्या परिज्ञानार्थं त्रयः पुञ्जकाः क्रियन्त इति। इय च गाथाऽनन्तरातीतगाथाया व्याख्यानभूता द्रष्टव्येति।

एव विगिंचिउ निग्गयस्स सन्ना हवेज्ज त तु कह?। निसिरेज्जा अहव धुव आहारा होइ नीहारो ॥६१९॥

'एव' उक्तेन न्यायेन परिष्ठापनार्थं निर्गतस्य यदि सञ्ज्ञा पुरीषोत्सर्जने बुद्धिर्भवेत् 'तत्कथं?' किं तत्र कर्तव्यमिति, अत आह 'निसिरेज' व्युत्सृजेत्, अथवा किमत्र प्रष्टव्यं?, ध्रुवमाहाराभीहारो भवति, ततश्च स्थण्डिले व्युत्सृजनं कर्तव्य तत्र स्थण्डिल पूर्वभणितमेव, तथा चाऽऽह—

[1] भीरिक्ष का । [2] प्रश्नेन पं० का ।

**थंडिल्ल पुव्वभणियं पढमं निद्दोस दोसु जयणाए। नवरं पुण णाणत्तं भावासन्नाए वोसिरणं ॥ ६२० ॥**

स्थण्डिलं पूर्वभणितमेव, यदुत अनापातं असंलोकं १ अनापातं ससंलोकं २ सापातमसंलोकं ३ सापातं ससंलोकं ४। अत्र प्रथमो भङ्गको निर्दोषः, द्वयोश्च द्वितीयतृतीययोर्भङ्गकयोर्यतनया व्युत्सृजति, एतत्पूर्वोक्तस्थण्डिलस्य सामान्यमेव, 'नवरं पुण णाणत्तं'ति नवरं–केवलमिदं नानात्वं, यदुतात्र मात्रासन्ने–अतिपीडायां व्युत्सृजनमनुज्ञातं, तत्र चानुज्ञा नैव कृताऽऽसीदिह च कृताऽतो नानात्वं, ततश्च चतुर्थभङ्गकासेवनमप्यनुज्ञातमेव द्रष्टव्यमिति। इदानीं भाष्यकारः पूर्वोक्तस्थण्डिलानि प्रदर्शयन्नाह—

**अणावायमसंलोयं अणावायालोय ततिय विवरीयं। आवातं संलोगं पुव्वुत्ता थंडिला चउरो ॥ ३०८ भा०**

अनापातमसंलोकं च प्रथमो भङ्ग उक्तस्तथाऽन्यदनापातमालोकं च द्वितीयं, तृतीयं पुनर्विपरीतं स्थण्डिलं–सापातमसंलोकमित्यर्थः, तथाऽन्यदापातं संलोकं च चतुर्थो भङ्गकः, एतानि पूर्वोक्तस्थण्डिलानि चत्वारि।

**अणावायमसंलोगं निद्दोसं बितियचरिम जयणाए। पउरदवकुरुकुयादी पत्तेयं मत्तगा चेव ॥ ६२१ ॥**
**तइएवि य जयणाए नाणत्तं नवरि सद्दकरणंमि। भावासन्नाए पुण नाणत्तमिणं सुणसु वोच्छं ॥ ६२२ ॥**

तत्रानापातमसंलोकं च स्थंडिलं निर्दोषं, द्वितीयतृतीयचतुर्थेषु यतनया व्युत्सर्जनं कर्त्तव्यं, का चासौ यतना ?, प्रचुर-

१ भङ्गकस्तथा° ल १–२।

त्रेष कुरुकुचादिक कर्तव्य प्रत्येक प्रत्येक च मात्रकाणि सपानकानि भवन्ति। किं सर्वेष्वेव स्थण्डिलेषु कुरुकुचैव यतना कर्तव्या उत कश्चिद्विशेषः ?, उच्यते, अस्ति विशेषः, तृतीयेऽपि स्थण्डिले यतनाया नानात्वमेतावदेव परं यतुत अन्त्र- स्ये। तत्र प्रथमस्थण्डिले गन्तव्य, अथ तथास्ति,

जदि पढम न तरेज्जा तो वितिय तस्स असइए तइय। तस्स असई चउत्थं गोमद्दारे य रत्थाए ॥ ६२३ ॥

यदि प्रथम स्थण्डिलं गन्तुं न शक्नुयात्ततो द्वितीयं व्रजेत्, 'तस्य' द्वितीयस्याभावे तृतीय व्रजेत्, 'तस्य' तृतीयस्य स्थण्डिलस्याभावे चतुर्थं स्थण्डिल व्रजेत्, यदा चतुर्थमपि स्थण्डिल गन्तु न शक्नोति तदा ग्रामद्वारे गत्वा व्युत्सृजति, यदा ग्रामद्वारमपि गन्तु न शक्नोति तदा रथ्यायामेव व्युत्सृजति ॥

साही पुरोहडे वा उवस्सए मत्तगंमि वा णिसिरे। अच्चुक्कडंमि वेगे मडलिपासंमि वोसिरइ ॥ ६२४ ॥

यदा रथ्यायामपि गन्तु न शक्नोति तदा 'साहीए' गृहपङ्क्त्यन्तरतो व्युत्सृजति, यदा गृहपङ्क्तिमपि गन्तुं न शक्नोति तदा 'पुरोहडे' अग्रद्वारे व्युत्सृजेत्, यदा पुरोहडमपि गन्तु न शक्नोति तदोपाश्रये मात्रके वा व्युत्सृजेत्, सर्वथा 'अच्चु क्कडंमि वेगे मडलिपासंमि वोसिरति' सुगमम्। इद च लोकेऽपि प्रसिद्धं, यदुत प्राप्तपुरीषादेर्वेगो न धार्यते। अत्र च कथा

१ अन्ने तारे व आ.। २ पुरत्ता मु ११। ३ गड्डियमो भत्ता मु आ। ४ गड्डियमो गन्तुं अ। ५ समर्थस्तदा आ। ६ मार्ग तदे व ता. २।

नकम्-एगो राया तस्स वेज्जो पहाणो सो य मतो, तंमि मए राइणा गवेसावियं एयस्स पुत्तो अत्थि वा न वा ? तस्स य कहियं-अत्थि एगा सुया, ताए य सयलं वेज्जयं अहीयं, हक्कारिया य[1], राइणा भणिया य-किं ते अहीयं वेज्जयं ?, सा भणइ अहीयं[3], ततो एयर्स्सि अंतरे ताए वायकम्मं कयं, ततो इयरेहिं विज्जेहिं हसियं, ततो तीए ताणं विज्जाणं राइणो य परिकहणा कया, जहा-'तिण्णि सल्ला महाराय अस्सिं देहे पइट्ठिया । वायमुत्तपुरीसाणं पत्तवेगं न धारए' ॥ १ ॥ सिलोगो सुगमो । एवं साहुणावि वेज्जाईणं परिकहणा कायव्वा । एतदेव गाथयोपसंहरन्नाह—

**राया विज्जंमि मए विज्जसुयं भणइ किं च ते अहीयं ?। अहीयंति वायकम्मे विज्जा हसणा य परिकहणा ६२५**

सुगमा ॥

**एसा परिट्ठवणविही कहिया भे धीरपुरिसपन्नत्ता । सामायारिं एत्तो वुच्छं[5] अप्पक्खरमहत्थं ॥ ६२६ ॥**

सुगमा ॥ उवरिएत्ति दारं गयं, इदानीं सामाचारी व्याख्यायते—

**सन्नातो आगतो चरमपोरिर्सि जाणिऊण ओगाढं । पडिलेहेंणमप्पत्तं[6] नाऊण करेइ सज्झायं ॥ ६२७ ॥**

एवं च साधुः सञ्ज्ञां व्युत्सृज्य आगतः पुनश्च 'चरमपौरुषीं' चतुर्थप्रहरं ज्ञात्वा 'अवगाढां' अवतीर्णं, ततः किं करोति

१ आयाया, राइणा आ । २ भणियं ?, सा आ. । ३ °यं विज्जयं, ततो आ । ४ °स्सतरे ताए आ पा. १ । ५ सेस वोच्छेअहाविहिणा ल. १ । ६ °हेइ भपत्ते नाऊण ल १ पु. ।

इत्यत आह-प्रत्युपेक्षणां करोति, अपामो चरमपौरुषी नायापि भवति भवोऽप्राप्तां चरमपौरुषीं ज्ञात्वा स्वाध्याय तावत्क रोति यावच्चतुर्था पौरुषी प्राप्ता।

पुव्वुद्दिट्ठो य विही इहपि पडिलेहणाइ सो चेव। ज एत्थ नाणत्त तमहं वोच्छ समासेण ॥ ६२८ ॥

पडिलेहगा उ दुविहा भत्तट्ठियएयरा य नायव्वा। दोण्हवि य आइपडिलेहणा उ मुहणतगसकाय ॥६२९

तत्तो गुरू परिण्णा गिलाणसेहाति जे अभत्तट्ठी। सादिसह पायमत्ते य अप्पणो पट्टग चरिम ॥ ६३० ॥

पट्टग मत्तय सयमोग्गहो य गुरुमाइया अणुन्नवणा। तो सेस भाणवत्थे पाउछणग च भत्तट्ठी ॥ ६३१ ॥

अत्र च प्रत्युपेक्षणायां प्रागुक्त एव विधिः, 'मुखवस्त्रिकादिकोऽयं प्रत्युपेक्षणा' एवमादिः, तथा पात्रस्यापि "सोया इओरउणो गच्छेमो" इत्येवमादि, इहापि स एव प्रत्युपेक्षणायां विधिर्द्रष्टव्यः, यदत्र नानात्व-योऽतिरिक्तो विधिर्भवति त विधिमहं वक्ष्ये 'समासेन' सङ्क्षेपेण, तत्र ये ते प्रत्युपेक्षकास्ते द्विविधाः-भक्तार्थिका -भुक्ताः 'एयरा य' इतरे च उपवा सिनश्च ज्ञातव्याः 'द्वयोरपि' भक्तार्थिकाऽभक्तार्थिकयोः 'आदौ' प्रथमं प्रत्युपेक्षणा तुल्या इय वेदितव्या। 'मुहणतगसकाय' प्रथम मुखवस्त्रिकां प्रत्युपेक्षन्ते ततः 'स्वकायं' निजदेहं प्रत्युपेक्षन्ते मुखवस्त्रिकयां एव, इय तावद्भक्तार्थिकाभक्तार्थिकयोस्तुल्या प्रत्युपेक्षणा। इदानीमभक्तार्थिकानां प्रत्युपेक्षणाविधिं प्रदर्शयति, अत्र 'ततः' मुखवस्त्रिकाकायप्रत्युपेक्षणानन्तरं 'गुरु'त्ति गुरोः

१ कल्प भा. गा. १-२। २ ... ३ ... ४ ... 

संबन्धिनीमुपधिं प्रत्युपेक्षन्ते, 'परिण्ण'त्ति परिज्ञा—प्रत्याख्यानम्, एतदुक्तं भवति—अनशनस्थस्य संबन्धिनीमवधिं ततः प्रत्युपेक्षन्ते, तदनन्तरं ग्लानसत्कामुपधिं प्रत्युपेक्षन्ते, तथा शैक्षकः—अभिनवप्रव्रजितः शिक्षणार्थं अर्पितः तदीयामुपधिं तस्यैवाग्रतः प्रत्युपेक्षन्ते आदिग्रहणात् वृद्धादेः संबन्धिनीमुपधिं प्रत्युपेक्षन्ते, येऽभक्तार्थिनस्ते एवमनेन क्रमेण कुर्वन्ति प्रत्युपेक्षणां, ततो गुरुं संदिशापयित्वा 'संदिसह इच्छाकारेणं ओहियं पडिलेहेमि' एवं भणित्वा 'पात्रं' पतद्ग्रहं प्रत्युपेक्षन्ते, मात्रकं चात्मीयं प्रत्युपेक्षन्ते, ततश्च सकलमुपधिं प्रत्युपेक्षन्ते तावद्यावच्चोलपट्टकश्चरमस्तमपि प्रत्युपेक्षन्ते । एम ताव अभत्तट्ठिआण पडिलेहणविही । इदानीं भुक्तानां विधिं प्रतिपादयन्नाह—मुखवस्त्रिकां प्रत्युपेक्ष्य तथैव कायं प्रत्युपेक्ष्य ततः 'पट्टगं'ति चोलपट्टगं प्रत्युपेक्षन्ते, पुनश्च गोच्छको यः पात्रकस्योपरि दीयते पच्छा पडिलेहणीयं पत्ताबंधे पडलाइं रयत्ताणं च पत्तयं चै(चे)व, यदि मत्तओ अरिक्को तो एवं, अह रिक्को [3]तो सो चेव पढमं निक्खिप्पइ, पुनश्च मात्रकं निक्षिप्य स्वकीयमवग्रहं—पतद्ग्रहं प्रत्युपेक्ष्यन्ते, ततो गुरुप्रभृतीनां सत्का उपधयः प्रत्युपेक्ष्यन्ते भक्तार्थिकैः, 'अणुण्णवण'त्ति ततो गुरुमनुज्ञापयन्ति, यदुत 'संदिसह ओहियं पडिलेहेमो'त्ति ततः शेषाणि—गच्छसाधारणानि पात्राणि वस्त्राणि च अपरिभोग्यानि यानि तानि प्रत्युपेक्षन्ते, ततः स्वकीयं पायपुञ्छणगं—रजोहरणं च प्रत्युपेक्षन्ते, भक्तार्थिका एवमनेन क्रमेण प्रत्युपेक्षणं कुर्वन्ति ॥

**जस्स जहा पडिलेहा होइ कया सो तहा पढइ साहू। परियट्टेइ व पयओ करेइ वा अन्नवावारं ॥६३२॥**

पुनश्च यस्य साधोर्यथैव प्रत्युपेक्षणा भवति 'कृता' परिनिष्ठिता स तथैव पठति परिवर्त्तयति वा—गुणयति वा पूर्वभणितं प्रयतः—

---

१ °मुपधिं प्रत्युपेक्षन्ते तथा आ पा १ । २ °मपि प्रत्यु° आ । ३ सो चेव आ. । ४ अवधिं पडि° ल १ । ५ °पेक्ष्यन्ते ल १ ।

पुप्फफलोदयरयरेणुसउणपरिहारपायरक्खट्ठा । लिंगस्स य संवरणे वेदोदयरक्खणे पडला ॥ ७०३ ॥

भस्तमिते पात्रके पुष्पं निपतति तत्संरक्षणार्थं पटलानि गृह्यन्ते, तथा फलपातरक्षणार्थमुदकपातसंरक्षणार्थं च पटलग्रहणं तथा रजः–सचित्तपृथिवीकायस्तत्संपातरक्षणार्थं च, रेणुः–धूलिस्तत्संपातसंरक्षणार्थं, शकुनपरिहारः–शकुनपुरीषं तत् कदाचि दाकाशान्निपतति तत्पातसंरक्षणार्थं, लिङ्गसंवरणार्थं लिङ्गस्थगनं च [1]तैस्तत्क्रियते, यतो वेदोदये सति तस्यैव स्तब्धता भवति तत्संरक्षणं स्थगनं तदर्थं च पटलानि भवन्तीति । इदानीं रजस्त्राणप्रमाणप्रतिपादनायाह—

माणं तु रयत्ताणे भाणपमाणेण होइ निप्फन्नं । पायाहिणं करेंतं मज्झे चउरंगुलं कमइ ॥ ७०४ ॥

'मान' प्रमाणं रजस्त्राणस्य 'भाजनप्रमाणेन' पात्रकप्रमाणेन भवति–[2]निष्पद्यते, एतदुक्तं भवति–पात्रकानुरूपं रजस्त्राणं भवति, तच्च रजस्त्राणं पात्रके [3]कथं दीयते ? अत आह–प्रदक्षिणां कुर्वाणं मध्ये तिर्यग् दीयते, 'मध्ये' मध्यप्रदेशेन चत्वार्यङ्गुलानि 'क्रामति' गच्छति प्रदक्षिणां कुर्वाणमिति । इदानीमस्यैव प्रयोजनप्रतिपादनायाह—

मूसयरयउक्केरे वासे सिण्हा रए य रक्खट्ठा । होंति गुणा रयत्ताणे पादे पादे य एक्केक्कं ॥ ७०५ ॥

तच्च रजस्त्राणं दीयते मूषिकरजउत्करसंरक्षणार्थं वर्षोदकसंरक्षणार्थं, [4]सिण्हा–अवश्यायस्तत्संरक्षणार्थं रेजः सचित्तः पृथिवीकायः तत्संरक्षणार्थं [5]भवन्ति गुणा रजस्त्राणस्यैते, तच्च पात्रे पात्रे चैकैकं भवतीति । इदानीं कल्पप्रमाणप्रमाणप्रतिपादनायाह—

[1] तैर्भवति भा पा. १ । [2] एतदु° भा., निष्पद्य एत° क. १ पा १ २ । [3] पात्रकस्य कथं भा । [4] स्नेहः–अव म २ । [5] भवन्ति भा ।

**कप्पा आयपमाणा अड्ढाइज्जा उ वित्थडा हत्था। दो चेव सोत्तिया उन्निओ य तइओ मुणेयव्वो ॥७०६॥**

कल्पा आत्मप्रमाणाः, एतदुक्तं भवति–यावन्मात्राः प्रावृताः स्कन्धे[1] प्रक्षिप्ताः तिष्ठन्ति, एतावदात्मप्रमाणमर्द्धतृतीयांस्तु विस्तृता हस्तान्, तत्र द्वौ सौत्रिकौ भवतः और्णिकश्च तृतीयो विज्ञेयः। इदानीं तत्प्रयोजनप्रतिपादनायाह—

**तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव॥ ७०७॥**

तृणग्रहणनिवारणार्थं गृह्यन्ते, अनलः–अग्निस्तत्सेवानिवारणार्थं च, एतदुक्तं भवति–कल्पाग्रहणे तृणग्रहणमग्निसेवनं च भवति, तन्निवारणार्थं कल्पग्रहणं क्रियते, तथा धर्मशुक्लध्यानार्थं कल्पग्रहणं भवति, एतदुक्तं भवति–शीतादिना बाध्यमानो धर्मशुक्लध्याने ध्यातुमसमर्थो भवति यदि कल्पग्रहणं न करोति, अत एवमर्थं[2] दृष्टं कल्पग्रहणं, तथा ग्लानसंरक्षणार्थं मरणार्थं च मृतस्योपरि दीयते कल्पः एतदर्थं च ग्रहणमिति। इदानीं रजोहरणस्वरूपप्रतिपादनायाह—

**घणं मूले थिरं मज्झे अग्गे मद्दवजुत्तया। एगंगियं अज्झुसिरं पोरायामं तिपासियं॥ ७०८॥**

मूले दण्डपर्यन्ते 'घनं' निबिडं भवति 'मध्ये' मध्यप्रदेशे स्थिरं कर्त्तव्यम् 'अग्गे' दसिकापर्यन्ते 'मार्दवयुक्तं' मृदु कर्त्तव्यम्, 'एकाङ्गिकं' तज्जातदसिक सदसिकाकम्बलीखण्डनिष्पादितमित्यर्थः। 'अज्झुसिरं' अग्गंथिला दशिका निषद्या च यस्य तदशुषिरम्, 'पोरायामं'ति अङ्गुष्ठपर्वणि प्रतिष्ठितायाः प्रदेशिन्या यावन्मात्रं शुषिरं भवति तदापूरकं कर्त्तव्यं, दण्डि[3]-

---

१ स्कन्धस्योपरि प्रक्षि° आ पा १ पु। २ कल्पान्न गृह्णाति, अत आ पा १ २ पु.। ३ दशिका° ल. १ पु.।

कापुका निपपा पया ताव माञ पूरयति तया कर्त्तव्यम्, 'त्रिपासित' त्रीणि वेष्टनानि दवरकेन दत्त्वा पासित पात्रबन्धनेन। किञ्च अमुमेव श्लोकं माष्यकारो व्याचष्टे—

अप्पोछ मिउ पेम्ह च पडिपुन्न हत्थपूरिम । रयणिप्पमाणमित्त कुज्जा पोरपरिग्गह ॥३२२॥ (भा०)

'अप्पोछ' स्वसेवनाद् घनसेवनात् कारणात्, मृदु पक्ष्म च कर्त्तव्य-मृदूनि दशिकापक्ष्माणि क्रियन्ते । 'प्रतिपूर्ण' सत् पात्रेन निपपाद्वयेन युक्त सत् हस्त पूरयति यथा तथा कर्त्तव्यम् । तथा 'रत्निप्रमाणमात्रं' यथा दण्डो हस्तप्रमाणो भवति तथा कर्त्तव्यम् । 'कुज्जा पोरपरिग्गहं'ति पोरम्-अङ्गुष्ठपर्व तस्मिन्नङ्गुष्ठपर्वणि तथा प्रदेशिन्या यद्भवति छिद्रं तद्यथा पूर्यते तेन दण्डकेन पात्रनिपपाद्वयमहितेन तथा कर्त्तव्य, एवंविध 'पोरपरिग्गह' अङ्गुष्ठपर्वप्रदेशिनीकुण्डलिकापूरण कर्त्तव्यमिति । इदानीं मप्रदायरूपस्यैव प्रमाणं प्रतिपादयन्नाह—

बत्तीसङ्गुलदीह चउवीस अङ्गुलाइ दडो से । अट्ठङ्गुला दसाओ एगयर हीणमहिय वा ॥ ७०९ ॥

द्वात्रिंशदङ्गुलानि सर्वमेव दैर्घ्येण प्रमाणतो भवति, तत्र च 'अस्य' रजोहरणस्य चतुर्विंशत्यङ्गुलानि दण्डका, अष्टाङ्गुल प्रमाणाश्च दशिका भवन्ति, 'एगयरं हीणमहिय वा' एकतरं दण्डकस्य दशिकानां वा कदाचिद्धीनं प्रमाणतो भवति कदा-

१ एतावेव गाथा भाष्यद्वयव्याख्यानवृत्ति-क १-२। २ पोर्मं प. २। ३ 'रत्नीपमाण° भा.। ४ किञ्चिदधिकं भवति तथा प १। ५ तथा अङ्गुष्ठेन प्रतिहिता या प्रदेशिनी तत्परिगृहं कुर्या क १।

चिह्नाधिकं भवति, सर्वथा समुदायतस्तद्द्वात्रिंशदङ्गुलं कर्त्तव्यम् । तच्च किम्मयं भवति ? इत्यत आह—

**उण्णियं उट्टियं वावि कंबलं पायपुच्छणं । तिपरियल्लमणीसट्ठं[1] रयहरणं धारये इक्कं ॥ ७१० ॥**

तद्रजोहरणं कदाचिदूर्णामयं भवति कदाचिच्चोष्ट्रौर्णामयं भवति कदाचित्कम्बलमयं भवति, पादपुञ्छनशब्देन रजोहरणमेव गृह्यते, तदेवंगुणं भवति, 'तिपरियल्लं'ति त्रिःपरिवर्त्त–त्रयः परावर्त्तकाः–वेष्टनानि यथा भवन्ति तथा कर्त्तव्यम्, 'अणीसट्ठं'[2]ति मृदु कर्त्तव्यं, तदेवंगुणं रजोहरणं धारयेदेकमेवेति । तेन च किं प्रयोजनमित्यत आह—

**आयाणे निक्खेवे ठाणनिसीयण तुयट्टसंकोए । पुव्वं पमज्जणट्ठा लिंगट्ठा चेव रयहरणं ॥ ७११ ॥**

आदानं–ग्रहणं तत्र प्रमार्जनार्थं रजोहरणं गृह्यते निक्षेपो–न्यासः स्थानं–कायोत्सर्गः निषीदनम्–उपविशनं तुयट्टणं–शयनं सङ्कोचनं–जानुसंदंशकादेः, एतानि पूर्वं प्रमृज्य क्रियन्ते अतः पूर्वं प्रमार्जनार्थं रजोहरणग्रहणं क्रियते । लिङ्गमिति च कृत्वा रजोहरणधारणं क्रियते इति । इदानीं मुखवस्त्रिकाप्रमाणप्रतिपादनायाह—

**चउरंगुलं विहत्थी एयं मुहणंतगस्स उ पमाणं । बितियं मुहप्पमाणं गणणपमाणेण एक्केक्कं ॥७१२॥**

चत्वार्यङ्गुलानि वितस्तिश्चेति, एतच्चतुरस्रं मुखानन्तकस्य प्रमाणम्, अथवा इदं द्वितीयं प्रमाणं, यदुत मुखप्रमाणं कर्त्तव्यं मुहणंतयं, एतदुक्तं भवति–वसतिप्रमार्जनादौ यथा मुखं प्रच्छाद्यते कृकाटिकापृष्ठतश्च यथा ग्रन्थिर्दातुं शक्यते तथा कर्त्तव्यं,

---

1 °णिस्सट्ठ आ., °णीसिट्ठं ल २ । 2 'अणिसिट्ठं' आ ।

भ्यसं कोणद्वये गृहीत्वा यथा कृकाटिकायां ग्रन्थिर्भवतु भवपते तथा कर्तव्यमिति, एतद्वितीय प्रमाण, गणनाप्रमाणेन पुन स्तदेकैकमेव मुखानन्तकं भवतीति। इदानीं तत्प्रयोजनप्रतिपादनायाह—

सपातिमरयरेणूपमज्जणट्ठा वयंति मुहपोत्तिं। नास मुहं च बधइ तीए वसहिं पमज्जतो ॥ ७१३ ॥

संपातिमसत्त्वरक्षणार्थं जल्पद्भिर्मुखे दीयते, तथा रजः–सचित्तपृथिवीकायस्तत्प्रमार्जनार्थं मुखवस्त्रिका गृह्यते, तथा रेणु प्रमार्जनार्थं मुखवस्त्रिकाग्रहणं प्रतिपादयन्ति पूर्वर्षयः। तथा नासिकां मुखं च बध्नाति तया मुखवस्त्रिकया वसतिं प्रमार्जयन् येन न मुखादौ रजः प्रविशतीति। इदानीं मात्रकप्रमाणप्रतिपादनायाह—

जो मागहओ पत्थो सविसेसतरं तु मत्तयपमाणं। दोसुवि दव्वग्गहणं वासावासासु अहिगारो ॥७१४॥

यो मागधिकः प्रस्थस्तत्सविशेषतरं मात्रकं भवति, स च मागधिकप्रस्थः दो असईओ पसई दो पसतिओ सेतिया चउसेइयाहिं कुलवो मागहओ पत्थो सो जारिसो तु पमाणेण तारिसं सविसेसतरं मत्तयं हवति। तेन च किं प्रयोजनमित्यत आह–'दोसुवि' द्वयोरपि वर्षावर्षयोर्यदाऽऽचार्यादिप्रायोग्यद्रव्य ग्रहणं क्रियते अयमधिकारस्तस्य मात्रकस्येति, इद प्रयोजन मित्यर्थः। अथवेदमन्यत्प्रमाणमुच्यते—

सूवोदणस्स भरियं दुगाउ अद्धाणमागओ साहू। भुंजइ एगट्ठाणे एयं किर मत्तयपमाणं ॥ ७१५ ॥

---

१ धति आ. ड १ २. । २ मागहो पत्थो आ । ३ "कर्णमो–कर्णाभ्यामनुपयुक्तमवोभवेत" आ. पा. २ । ४ भरिअ दु° आ ।

सूपस्य ओदनस्य च भृतं द्विगव्यूताध्वानादागतः साधुर्भुङ्क्ते यदेकस्मिन् स्थाने तदेतत् किल मात्रकस्य द्वितीयं प्रमाणमुक्तं। आह–कस्मादुक्तप्रमाणाल्लघुतरं न क्रियते ?, उच्यते, लघुतरे दोषा भवन्ति—

**संपाइमतसपाणा धूलिसरक्खे[1] य परिगलंतंमि। पुढविदगअगणिमारुयउद्धंसणखिंसणा डहरे ॥७१६॥**

अतिलघुनि मात्रके च आहारेण भृते सति यदि तदाच्छादनमुत्क्षिप्यते ततः शुषिरेण संपातिमत्रसप्राणा धूलिश्च सरजस्कः–छारः, एते[2] प्रविशन्ति, तथा परिगलमाने च तद्द्रव्यसंपातेन पृथिव्युदकाग्निमारुतानां वधः संभाव्यते, उद्धंसणो–वधो भवति, तथा 'खिंसणा' परिभवो भवतीति, यदुतानेन प्रव्रजितेन अतृप्तेनैतावद्गृहीतं येनैतद्भक्तमितश्चेतश्च विक्षिपन् प्रयातीति, ततश्च डहरके मात्रके एते दोषा यतो भवन्तीति ततः पूर्वोक्तप्रमाणयुक्तमेव ग्राह्यमिति। इदानीमाचार्यादिप्रायोग्यग्रहणनिमित्तं मात्रकस्यानुज्ञां प्रतिपादनायाह—

**आयरिए य गिलाणे पाहुणए दुल्लभे सहसदाणे। संसत्तभत्तपाणे मत्तगपरिभोगणुण्णाओ ॥७१७॥**

आचार्यप्रायोग्यग्रहणे तथा ग्लानप्राघूर्णकप्रायोग्यग्रहणे तथा दुर्लभघृतादिद्रव्यग्रहणे सहसादानग्रहणे तथा संसक्तभक्तपानग्रहणे च मात्रकस्य परिभोगोऽनुज्ञातो नान्यदेति, तस्य च मात्रकस्यानेन क्रमेण परिभोगः कर्त्तव्यः, यद्याचार्यस्य तस्मिन् क्षेत्रे ध्रुवः लम्भः प्रायोग्यस्य तदा एक एव सङ्घाटकः प्रायोग्यं गृह्णाति न सर्वे। तत्र एकस्य सङ्घाटकस्याचार्य-

1 °रिक्खे य आ ल १–२। 2 एते आ.।

प्रायोग्य गृह्णता को विधिरित्यत आह—

**एक्कमि उ पाउग्ग गुरुणो वितिओग्गहे य पडिकुट्ठ। गिण्हइ संघाडेगो धुवलंभे सेस उभयंपि ॥७१८॥**

एकस्मिन् प्रतिग्रहके प्रायोग्यं गुरोर्गृह्णाति 'बितिओग्गहे य'त्ति द्वितीयप्रतिग्रहके 'पडिकुट्ठ'त्ति प्रतिपिद्धं पर्त्तसक्कादि गृह्णाति, अथवा 'पडिकुट्ठ' विरुद्धं पत्काशिकाग्लिलादि तद्द्वितीयप्रतिग्रहके गृह्णाति एक एव सङ्घाटकः। कथा पुनरय विधिरित्यत आह–' धुवलम्भे' ध्रुवे–अवश्यम्भाविनि प्रायोग्यलाभे सत्ययं विधिः, 'सेस उभयंपि'त्ति शेषा–येऽन्ये सङ्घाट कास्ते आत्मार्थमुभयमपि–भक्त पानकं च गृह्णन्ति, एकः पानकमेकस्मिन् प्रतिग्रहके गृह्णाति द्वितीयस्मिन् भक्तं गृह्णाति, एवं सर्वेऽपि सङ्घाटका भिक्षामटन्तीति, ततमैव मात्रकग्रहणं न संजातमिति। अथ ध्रुवलम्भः प्रायोग्यस्य न तस्मिन् क्षेत्रे ततः को विधिरित्यत आह—

**असई लाभे पुण मत्तएसु सव्वे गुरूण गिण्हंति। एसेव कमो नियमा गिलाणसेहाइएसुंपि ॥७१९॥**

असति लम्भे पुनः प्रायोग्यस्य सर्व एव सङ्घाटका मात्रकेषु गुरोः प्रायोग्यं गृह्णन्ति, यतो न ज्ञायते कः 'किं लप्स्यते आहोस्वित्स्यता सर्व एव गृह्णन्ति, एष एव क्रमो 'नियमत एव ग्लानशैक्षकादिष्वपीति। अथवा—

**दुल्लभदव्व व सिया घयाइ त मत्तएसु गिण्हंति। लद्धेवि उ पज्जत्ते असयरे सेसगट्ठाए ॥ ७२० ॥**

१ 'ए व लम्भे' आ. पा १। २ 'प्रीति' आ.। ३ 'विशिष्यते' आ पा १। ४ 'गृह्णन्ति' आ.। ५ 'नियमात्' 'सि' आ। ६ 'विन्यस्य' आ।

दुर्लभं वा द्रव्यं स्याद् घृतादि तन्मात्रकेषु गृह्णन्ति। तथा लब्धेऽपि भक्ते पर्याप्तेऽपि[1] भक्ते आत्मार्थं तथाऽपि यदि न संस्तरति[2] ग्लानवृद्धादीनां ततोऽसंस्तरणे सति–न[3] सरति ग्लानादिभक्तार्थं तावत्पर्यटन्ति यावत्पर्याप्तं भक्तं ग्लानादीनां भवतीति। अथवाऽनेन प्रकारेण मात्रकग्रहणं संभवति—

**संसत्तभत्तपाणेसु वावि देसेसु मत्तए गहणं। पुव्वं तु भत्तपाणं सोहेउ छुहंति इयरेसु ॥ ७२१ ॥**

यत्र देशेषु स्वभावेनैव संसक्तभक्तपानं संसृज्यते[4], तेषु संसक्तभक्तपानेषु देशेषु सत्सु प्रथमं मात्रके ग्रहणं क्रियते, पुनश्च तत्पूर्वमेव भक्तपानं शोधयित्वा प्रक्षिपन्ति इतरेषु प्रतिग्रहकेषु, ततश्चैवं वा मात्रकग्रहणं संभवति। इदानीं चोलपट्टकप्रमाण-प्रतिपादनायाह—

**दुगुणो चउग्गुणो वा हत्था चउरंसचोलपट्टो उ। थेरजुवाणाणट्ठा सण्हे थुल्लंमि य विभासा ॥७२२॥**

द्विगुणश्चतुर्गुणो वा कृतः सन् यथा हस्तप्रमाणश्चतुरस्रश्च भवति तथा चोलपट्टकः कर्त्तव्यः, कस्यार्थमित्यत आह–'थेरजुवाणाणट्ठा' स्थविराणां यूनां चार्थाय कर्त्तव्यः, स्थविराणां द्विहस्तो यूनां च चतुर्हस्त इति भावना, 'सण्हे थुल्लंमि य विभास'त्ति, यदि परमयं विशेषः[5], यदुत स्थविराणां श्लक्ष्णोऽसावेव चोलपट्टकः क्रियते यूनां पुनः स्थूल इति। किमर्थं पुनरसौ चोलपट्टकः क्रियते ?, इत्यत आह—

१ पर्याप्ते आत्मा° आ । २ न सरति ग्ला° आ पा १–२ । ३ ग्लानवृद्धादिशेषार्थं तावत्° आ. पा. १–२ । ४ सम्भाव्यते, आ । ५ विसेसो'त्ति ल १–२ ।

वेउब्वि वाउडे वातिए हिए खद्धपजणणे चेव । तेसिं अणुग्गहत्था लिंगुदयट्ठा य पट्टो उ ॥ ७२३ ॥

यस्य साधोः प्रजननं वैक्रियं भवति विकृतमित्यर्थः, यथा दाक्षिणात्यपुरुषाणां चोपांर्धं विध्यते प्रजननं तच्च विकृतं भवति ततश्च तत्प्रच्छादनार्थमनुग्रहाय चोलपट्टकः क्रियते, तथाऽप्रावृते कश्चिद् वातिको भवति वातेन तत्प्रजननमुच्छूनं भवति ततश्च तदनुग्रहायानुज्ञातः, तथा 'ह्रीकः' लज्जालुः कश्चिद् भवति तदर्थं, तथा 'खद्ध'ति बृहत्प्रमाणं स्वभावेनैव कस्यचित्प्रजननं भवति तदर्थमेतेषामनुग्रहार्थं, तथा लिङ्गोदयार्थं च, कदाचित्स्त्रियं दृष्ट्वा लिङ्गस्योदयो भवति, अथवा तस्या एव स्त्रिया लिङ्गं दृष्ट्वा उदयः स्वलिङ्गस्य भवति–च प्रत्यभिलाषो भवतीत्यर्थः, तदर्थमेतेषामनुग्रहार्थं चोलपट्टकग्रहणमुपदिष्टमिति । उक्त ओघोपधिः, इदानीमौपग्रहिकोपधिप्रतिपादनायाह—

संथारुत्तरपट्टो अड्ढाइज्जा य आयया हत्था । दोण्हंपि य वित्थारो हत्थो चउरंगुलं चेव ॥ ७२४ ॥

संस्तारकस्तथोत्तरपट्टकश्च एतौ द्वावप्येकैकोऽर्धतृतीयहस्तौ दैर्घ्येण प्रमाणतो भवतः, तथा द्वयोरप्यनयोर्विस्तारो हस्तं चत्वारि चाङ्गुलानि भवतीति । आह–किं पुनरेभिः प्रयोजनं संस्तारकादिभिः पट्टकैः ?, उच्यते—

पाणादिरेणुसारक्खणट्ठया होंति पट्टगा चउरो । छप्पइयरक्खणट्ठा तत्थुवरिं खोमियं कुज्जा ॥ ७२५ ॥

प्राणिरेणुसंरक्षणार्थं पट्टका गृह्यन्ते, प्राणिनः पृथिव्यादयः, रेणुश्च–स्वपतः शरीरे लगति अतस्तद्रक्षणार्थं पट्टकग्रहणं,

१ वेउब्विवाउडे आ. पु. । २ वैयर्थं आ वैवार्थं पा १–२ चोपार्धं क २ ।

ते चत्वारो भवन्ति, द्वौ संस्तारकोत्तरपट्टकावुक्तावेव, तृतीयो रजोहरणबाह्यनिषद्यापट्टकः पूर्वोक्त एव, चतुर्थः क्षौमिक एवाभ्यन्तरनिषद्यापट्टको वक्ष्यमाणकः, एते चत्वारोऽपि प्राणिसंरक्षणार्थं गृह्यन्ते, तत्र षट्पदीरक्षणार्थं तस्य कम्बलीसंस्तारकस्योपरि खोमियं-संस्तारकपट्टकं कुर्याद् येन शरीरकम्बलीमयसंस्तारकसंघर्षेण षट्पदा न विराध्यन्त इति । इदानीमभ्यन्तरक्षौमनिषद्याप्रमाणप्रतिपादनायाह—

**रयहरणपट्टमेत्ता अदसागा किंचि वा समतिरेगा । एकगुणा उ निसेज्जा हत्थपमाणा सपच्छागा॥ ७२६॥**

स रजोहरणपट्टकोऽभिधीयते यत्र दशिका लग्नाः, तत्प्रमाणा 'अदशागा' दशिकारहिता क्षौमा रजोहरणाभ्यन्तरनिषद्या भवति, 'किंचि वा समतिरेग'त्ति किञ्चिन्मात्रेण वा समधिका तस्य रजोहरणपट्टकस्य भवतीति, 'एकगुण'त्ति एकैव सा निषद्या भवतीति, हस्तप्रमाणा च पृथुत्वेन भवति, 'सपच्छाग'त्ति सह बाह्यया निषद्यया हस्तप्रमाणया भवतीति, एतदुक्तं भवति बाह्याऽपि निषद्या हस्तमात्रैव ।

**वासोवग्गहिओ पुण दुगुणो उवही उ वासकप्पाई । आयासंजमहेउं एक्कगुणा सेसओ होइ ॥७२७॥**

वर्षासु—वर्षाकाले औपग्रहिकः उपधिर्द्विगुणो भवति, कश्चासौ ?—वर्षाकल्पादिः, आदिग्रहणात् पटलानि, जो जो बाहिरे हिंडंतस्स तिम्मति सो सो दुगुणो होइ, ऐको तिन्नो पुणो अन्नो घेप्पइ, स च वर्षाकल्पादिर्द्विगुणो भवति, आत्मरक्षणार्थं

१ एक्कोत्ति पुणो आ. ।

संयमरक्षणार्थं च, तत्रात्मसंरक्षण पयेकगुणा एव कल्पादयो भवन्ति ततश्च तेहिं तिभेहिं पोडुपलेणं भरति, संयमरक्खणत्थ जइ एक चेव कप्प अरमइल ओढेऊण नीहरइ तो तस्स कप्पस्स वं पाविय पडइ तिमस्स तेण माउकाओ विभासिअइ, श्वेप स्तवथिरेकगुण एव भवति न द्विगुण इति । किञ्च—

ज पुण सपमाणाओ इसिं हीणाहिय व लब्भेज्जा। उभयपि अहाकडय न सधणा तस्स छेदो वा ॥७२८॥

यत्पुनः कल्पादिरुपकरण स्वप्रमाणादीषद्धीनमधिक वा लभ्येत, तदुभयमिति—ओहियस्स उवग्गहिस्स वा यदिवा उभय तदेव हीनमधिकं वा लब्ध सत् 'अहाकडं' यथाकृतमल्पपरिकर्म यल्लभ्यते तस्य न सन्धना क्रियते हीनस्य तथा न छेदः क्रियतेऽधिकस्य । किञ्च—

दडए लट्ठिया चेव चम्मए चम्मकोसए। चम्मछेदण पट्टे चिलिमिली धारए गुरू ॥ ७२९ ॥

अयमपर औपग्रहिकोपधिः साधोः, साधोर्भाषधिर्दण्डको भवति, दण्डकश्च पश्चिम चेयष्ट्यादियष्टिश्चेति, अय सर्वेषामेव पृथक् पृथगोपग्रहिकः, अयमपरो गुरोरेवोपग्राहिकः, कश्चासौ ?—'चम्मए'त्ति चर्मकृतिः छवडिया चर्मकोषकः यस्य नहरणाई छुब्भति, तथा 'चर्मछेदनक' वध्रपट्टिका, यदि वा 'चर्मच्छेदनकं' पिप्पलकादि, तथा 'पट्टे'त्ति योगपट्टकः चिलिमिली चेति,

---

१ एतदर्थं वा पा १ २ पु. । २ बिस्तर वा पा १ । ३ एवए चडे त्ति व १ । ४ हिमे भवति पा वा. । ५ चेयष्ट्यादि' वा. पा. १-२ । ६ 'चोरप' चर्म वा पा. १-२ ।

एतानि चर्मादीनि गुरोरौपग्रहिकोऽवधिर्भवतीति ।

**जं चण्ण एवमादी तवसंजमसाहगं जइजणस्स । ओहाइरेगगहियं ओवग्गहियं वियाणाहि ॥७३०॥**

यच्चान्यद्वस्तु, एवमादि उपानहादि तपःसंयमयोः साधकं यतिजनस्य ओघोपधेरतिरिक्तं गृहीतमौपग्रहिकं तद्विजानीहि । इदानीं यदुक्तं 'यष्ट्यादि औपग्रहिकं भवति साधूनां' तत्स्वरूपं प्रतिपादनायाह—

**लट्ठी आयपमाणा विलट्ठि चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमेत्तो उ ॥७३१॥**

यष्टिरात्मप्रमाणा, वियष्टिरात्मप्रमाणाच्चतुर्भिरङ्गुलैर्न्यूना भवति, दण्डको 'बाहुप्रमाणः' स्कन्धप्रमाणः, विदण्डकः कक्षाप्रमाणोऽन्या नालिका भवति आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता, तत्थ नालियाए जलं[1] ओत्थग्घिज्जइ, लट्ठीए जवणिया बज्झइ, विलट्ठी कहंचि उवस्सयबारघट्टणी[2] होइ, दंडओ रिउबद्धे घेप्पति भिक्खं भमंतेहिं, विदंडओ वरिसाकाले घेप्पइ, जं सो लहुओ होइ कप्पस्स अब्भितरे कियओ[3] निज्जइ जेण आउक्काएण न फुसिज्जइत्ति । इदानीं यष्टिलक्षणप्रतिपादनायाह—

**एक्कपव्वं पसंसंति, दुपव्वा कलहकारिया । तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ ७३२ ॥**

**पंचपव्वा उ जा लट्ठी, पंथे कलहनिवारणी । छच्चपव्वा य आयंको सत्तपव्वा निरोगिया ॥ ७३३ ॥**

**चउरंगुलपइट्ठाणा, अट्ठंगुलसमूसिया । सत्तपव्वा उ जा लट्ठी मत्तगयनिवारिणी ॥ ७३४ ॥**

---

1 जलयाओ गिज्झइ आ. । 2 °हुयरओ होइ आ. पा. १, हुयदडओ कप्पस्स पा २ । 3 कयओ आ. ।

संयमरक्षणार्थं च, तत्रात्मसंरक्षणं यथैकगुणा एव कल्पादयो भवन्ति ततश्च तेहिं तिमेहिं पोट्टपत्तेण भरति, संयमरक्खणत्थं मइ एक्क चेव कप्प अइमइल ओदेऊण नीहरइ तो तस्स कप्पस्स ण पाणिय पडइ तिमस्स तेण आउक्काओ विणासिजइ, शेषं स्वपरिकर्मगुण एव भवति न द्विगुण इति। किञ्च—

जं पुण सपमाणाओ इसिं हीणाहिय व लब्भेजा। उभयपि अहाकडय न सधणा तस्स छेदो वा ॥७२८॥

यत्पुनः कल्पादिकपकरणं स्वप्रमाणादीषद्धीनमधिकं वा लभ्येत, तदुभयमिति–ओहियस्स उवग्गहियस्स वा यदिवा उभयं तदेव हीनमधिकं वा लब्धं सद् 'यथाकृतं' यथाकृतमल्पपरिकर्म यल्लभ्यते तस्य न सन्धना क्रियते हीनस्य तथा न छेदः क्रियतेऽधिकस्य। किञ्च—

दंडए लट्ठिया चेव चम्मए चम्मकोसए। चम्मछेदण पट्टे चिलिमिली धारए गुरू ॥ ७२९ ॥

अयमपर औपग्रहिकोपधिः साधोः, साधोभावधिर्दण्डको भवति, दण्डकश्च यष्टिश्च वैशब्दाद्वियष्टिश्चेति, अयं सर्वेषामेव छन्मति, तथा 'चर्मछेदनकं' चम्रपट्टिका, यदि वा 'चर्मच्छेदनकं' पिप्पलकादि, तथा 'पट्टे'त्ति योगपट्टकः चिलिमिली चेति, पृथक् पृथगौपग्रहिकः, अयमपरो गुरोरेवौपग्रहिकः, कश्चासौ ?–'चम्मए'त्ति चर्मकृतिः छवडिया चर्मकोशकः यस्य नहरणाई

१ एकमर्थं आ. पा १ २ पु. । २ विभस्स आ पा १ । ३ कमए वत्ते चि क १ । ४ हिमे भवति पा आ । ५ वैशब्दावि° आ पा १-२ । ६ °धीनर' वर्षस' आ पा. १-२ ।

एतानि चर्मादीनि गुरोरौपग्रहिकोऽवधिर्भवतीति ।

**जं चण्ण एवमादी तवसंजमसाहगं जइजणस्स । ओहाइरेगगहियं ओवग्गहियं वियाणाहि ॥७३०॥**

यच्चान्यद्वस्तु, एवंमादि उपानहादि तपःसंयमयोः साधकं यतिजनस्य ओघोपधेरतिरिक्तं गृहीतमौपग्रहिकं तद्विजानीहि । इदानीं यदुक्त 'यष्ट्यादि औपग्रहिकं भवति साधूनां' तत्स्वरूपं प्रतिपादनायाह—

**लट्ठी आयपमाणा विलट्ठि चउरंगुलेण परिहीणा । दंडो बाहुपमाणो विदंडओ कक्खमेत्तो उ ॥७३१॥**

यष्टिरात्मप्रमाणा, वियष्टिरात्मप्रमाणाच्चतुर्भिरङ्गुलैर्न्यूना भवति, दण्डको 'बाहुप्रमाणः' स्कन्धप्रमाणः, विदण्डकः कक्षाप्रमाणोऽन्या नालिका भवति आत्मप्रमाणाच्चतुर्भिरङ्गुलैरतिरिक्ता, तत्थ[1] नालियाए जलं ओत्थग्घिज्जइ, लट्ठीए जवणिया बज्झइ, विलट्ठी कहंचि उवस्सयबारघट्टणी होइ, दंडओ रिउबद्धे घेप्पति भिक्खं भमंतेहिं, विदंडओ वरिसाकाले घेप्पइ, जं सो लहुओ[2] होइ कप्पस्स अब्भितरे किंयओ[3] निज्जइ जेण आउकाएण न फुसिज्जईत्ति । इदानीं यष्टिलक्षणप्रतिपादनायाह—

**एक्कपव्वं पसंसंति, दुपव्वा कलहकारिया । तिपव्वा लाभसंपन्ना, चउपव्वा मारणंतिया ॥ ७३२ ॥**

**पंचपव्वा उ जा लट्ठी, पंथे कलहनिवारणी । छच्चपव्वा य आयंको सत्तपव्वा निरोगिया ॥ ७३३ ॥**

**चउरंगुलपइट्ठाणा, अट्ठंगुलसमूसिया । सत्तपव्वा उ जा लट्ठी मत्तगयनिवारिणी ॥ ७३४ ॥**

१ जलयाओ गिज्झइ आ । २ °हुयरओ होइ आ पा १, हुयदडओ कप्पस्स पा २ । ३ कयओ आ. ।

अट्ठपवा असपची, नवपवा जसकारिया। दसपवा उ जा लट्ठी, तहिय सबसपया॥ ७३५ ॥
चका कीडक्खइया चित्तलिया पोल्लडा य दड्ढा य। लट्ठी य उब्भसुक्का वज्जेयवा पयत्तेण ॥ ७३६ ॥
विसमेसु य पवेसु अनिप्फन्नेसु अच्छिसु। फुडिया फरुसवन्ना य निस्सारा चेव निंदिया ॥ ७३७ ॥
तणूई पवमज्झेसु, थूला पोरेसु गठिला। अथिरा असारजरढा साणपाया य निंदिया ॥ ७३८ ॥
घणवद्धमाणपवा निद्धा वन्नेण एगवन्ना य। घणमसिणवट्टपोरा लट्ठि पसत्था जइजणस्स ॥ ७३९॥

यस्यार्धाङ्गुलान्यधः प्रतिष्ठानं यस्या यष्टेः सा तथोच्यते, अष्टौ अङ्गुलानि पर्वोपरि उच्छ्रिता या सा अष्टाङ्गुलोच्छ्रिता। शेषं सुगमं। विषमेषु पर्वसु सत्सु यष्टिर्न ग्राह्या, एतदुक्तं भवति–एकं पर्व लघुप्रमाणं पुनर्दीर्घप्रमाणं पुनर्लघु पुनर्दीर्घ-मिस्येव या विषमपर्वा सा न शस्ता, तथाऽनिष्पन्नानि चाक्षीणि–बीजप्रदेशस्थानानि यस्याः सा निन्दिता, तथा स्फुटिता 'परुषवर्णा' रूक्षवर्णेत्यर्थः, तथा 'निःसारा' प्रधानगर्भरहितेत्यर्थः सेत्थंविधा निन्दितेति। तथैव च निन्दिता–तन्वी पर्वमध्येषु पोरमध्येषु च 'स्थूला' ग्रन्थियुक्ता, तथा 'अस्थिरा' अदृढा, तथा 'असारजरढा' अकालवृद्धेत्यर्थः, तथा 'श्वपादा' च अधः श्वपादरूपा वर्तुला या यष्टिः सा निन्दितेति। इयं च प्रशस्ता घनानि वर्धमानानि च पर्वाणि यस्याः सा तथोच्यते, एवंविधा तथा स्निग्धा वर्णेन एकवर्णा च, तथा घनानि–निबिडानि मसृणानि वर्तुलानि च पोराणि यस्याः सा

१ विनमया आ. । २ सम्भूता आ. पा १ पु. । ३ अत्यर्थेन १-२ । ४ पर्वो आ. । ५ मध्ये च आ. । ६ घनानि आ पा १ । ७ तथा च पा. १ ।

तथोच्यते, एवंविधा यष्टिर्यतिजनस्य प्रशस्तेति । आह–किं पुनरनया कारणम् ?, उच्यते—

**दुट्ठपसुसाणसावयविंज्जलविसमेसु उदगमंज्झेसु। लट्ठी सरीररक्खा तवसंजमसांहिया भणिया ॥७४०॥**

दुष्टाश्च ते पशवश्च श्वानश्च श्वापदाश्च तेषां संरक्षणार्थं यष्टिर्गृह्यते, तथा 'विंज्जलः' सकर्दमः प्रदेशः तथा विषमेषु रक्षार्थं, तथोदकमध्येषु च रक्षार्थं यष्टिग्रहणं क्रियते, तथा तपसः संयमस्य च साधिका यष्टिर्भणितेति । कथं तपःसंयमसाधिका ? इत्यत आह–

**मोक्खट्ठा नाणाई तणू तयट्ठा तयट्ठिया लट्ठी । दिट्ठो जहोवयारो कारणतक्कारणेसु तहा ॥ ७४१ ॥**

मोक्षार्थं ज्ञानादीनि इष्यन्ते, ज्ञानादीनां चार्थाय तनुः–शरीरमिष्यते, तदर्था च यष्टिः शरीरार्था यष्टिरित्यर्थः यतः शरीरं यष्ट्याद्युपकरणेन प्रतिपाल्यते, अत्र च कारणतत्कारणेषूपचारो दृष्टो यथा घृतं वर्षति अन्तरिक्षमिति, एवं मोक्षस्य ज्ञानादीनि कारणानि ज्ञानादीनां च तनुः कारणं शरीरस्य च यष्टिरिति । किञ्च–न केवलं ज्ञानादीनां यष्टिरुपकरणं वर्त्तते, अन्यदपि यज्ज्ञानादीनामुपकरोति तदेवोपकरणमुच्यते, एतदेवाह—

**जं जुज्जइ उवगारे उवगरणं तं सि होइ उवगरणं। अतिरेगं अहिगरणं अज तो अजयं परिहरंतो ॥७४२॥**

यदुपकरणं पात्रकादि उपकारे ज्ञानादीनामुपयुज्यते तदेवोपकरणं 'से' तस्य साधोर्भवति, यत्पुनरतिरेकं–ज्ञानादीनामुप-

१ °चिक्खलविस° आ. । २ °मग्गेसु ल १ । ३ °साहणी ल १–२ । ४ °चिक्खल.' आ । ५ °रार्थेत्यर्थ. शरीरं यत यष्ट्या° आ पा १–२ पु. । ६ उवकरणे उवगरणं आ. ।

काराय न भवति तस्मर्वमधिकरण भवति, किं विशिष्टस्य सतः ?—'अयतः' अयत्नवान् 'अयतं' अयत्नतया 'परिहरन्' प्रतिसेवमानस्तदुपकरणमधिकरण भवतीति। 'परिहरंतो'त्ति इय सामयिकी परिभाषा प्रतिसेवनार्थे वर्तत इति। किञ्च—

उग्गमउप्पायणासुद्ध एसणादोसवज्जिय। उवहिं धारए भिक्खू, पगासपडिलेहण ॥ ७४३ ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिय। उवहिं धारए भिक्खू, जोगाण साहणट्ठया ॥ ७४४ ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिय। उवहिं धारए भिक्खू, अप्पदुट्ठो अमुच्छिओ ॥ ७४५ ॥

उग्गमउप्पायणासुद्ध एसणादोसवज्जिय। उवहिं धारए भिक्खू, सदा अज्झत्थसोहिए ॥ ७४६ ॥

अज्झत्थविसोहीए उवगरण बाहिर परिहरतो। अप्परिग्गहीत्ति भणिओ जिणेहिं तेलुक्कदंसीहिं ॥७४७॥

एवंगुणविशिष्टामुपधिं धारयेद्भिक्षुः, किंविशिष्टामित्यत आह—'पगासपडिलेहणं' प्रकाशे—प्रकटप्रदेशे प्रत्युपेक्षण क्रियते यस्या उपधेस्तामेवगुणविशिष्टामुपधिं धारयेत्, एतदुक्तं भवति—यस्याः प्रकटमेव कल्पाद्युपधेः प्रत्युपेक्षणा क्रियते न तु महार्घमौरभयादभ्यन्तरे या क्रियते सा तादृशी उपधिर्धारणीयेति। सुगमा, नवरं योगाः—संयमात्मका गृह्यन्ते तेषां साधनार्थमिति। सुगमा, नवरं अप्रद्विष्टः अमूर्च्छितश्च सन् धारयेत् साधुरिति। सुगमा, नवरम्—अध्यात्मविशुद्धया हेतुभूतया

१ यतः 'अयतं' ख. १ २. । २ धरन् भव° आ. । ३ ता धातु° आ. ।

धारयेत् । किञ्च–अध्यात्मविशुद्ध्या उपकरणं बाह्यं–पात्रकादि 'परिहरंतो' प्रतिसेवयन्नपरिग्रहिको भणितो जिनैस्त्रैलोक्यदर्शिभिः अतो यत्किञ्चिद्धर्मोपकरणं तत्परिग्रहो न भवति । अत्राह कश्चिद् बोटिकपक्षपाती–यद्युपकरणसहिता अपि निर्ग्रन्था उच्यन्ते एवं तर्हि गृहस्था अपि निर्ग्रन्थाः, यतस्तेऽपि उपकरणसहिता वर्त्तन्ते, अत्रोच्यते—

**अज्झप्पविसोहीए जीवनिकाएहिं संथडे लोए । देसियमहिंसगत्तं जिणेहिं तेलोक्कदंसीहिं ॥ ७४८ ॥**

नन्विदमुक्तमेव यदुताध्यात्मविशुद्ध्या सत्युपकरणे निर्ग्रन्थाः साधवः, किञ्च यद्यध्यात्मविशुद्धिर्नेष्यते ततः 'जीवनिकाएहिं संथडे लोए'त्ति जीवनिकायैः' जीवसङ्घातैरयं लोकः संस्तृतो वर्त्तते, ततश्च जीवनिकायसंस्तृते व्याप्ते लोके कथं नग्नकश्चङ्क्रमन् वधको न भवति यद्यध्यात्मविशुद्धिर्नेष्यते, तस्मादध्यात्मविशुद्ध्या देशितमहिंसकत्वं जिनैस्त्रैलोक्यदर्शिभिरिति । क्व प्रदर्शितं तदित्यत आह—

**उच्चालियंमि पाए ईरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ ७४९ ॥**
**न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए । अणवज्जोउ पओगेण सव्वभावेण सो जम्हा ॥७५०॥**

'उच्चालिते' उत्पाटिते पादे सति ईर्यासमितस्य साधोः सङ्क्रमार्थमुत्पाटिते पादे इत्यत्र संबन्धः, व्यापद्येत संघट्टनपरितापनैः, कः ?–'कुलिङ्गी' कुत्सितानि लिङ्गानि–इन्द्रियाणि यस्यासौ कुलिङ्गी–द्वीन्द्रियादिः, स परिताप्येत उत्पाटिते पादे सति,

१ उपकरणं आ । २ °ग्रहो भ° आ पा १ २ पु । ३ °त्यवि° पा १ पु । ४ °ट्टनादिना परिताप्येत, क ल. १ ।

कारण न भवति तत्सर्वमधिकरणं भवति, किं विशिष्टस्य सतः ?—'अयतः' अयत्नवान् 'अयत' अयतनया 'परिहरन्' प्रतिसेवमानस्तदुपकरणमधिकरणं भवतीति। 'परिहरंतो'त्ति इयं सामयिकी परिभाषा प्रतिसेवनार्थे वर्तत इति। किञ्च—

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, पगासपडिलेहणं ॥ ७४३ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, जोगाणं साहणट्ठया ॥ ७४४ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, अप्पदुट्ठो अमुच्छिओ ॥ ७४५ ॥

उग्गमउप्पायणासुद्धं एसणादोसवज्जियं। उवहिं धारए भिक्खू, सदा अज्झत्थसोहिए ॥ ७४६ ॥

अज्झत्थविसोहीए उवगरणं बाहिरं परिहरंतो। अप्परिग्गहीत्ति भणिओ जिणेहिं तेलुक्कदंसीहिं ॥७४७॥

एवंगुणविशिष्टामुपधिं धारयेद्भिक्षुः, किंविशिष्टामित्यत आह—'पगासपडिलेहणं' प्रकाशे—प्रकटप्रदेशे प्रत्युपेक्षणं क्रियते यस्या उपधेस्तामेवगुणविशिष्टामुपधिं धारयेत्, एतदुक्तं भवति—यस्याः प्रकटमेव कस्याश्चुपधेः प्रत्युपेक्षणा क्रियते न तु महार्घचौरभयादभ्यन्तरे या क्रियते मा तादृशी उपधिर्धारणीयेति। सुगमा, नवरं योगाः—संयमाख्या गृह्यन्ते तेषां साधनार्थमिति। सुगमा, नवरं अप्रदिष्टः अमूर्च्छितश्च सन् धारयेत् साधुरिति। सुगमा, नवरम्—अध्यात्मविशुद्धया हेतुभूतया

१ स 'अर्थ' स. १. २. । २ धरन्तं धरे' आ. । ३ ता वाड' आ.।

धारयेत् । किञ्च–अध्यात्मविशुद्ध्या[1] उपकरणं बाह्यं–पात्रकादि 'परिहरंतो' प्रतिसेवयन्नपरिग्रहिको[2] भणितो जिनैस्त्रैलोक्यदर्शिभिः अतो यत्किञ्चिद्धर्मोपकरणं तत्परिग्रहो न भवति । अत्राह कश्चिद् बोटिकपक्षपाती–यद्युपकरणसहिता अपि निर्ग्रन्था उच्यन्ते एवं तर्हि गृहस्था अपि निर्ग्रन्थाः, यतस्तेऽपि उपकरणसहिता वर्त्तन्ते, अत्रोच्यते—

**अज्झप्पविसोहीए[3] जीवनिकाएहिं संथडे लोए । देसियमहिंसगत्तं जिणेहिं तेलोक्कदंसीहिं ॥ ७४८ ॥**

नन्विदमुक्तमेव यदुताध्यात्मविशुद्ध्या सत्युपकरणे निर्ग्रन्थाः साधवः, किञ्च यद्यध्यात्मविशुद्धिर्नेष्यते ततः 'जीवनिकाएहिं संथडे लोए'त्ति जीवनिकायैः' जीवसङ्घातैरयं लोकः संस्तृतो वर्त्तते, ततश्च जीवनिकायसंस्तृते व्याप्ते लोके कथं नग्नकश्चङ्क्रमन् वधको न भवति यद्यध्यात्मविशुद्धिर्नेष्यते, तस्मादध्यात्मविशुद्ध्या देशितमहिंसकत्वं जिनैस्त्रैलोक्यदर्शिभिरिति । क्व प्रदर्शितं तदित्यत आह—

**उच्चालियंमि पाए ईरियासमियस्स संकमट्ठाए । वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥ ७४९ ॥**
**न य तस्स तन्निमित्तो बंधो सुहुमोवि देसिओ समए । अणवज्जोउ पओगेण सव्वभावेण सो जम्हा ॥७५०॥**

'उच्चालिते' उत्पाटिते पादे सति ईर्यासमितस्य साधोः सङ्क्रमार्थमुत्पाटिते पादे इत्यत्र संबन्धः, व्यापद्येत संघट्टनपरितापनैः[4], कः ?–'कुलिङ्गी' कुत्सितानि लिङ्गानि–इन्द्रियाणि यस्यासौ कुलिङ्गी–द्वीन्द्रियादिः, स परिताप्येत उत्पाटिते पादे सति,

१ उपकरणं आ । २ °ग्रहो भ° आ पा १ २ पु । ३ °त्थवि° पा १ पु । ४ °ट्टनादिना परिताप्येत, क ल. १ ।

म्रियते पाण्मी कुलिङ्गी, 'तं' व्यापादनयोगम् 'आसाद्य' प्राप्य । न च तस्य तन्निमित्तो व्यापादननिमित्तो बन्धः सूक्ष्मो अपि देशितः 'समये' सिद्धान्ते, किं कारणं ? यतोऽनघोऽसौ साधुस्तेन 'व्यापादनप्रयोगेण' व्यापादनव्यापारेण, कथं ?– 'सर्वभावेन' सर्वात्मना मनोवाक्कायकर्मभिर्निन्द्योऽसौ यस्मात्तस्माच्च सूक्ष्मोऽपि बन्धस्तस्येति । किञ्च–

नाणी कम्मस्स खयट्ठमुट्ठिओऽणुट्ठिओ य हिंसाए । जयइ असढं अहिंसत्थमुट्ठिओ अवहओ सो उ ॥
तस्स असंचेअयओ संचेययतो य जाइं सत्ताइं । जोगं पप्प विणस्संति नत्थि हिंसाफलं तस्स ॥७५२॥
जो य पमत्तो पुरिसो तस्स य जोगं पडुच्च जे सत्ता । वावज्जंते नियमा तेसिं सो हिंसओ होइ ॥७५३॥
जेवि न वावज्जंती नियमा तेसिंपि हिंसओ सो उ । सावज्जो उ पओगेण सव्वभावओ सो जम्हा ॥७५४॥

ज्ञानमस्यास्तीति ज्ञानी–सम्यग्ज्ञानयुक्त इत्यर्थः, कर्मणः क्षयार्थं चोत्थित उद्यत इत्यर्थः, तथा हिंसायामनवस्थितः प्राणिव्यपरोपणे न व्यवस्थित इत्यर्थः, तथा यतते कर्मक्षपणे प्रयत्नं करोतीत्यर्थः, 'असढं'ति शठभावरहितो यत्नं करोति, न पुनर्मिथ्याभावेन, सम्यग्ज्ञानयुक्त इत्यर्थः । तथा 'अहिंसत्थमुट्ठिओ'त्ति अहिंसार्थं 'उत्थितः' उद्युक्तः किन्तु सहसा कथमपि प्रयत्न कुर्वतोऽपि प्राणिवधः संजातः स एवंविधः अवधक एव साधुरिति । तत्रानया गाथया भङ्गका अष्टौ सूचितास्तद्यथा– नाणी कम्मस्स खयट्ठ उट्ठिओ हिंसाए अणुट्ठिओ १, नाणी कम्मक्खयट्ठुट्ठिओ हिंसाए य ठिओ २, नाणी कम्मस्स खयट्ठं

१ कथा आ । २ 'लत्थं' आ० । ३ 'ओत्ते' नो ।

णवि ठिओ हिंसाए पुण पमत्तोऽवि नवि ठिओ, देवजोगेण कहवि तप्पएसे पाणिणो नासी, एस तइओ असुद्धो य ३, नाणी कम्मस्स खयट्ठं नो ठिओ हिंसाए य ठिओ ४, तथा अन्नानी मिथ्याज्ञानयुक्त इत्यर्थः कम्मस्स खयट्ठमुट्ठिओ हिंसाए न ठिओ ५, अन्नाणी कम्मखयट्ठमुट्ठिओ हिंसाए य ठिओ ६, अन्नाणी कम्मस्स खयट्ठं नोट्ठिओ हिंसाए य णोट्ठिओ एस सत्तमो, अन्नाणी कम्मस्स खयट्ठं णोट्ठिओ हिंसाए य ठिओ एस अट्ठमो, तत्र गाथाप्रथमार्द्धेन शुद्धः प्रथमो भङ्गकः कथितः, पश्चार्द्धेन च द्वितीयभङ्गकः सूचितः, कथं ?, जयतित्ति कर्मक्षपण उद्यतः, 'अमढं'ति सम्यग्ज्ञानसंपन्नः 'अहिंसत्थमुट्ठिओ'त्ति अहिंसायां 'उत्थितः, अभ्युद्यतः, किंतु सहसा प्रयत्नं कुर्वतोऽपि प्राणिवधः संजातः स चैवंविधोऽवधकः शुद्धभावत्वात्। स्थापना चेयं–'तस्य एवंप्रकारस्य ज्ञानिनः कर्मक्षयार्थमभ्युद्यतस्य 'असंचेतयतः' अजानानस्य, किं ?, सत्त्वानि, कथं ?– प्रयत्नवतोऽपि कथमपि न दृष्टः प्राणी व्यापादितश्च, तथा 'संचेतयतः' जानानस्य कथमस्त्यत्र प्राणी ज्ञातो दृष्टश्च न च प्रयत्नं कुर्वतोऽपि रक्षितुं पारितः, ततश्च तस्यैवंविधस्य यानि सत्त्वानि 'योगं' कायादि प्राप्य विनश्यन्ति तत्र नास्ति तस्य साधोर्हिंसाफलं–साम्परायिकं संसारजननं दुःखजननमित्यर्थः, यदि परमीर्याप्रत्ययं कर्म भवति, तच्चैकस्मिन् समये बद्धमन्यस्मिन् समये क्षपयति। यश्च प्रमत्तः पुरुषस्तस्यैवंविधस्य संबन्धिनं 'योगं' कायादिकं 'प्रतीत्य' प्राप्य ये सत्त्वा व्यापाद्यन्ते 'तेषां' सत्त्वानां 'नियमाद्' अवश्यं 'सः' पुरुषो हिंसको भवति तस्मात्प्रमत्ताज्जनितानि कर्मबन्धकारणानि। येऽपि सत्त्वा न व्यापाद्यन्ते तेषामप्यसौ नियमाद्धिंसको भवति, कथं ?,

| |
|---|
| III |
| IIS |
| ISI |
| ISS |
| SSI |
| SIS |
| SII |
| SSS |

१ °भाजि कर्म° आ। २ °सक, कथं ?, आ।

'प्रमत्तो उ पयोगेण' महावधेन वर्तत इति सावद्यः–सपाप इत्यर्थः, ततश्च भावतो यतः 'प्रयोगेण' कायादिना 'सर्वभावेन' सर्वैः कायवाङ्मनोभिः, अत अव्यापादयन्नपि व्यापादक एवासौ पुरुषः सपापयोगत्वादिति । यतश्चैवमतः—

आया चेव अहिंसा आया हिंसत्ति निच्छओ एसो। जो होइ अप्पमत्तो अहिंसओ हिंसओ इयरो॥७५५॥

आत्मैवाहिंसा आत्मैव हिंसा इत्येष निश्चयः परमार्थ इत्यर्थः । कश्चासावहिंसकः कश्च वा हिंसकः ? इत्यत आह–'जो होइ' इत्यादि, यो भवति 'अप्रमत्तः' प्रयत्नवानित्यर्थः स एवंविधोऽहिंसको भवति, 'हिंसओ इयरो'त्ति 'इतरः' प्रमत्तो यः स हिंसको भवतीत्येष परमार्थः । अथवाऽनेनाभिप्रायेणेयं गाथा व्याख्यायते, तत्र नैगमस्य जीवेष्वजीवेषु च हिंसा, तथा च चकारो लोके दृष्टः, यदुत जीवोऽनेन हिंसितो–विनाशितः, तथा घटोऽनेन हिंसितो–विनाशितः, ततश्च सर्वत्र हिंसाशब्दा नुगमात् जीवेष्वजीवेषु च हिंसा नैगमस्य, अहिंसाप्येवमेवेति, संग्रहव्यवहारयोः षट्सु जीवनिकायेषु हिंसा, संग्रहश्चात्र देश ग्राही द्रष्टव्यः सामान्यरूपश्च नैगमान्तर्भावी, व्यवहारश्च स्थूलविशेषग्राही लोकव्यवहारपरश्चैवमाह तथा चाह–लोको बाहुल्येन षट्स्वेव जीवनिकायेषु हिंसामिच्छतीति, ऋजुसूत्रश्च प्रत्येक प्रत्येक जीवे जीवे हिंसां व्यतिरिक्तामिच्छतीति, शब्दसमभिरू ढैवम्भूताश्च नया आत्मैवाहिंसा आत्मैव हिंसेच्छन्ति, एतदभिप्रायेणैवाह–'आया चेव' इत्यादि आत्मैवाहिंसा इत्येष निश्चय मयाभिप्रायः, कुतः ?, यो भवत्यप्रमत्तो जीवः स खल्वहिंसकः, इतरश्च प्रमत्तः, ततश्च स एव हिंसको भवति, तस्मादात्मैवाहिंसा आत्मैव हिंसा, अयं निश्चयः–परमार्थ इति । इदानीं प्रकारान्तरेण तथाविधपरिणामविशेषात् हिंसाविशेषं प्रतिपादयन्नाह—

१ सर्वथा का. । २ हिंसिते, ख का. प. १ २. ङ. । ३ सर्वेणं का प २. २ घु. ।

विसेसो मंहं वुत्तो ॥७५६॥

जो य पओगं जुंजइ हिंसत्थं जो य अन्नभावेणं। अमणो य जो पउंजइ इत्थ विसेसो महं वुत्तो ॥७५६॥

हिंसत्थं जुंजंतो सुमहं दोसो अणंतरं इयरो। अमणो य अप्पदोसो जोगनिमित्तं च विन्नेओ ॥ ७५७ ॥

रत्तो वा दुट्ठो वा मूढो वा जं पउंजइ पओगं। हिंसावि तत्थ जायइ तम्हा सो हिंसओ होइ ॥ ७५८ ॥

न य हिंसामित्तेणं सावज्जेणावि हिंसओ होइ। सुद्धस्स उ संपत्ती अफला भणिया[3] जिणवरेहिं ॥७५९॥

यश्च जीवप्रयोगं मनोवाक्कायकर्मभिर्हिंसार्थं युनक्ति–प्रयुङ्क्ते यश्चान्यभावेन, एतदुक्तं भवति–लक्ष्यवेधनार्थं काण्डं क्षिप्तं यावताऽन्यस्य मृगादेर्लग्नं, ततश्चान्यभावेन यः प्रयोगं प्रयुङ्क्ते तस्यानन्तरोक्तात्[4] पुरुषविशेषात् महान् विशेषः। तथा 'अमनस्कश्च' मनोरहितः–संमूर्च्छन[6] इत्यर्थः स च यं प्रयोगं कायादिकं प्रयुङ्क्ते, अत्र विशेषो महानुक्तः, एतदुक्तं भवति–यो जीवो मनोवाक्कायकर्मभिर्हिंसार्थं प्रयोगं प्रयुङ्क्ते तस्य महान् कर्मबन्धो भवति, यश्चान्यभावेन प्रयुङ्क्ते तस्याल्पतरः कर्मबन्धः, यश्चामनस्कः प्रयोगं प्रयुङ्क्ते तस्याल्पतमः कर्मबन्धः, ततश्चात्र विशेषो महान् दृष्ट इति। एतदेव व्याख्यानयन्नाह–हिंसार्थं प्रयोगं प्रयुञ्जतः सुमहान् दोषो भवति; इतरश्च योऽन्यभावेन प्रयुङ्क्ते तस्य मन्दतरो दोषो भवत्यल्पतर इत्यर्थः, तथा 'अमनस्कश्च' संमूर्च्छनप्रयोगं[11] युञ्जन् अल्पतमदोषो भवति। अतो 'योगनिमित्तं' योगकारणिकः कर्मबन्धो विज्ञेय इति। किञ्च–'रक्तः'

---

१ अहं ल १ २। २ द्विहो ल १। ३ जं देसिया समये पा १। ४ °क्तेन पुरु° आ पा. १–२ पु.। ५ °षेण सह म° आ पा. १–२ पु.। ६ °न इत्य° आ पा १। ७ °मैर्हिंसा° आ पा १–२ पु.। ८ °श्चार्थ° आ.। ९ भवन्तरो पा. १–२ पु.। १० °रतः प्रयो° आ. पा. १।

६४ ॥' ति 'आगमिस्सेण'ति आगमिष्यता कालेन 'आगमेस्साण'ति पाठान्तरे आगमिष्यतां भविष्यतां मध्ये सेत्स्यन्ति ॥६५॥' त्ति जंबूद्वीपैरवते अस्यामवसर्पिण्यां चतुर्विंशतिस्तीर्थकरा अभूवन्, तांश्च स्तुतिद्वारेणाह-तद्यथा-चंदाणणं गाहा० 'चन्द्राननं सुचन्द्रं अग्निसेनं च नन्दिसेनं च, क्वचिदात्मसेनोऽप्ययं दृश्यते, ऋषिदिन्नं व्रतधारिणं च वन्दामहे श्यामचन्द्रं च ॥ ६६ ॥ 'वन्दामि' गाहा, वन्दे युक्तिसेनं क्वचिदयं दीर्घबाहुर्दीर्घसेनो वोच्यते, अजितसेनं क्वचिदयं शतायुरुच्यते, तथैव शिवसेनं क्वचिदयं सत्यसेनोऽभिधीयते, सत्यकिरेति पुनः चावगतत्वस्य च देवशर्माणं देवसेनापरनामकं सततं सदा वदे इति प्रकृतं निक्षिप्तशस्त्रं च नामान्तरतः श्रेयांसं ॥ ६७ ॥ 'असंजलं' गाहा, असञ्ज्वलं जिनवृषभं पाठान्तरेण स्वयंजलं वदे अनन्तकं जिनममितज्ञानीनं सर्वज्ञमित्यर्थः, नामान्तरेणाय सिंहसेन इति,उपशान्तं च उपशान्तसंज्ञं धृतरजसं वन्दे खलु गुप्तिसेनं च ॥६८॥'अइपासं' गाहा, अतिपार्श्वं च सुपार्श्वं देवेश्वरवन्दितं च मरुदेवं निर्वाणगतं च घर-घरसंज्ञं प्रक्षीणदुःखं श्यामकोष्ठं च ॥ ६९ ॥ जिय' गाहा जितरागमग्निसेनं महासेनमपरनामकं वन्दे क्षीणरजसमग्निपुत्रं च व्यवकृष्टप्रेमद्वेषं च वारिषेणं गतं सिद्धिमिति, स्थानान्तरे किञ्चिदन्यथाप्यानुपूर्वी नाम्नामुपलभ्यते ॥ ७० ॥ महापद्मादयो विजयान्ताश्चतुर्विंशतिः' ॥ ७५ ॥ एवमिदं सर्वं सुगमं ग्रन्थसमाप्तिं यावत्, नवरं 'आयाए'त्ति बलदेवादेरायाता देवलोकादेश्च्युतस्य मनुष्येभूत्वाद् सिद्धिश्च यथा रामस्येति, एवं 'दोसुवि'त्ति भरतैरावतयोरागमिष्यन्तो वासुदेवादयो भणितव्याः । इत्थे समनेकधार्थानुपदर्श्याधिकृतग्रन्थस्य यथार्थान्यभिधानानि दर्शयितुमाह— इत्येतदधिकृतशास्त्रमेवमनेनाभिधानप्रकारेणाऽऽख्यायते-अभिधीयते, तद्यथा—कुलकरवंशस्य-तत्प्रवाहस्य प्रतिपादकत्वात् कुलकरवंश इति च, इतिरुपदर्शने चशब्दः समुच्चये, एवं तित्थगरवंसेइ यावि यथा देशेन कुलकरवंशप्रतिपादकत्वात् कुलकरवंश इत्येतदाख्यायते एवं देशतस्तीर्थकरवंशप्रतिपादकत्वात् तीर्थकरवंश इति च आख्यायते एतदिति, एवं चक्रवर्तिवंश इति च तत्प्रतिपादकत्वात् दशारवंश इति च गणधरवंश इति च गणधरव्यतिरिक्ता

शेषा जिनशिष्या ऋषयस्तद्वंशप्रतिपादकत्वादृषिवंश इति च तत्प्रतिपादनं चात्र पर्युषणाकल्पस्य ऋषिवंशपर्यवसानस्य समवसरण-
प्रक्रमेण भणितत्वादत एव यतिवंशो मुनिवंशश्चैतदुच्यते, यतिमुनिशब्दयोः ऋषिपर्यायत्वात्, तथा श्रुतमिति चैतदाख्यायते,
परोक्षतया त्रैकालिकार्थावबोधनसहत्वादस्य, तथा 'श्रुताङ्गमिति वा' श्रुतस्य–प्रवचनस्य पुरुषरूपस्याङ्ग–अवयव इतिकृत्वा, तथा
'श्रुतसमास इति वा, समस्तसूत्रार्थानामिह संक्षेपेणाभिधानात् 'श्रुतस्कन्ध इति वा,' श्रुतसमुदायरूपत्वादस्य 'समाए व' त्ति समवाय
इति वा समस्तानां जीवानां–जीवादिपदार्थानामभिधेयतयेह समवायनात् मीलनादित्यर्थः, तथा एकादिसंख्याप्रधानतया पदार्थप्रति-
पादनपरत्वादस्य संख्येति व्याख्यायते, तथा समस्तं–परिपूर्णं तदेतदङ्गमाख्यातं–भगवता, नेह श्रुतस्कन्धद्वयादिखण्डनेनाचारादिव-
दङ्गतेति भावः, तथा 'अज्झयणंति' त्ति समस्तमेतदध्ययनमित्याख्यातं नेहोद्देशकादिखण्डनाऽस्ति शस्त्रपरिज्ञादिष्विवेति भावः, इति-
शब्दः समाप्तौ 'ब्रवीमी' ति किल सुधर्म्मस्वामी जम्बूस्वामिनं प्रत्याह स, ब्रवीमि–प्रतिपादयामि, एतत् श्रीमन्महावीरवर्द्धमानस्वामिनः
समीपे यदवधारितमित्यनेन गुरुपारम्पर्यमर्थस्य प्रतिपादितं भवति, एवं च शिष्यस्य ग्रन्थे गौरवबुद्धिरुपजनिता भवति, आत्मनश्च
गुरुषु बहुमानो दर्शित औद्धत्यं च परिहृतं, अयमेवार्थः शिष्यस्य सम्पादितो भवति मुमुक्षूणां चायं मार्ग इत्यावेदितमिति समवायाख्यं
चतुर्थमङ्गं वृत्तितः समाप्तम् ॥

नमः श्रीवीराय प्रवरवरपार्श्वाय च नमो, नमः श्री वाग्देव्यै वरकविसभाया अपि नमः ॥
नमः श्रीसङ्घाय स्फुटगुणगुरुभ्योऽपि च नमो, नमः सर्वस्मै च प्रकृतविधिसाहाय्यककृते ॥ १ ॥
यस्य ग्रन्थवरस्य वाक्यजलधेर्लक्षं सहस्राणि च, चत्वारिंशदहो चतुर्भिरधिका मानं पदानामभूत् ॥
तस्योच्चैश्चुलकाकृतिं निदधतः कालादिदोषात्तथा, दुर्लेखात् खिलतां गतस्य कुधियः कुर्वन्तु किं मादृशा. १ ॥२॥

स्वं कष्टेऽप्रतिनिधाय कष्टमधिकं मा मेऽन्यदा जायतां, व्याख्यानेऽस्य तथा विशेषतुमनसामल्पश्रुतानाममुम्
इत्यालोच्यपरा तथापि किमपि प्रोक्तं मया तत्र च, दुर्व्याख्यानविशोधनं विदधतु प्राज्ञाः परार्थोद्यताः ॥ ३ ॥
इह वचसि विरोधो नास्ति सर्वज्ञवाक्यात्, क्वचन तदपभासो यः स मान्यान्नुबुद्धेः ।
परगुरुविरहाद्वाऽतीतकाले मुनीशैर्गणधरवचनानां श्रस्तसद्भावनाद्वा ॥ ४ ॥
व्याख्यानं यदपीदं प्रवरकविवराःपारतंत्र्येण दृष्टं (दृब्धं) सम्यग्भाव्योऽस्मिंस्तथापि क्वचिदपि मनसो मोहतोऽर्थादिभेदः ।
किन्तु श्रीसद्गुरूणामनुचरणविधेर्भाववृत्तेश्च दोषो, मा मेऽभूदल्पकोऽपि प्रशमपरमना अस्तु देवी श्रुतस्य ॥ ५ ॥
निःसम्बन्धविहारहारिचरितान् श्री वर्द्धमानाभिधान्, सूरीन् ध्यातवतोऽतितीव्रतपसो ग्रन्थप्रणीतिप्रभोः ॥
श्रीमत्सूरिजिनेश्वरस्य जयिनो दर्प्पीयसां वाग्मिनां, तद्बन्धोरपि बुद्धिसागर इति ख्यातस्य सूरेर्भुवि ॥ ६ ॥
शिष्येणाभयदेवाख्यसूरिणा विवृतिः कृता ॥ श्रीमतः समवायाख्यतुर्याङ्गस्य समासतः ॥ ७ ॥
एकादशसु शतेष्वथ विंशत्यधिकेषु विक्रमसमानाम् । अणहिलपाटकनगरे रचिता समवायटीकेयम् ॥ ८ ॥
प्रत्यक्षरं निरूप्यास्याः, ग्रन्थमानं विनिश्चितम् । त्रीणि श्लोकसहस्राणि, पादन्यूना च षट्शती ॥ ९ ॥
सूत्रसङ्ख्या श्लोक १६६७ वृत्ति ३५७५ उभयोर्मीलनेन ५२४२ ॥

इति चन्द्रकुलाम्बरनभोमणिश्रीमदभयदेवाचार्यदृब्धा समवायाङ्गसूत्रवृत्तिः समाप्ता ॥